प्रदेशे भूभागोपि सम्पादित आसीत् । एवमसौ सरदाररामरावो वझे, जोशी, दामले कुटुम्बै सह खृष्टाब्दे १७९० बान्दानगरे आगत्य न्यवसत् । तत्र स खृष्टाब्दे १८०० पर्यन्तमासीत् । उपरते अमात्ये नानाफडनवीसे अलीबहाद्दुरो नबाबश्च आयव्ययगणनात्मकवृत्त पेशवेप्रतिनिधये दातु नोपचक्रमे । एव द्वित्रिवर्षाणा आयव्ययात्मकमितिवृत्तमप्राप्य सरदाररामचन्द्रस्तत्सूचयितु पुण्यपत्तन गत । तस्य नवाबस्य प्रेष्यमाणानायव्ययानीक्षितु तथा तत्परिगणन कर्तु रामचन्द्रसूनु अस्य कवेरग्रजो गणेशरामचन्द्र काळे इत्याख्य श्रीमता नियुक्त. । गणेशोपि प्रखरतैलबुद्धि प्रत्युत्पन्नमति नवाबस्य परिगणनपत्र समीचीन कृत्वा समग्र वृत्त यथाक्रम पेशवेश्रीमते निवेदितवान् । पञ्चदशवर्षदेशीयो गणेशो विलक्षणबुद्धिमत्तया पूण्यपत्तने प्रख्याति गत । अस्य कुशाग्रबुद्धिं दृष्ट्वाऽसौ श्रीमताऽमृतरावेण निजार्थव्यवस्थाकार्ये निजसन्निधौ चित्रकूटे उपामात्यपदे नियुक्त आसीत् । रामचन्द्रस्य त्रय. पुत्रा बभूवु । प्रथम काशीनाथो, द्वितीयो गणेशस्तृतीयो दुण्ढिराज इति । तत्राग्रज काशीनाथो स्वभूभागकार्यकर्तु जालोननगर जगाम । दुण्ढिस्तु चित्रकूटे तैलङ्गाख्य अनन्तरामशास्त्रिसमीपे व्याकरणवेदान्तसाहित्यादिशास्त्राध्ययन चकार, पश्चात्पारङ्गतस्याऽस्य कवे पाण्डित्यमनुलक्ष्याऽसौ कविरपि तत्रत्यपण्डिसभाया प्रमुखो नियुक्त श्रीमताऽमृतरावेण । एव रीत्या अस्मत्पूर्वजाना निवसति चित्रकूटे अभूत् । जालोनराज्यमौरसपुत्राभावादाङ्ग्लै परिहृत तदा काशीनाथो गुलसरायमागत्य तत्रैव न्यवसत् । गणेशवशजस्तु बान्दाग्रामे न्युवास ।

अस्य कवे काव्यग्रन्थनिर्मितिकाल १८८८ वैक्रम सवत्सरत १९१४ पर्यन्त सभवति ।

वैक्रमे १९१३ तमे वर्षे अनेन 'उदश्विद्रामायणाख्यान' लिखितम् । तस्य रचनाकाल कविना समाप्तौ दत्त परिसमाप्तिश्लोकेन सह । तद्यथा--

**"प्रेरितो रामचन्द्रेण मयूराभिजनेन य. ।**
**व्यतनोद्रामतनयो रामकीर्त्ति यथामति" ॥७४॥**

इति श्रीमद्रामसूनुविद्वन्मौलिभूषणदुण्ढिराजशर्मकृतमुदश्विद्रामायण समाप्तिम गमत् ॥ शके १७७८ सवत् १९१३ गतेषु फाल्गुन व १० मन्देऽर्धरात्रे ॥ इति ॥"

अत परमनेन "उत्तरापरिणयम्" नामाख्यान लिखितम् । तच्चापूर्णमेव । असौ हरिकीर्तनकारिणा प्रयोगार्थ कथाख्यानानि विरचितवान् इति पितुर्मुखत श्रुतमस्माभि· । अस्मद्ग्रन्थसङ्ग्रहे उदश्विद्रामायण तथा उत्तरापरिणयनामानमाख्यान द्वय प्राप्तमस्माभिः । इदमाख्यानद्वय तेषामेव भगवत्कीर्तनकारिणामुपयोगार्थ दृश्यते । यतो द्वयमाख्यान सस्कृतमराठीहिन्दीभाषापद्येषु लिखितम् । तत्राद्ये रामायणा-

ख्याने अर्धानि पद्यानि सस्कृतभाषाया तथान्यान्यर्धानि मराठीहिन्दीभाषाया रचितानि सन्ति तस्मात् तस्य नामकरणम् 'उदश्विद्रामायणम्' इति कृत कविना, यतोर्ध-भागेन जलेन सञ्जात तक्रमुदश्विदिति कीर्तितम्। 'तक्र ह्युदश्वि मथित पादाम्ब्वर्धाम्बु निर्जलमित्यमरवचनात्। कविरपि तस्याख्यानस्य परिसमाप्तौ एव भणति

**" इत्थ रामयश समाकृतिरिय ढुण्ढेर्जने राजता**
**या भाषोदकवर्धितात्पमतित ख्याता ह्युदश्वित्पदा ॥**
**सस्कृत्याधगगोविकाररुचिरा छन्दोभिरास्फोरिता**
**स्याद्रामायणकीर्त्तिभोजनविधावास्वादने सा पटु ॥ " इति ॥**

अन्यदुत्तरापरिणयमपि सस्कृतमराठीभाषाया मिश्रपद्यानुबन्धेन विरचितमनेन, किन्तु तच्चापूर्णमेव ।

"भटताण्डववल्लकीनामक" त्रयोविंशतिश्लोकात्मक काव्य कविना विरचित मासीत्। तदपूर्ण प्रतिभाति। अस्मिन् काव्ये मुगलेश्वरसेनानीबगशग्राहग्रस्तेन तत्रत्येन बुन्देलखण्डाधिपेन राज्ञा छत्रसालेन स्वरक्षणार्थमाहूतो गजेन्द्रेण गरुडपतिरिव भटकुलावतसो बाजीराव प्रथम कथ बगशपराभव कृतवानिति कथा वर्णिता। तामपि काश्चिदुदाहरामि

**राज्ञि स्नान प्रकुर्वाणो प्रवृत्ति कथिता जनै ।**
**नीरपात्र परित्यज्य वीर. पत्रमलोचयत ॥३॥**

तत किञ्चिद्गद्यमपि —

**तदनु गीर्वाणगणेशपराक्रमस्य गभीरा गिरमादाय गते तस्मिन्सदेशहरे दूते नरेशोपि निशीथे तेजसा जितभास्कर निजभ्रातर (चिमाजीरावमितिभाव) निखिलराज्यभारपरिमातरमनुनीय, तेन सममषडक्षीण विधाय कुवलयदलेक्षणो धृतधौतपरिधान कृतस्वस्त्ययन प्रभाते धनदककुभ प्रतस्थे ॥**

**" अश्वेन तुच्छीकृतमातरिश्वना जगाम कुन्त परिगृह्य पाणौ**
**गज शकुन्तेशरथो यथागमत् तथा प्रजेशोप्यथ छत्रसालम् ॥ "**

तत. कैश्चित् श्लोकै' तस्य सैन्यगमनवर्णन कृत्वा । तत

**" बभञ्ज निशि बङ्गसानथ बबन्ध कांश्चिज्जनान् ।**
**स्वबन्धुजनरक्षणो विदधत कबन्धानसीन् ।**
**पुना रणमखेषु तानपि यमक्षय प्राहिणो-**
**च्चकार रिपुकण्डन दिवसमण्डन लक्षयन् ॥२०॥ "**

इदमाख्यानमपूर्णं प्रतिभाति । ऐतिहासिक काव्य मत्वा तस्य पौत्रेण काशीनाथ शर्मणा पूर्णं कृतमस्ति ।

अस्य प्रमुखकाव्यकृतिस्तु भागवतव्यञ्जनमेव । दशमस्कन्धव्यञ्जनमनेन पूर्वमेव रचितम् । तदनन्तरमन्यस्कन्धव्यञ्जनानि विरचितानि । यथा कवि प्रथम व्यञ्जनस्यारभे एव भणति ।

**कथावैशिष्टचलोभेन दशम व्यञ्जन पुरा ।**
**कृत्वापुनरतृप्तेन तन्यते भगवत्तनु ॥ इति ॥**

अस्य व्यञ्जनग्रन्थस्य लेखनकालो ममपितुर्जन्मन पूर्वं सभवति । पितुर्जन्म वत्सरो (विक्रमस्य) १९०८ । यदा १९१४-१५ तमे विक्रमाब्दे (सन १८५७) स्वातन्त्र्ययुद्धमिति ख्यात सैन्यविप्लवो जातस्तदास्माक चित्रकूटस्य गृहम् आङ्ग्लैर्भस्मसात्कृतम् । अनेन विप्लवेन सह पेशवेकुलाना राज्य विनष्ट, तदगभूता अस्य जीविकापि नष्टा । तदनन्तर जीविकार्थमश्वारूढेनानेन कस्यापि विप्लवकारिण शस्त्राघात पृष्ठभागेऽनुभूत । पार्श्वभागे परिभ्रम्यानेन द्वितीयमाघात कर्तुं प्रवृत्तस्या न्यस्यासि द्वाभ्या हस्ताभ्यामाकृष्य बलात् परिहृत, किन्तु तस्य दशागुल्य छिन्ना बभूवु । मूर्छितश्चासौ तस्यैव शिरोवाससा बद्ध अश्वभागे कस्मिश्चित् गर्ते निक्षिप्तस्तैर्दुरात्मभि । द्वित्रदिनपर्यन्त तत्रैव गर्ते पतित आसीत् । विपन्नावस्था प्राप्तोसौ निजकष्टनिवारणाय श्रीरामाष्टक विरच्य तत्पारायण कर्तुमारेभे । प्रसन्न खलु भगवान् रामचन्द्र तस्यैक शिष्य तत्पथागन्तु प्रेरयति स्म । भगवच्छब्देनाकृष्ट स शिष्य तत्र गत्वा त तस्य ज्येष्ठभ्रातृसमीप गुलसरायग्राम निनाय । रामाष्टकस्य अष्टमे श्लोकेऽसौ निजस्थिति वर्णयति ।

**निष्क्रियस्यापि मे छिन्नपाणे पुनस्त्यक्तलोकाध्वनोऽहकृतौ मज्जत ।**
**ये गती पारदे नौरिवाब्धौ भवे राम ते पादकञ्जे सदाऽह भजे ॥**

इत्यस्मादुत्तरकालोऽनेन इतस्तत परिभ्रमता पाथरकच्छारग्रामे तत्राविपाश्रये व्यतीत कृत । इत पर लेखनकार्य विराममेव गतम् । व्यञ्जनरचनानन्तर काव्य-रचना स नाकरोत् इति भाति । यतोऽस्य मम पितु पूर्वसप्तापत्यस्य विशेषेण तेष्वाद्यस्य विवाहितस्य रामचन्द्रस्य पाण्डित्ये प्रतिढुण्ढिराजस्य निधनात्काव्यकरणा न्निवारितोऽसौ बान्धवै इत्यपि श्रुतमस्माभि । पश्चादङगुल्यभावात् स्फुटलेखनमपि अशक्य सजातम् । व्यञ्जनादितरा कविरचना निम्नानुगा—

**१ विद्वद्ग्रैवेयकम्**—(स्फुटश्लोक सग्रह ) । तत्र शृङ्गारप्रकरणमेकपञ्चाशत्-श्लोकात्मकम् । सुजनस्तुति. ( पञ्चश्लोकात्मिका ) । राजवर्णन पञ्चदशश्लोकात्मकम् ) ।

दुर्जननिन्दा ( पञ्चश्लोकात्मिकी ) । स्फुटश्लोका षट् । एव द्व्यशीतितमश्लोका । तत्र केषामप्युदाहरणम् । यथा

**शृङ्गार हैमवत्या प्रथयति धनुषा वीरमास्येन हास्य**
**बीभत्स स्रक्कपालैर्भयमहिपतिना भ्रूविजृम्भेण रौद्रम ।।**
**कारुण्य रुष्टपत्न्याद्भुतमरुणविधूषर्बुधर्नेत्रभाभि**
**शान्त चित्तेन भूयात् स नवरसमद शङ्कर शमणे व ।।**

**२ उदश्वित् रामायणम्**— (आख्यानम्)

**३ भटताण्डववल्लकी**— (अपूर्णकाव्यम् )

**४ उत्तरापरिणयम्**— ( आख्यानमिदमपूर्णम् ) अस्मिन् काव्येऽस्य गद्यरचनाशैली दृष्टिपथमुपयाति । तद्यथा— तत श्रीकृष्णोऽपि सुदेष्णाजानिनुन्न-सायुगीनधुरीणाधोरणन्युब्जीकृतस्रवन्मदकणवारणाधिरूढ साकमनुजया विजयजायया शत्रनभिन्नतमन्युनाभिमन्युना पुरो नददानकदुन्दुभिनानकदुन्दुभिना बन्दीजनेन स्तूयमान सशिष्यैर्महर्षिभिराशिष्यमाण समीरजातपरिहृतशल्य सूपशल्य धृतमत्स्यरूपोऽपि मत्स्यपुरमाजगाम ।

**५ श्रीकृष्णाष्टकम्**—अनुपलब्धम् । केवल पितृमुखत श्रुतम् ।

**६ गगाष्टकम्**—अस्य पञ्चष. श्लोका विद्वद्ग्रैवेयके सङ्गृहीता । इतरे अनुपलब्धा ।

**७ रामाष्टकम्**— नित्यमेव पतठ्येऽस्माभि । गतरामनवमीपुण्यदिनमनु-लक्ष्येऽद रामाष्टक नागपुरस्थसस्कृतभवितव्यमिति साप्ताहिके प्रकाशित-मासीत् ।

**८ शब्दरूपादर्श**—शब्दरूपावलिरिय बाल्ये सर्वै पठितास्माभि । इय पाणिनीयमतानुसारेण, अकारादिक्रमेणाऽजन्तहल्न्तशब्दान् पुस्त्रीनपुसक लिङ्गभेदेन पृथक्त्वेन रचितत्वात् क्रमभङ्गाभाववैशिष्ट्य दर्शयन्ती बालाना कण्ठस्थीकरणे सुगमा ।

९ स्फुटलेखनमपि यत्रतत्र पत्रगत लभ्यते । यथा व्याख्यातमिद "पङ्क्तिद्वय पुराणोक्तमलग्नमिव कूटवत् । तस्य व्याख्या गुरून्नत्वा दुण्ढि कुर्वे बुधा मुदे ।।"

**"यो न बीज विना बीजमबीज बीजभावित ।**
**स विष्णुर्भवबीज मे शान्तविद्यासिना छवु ।।"**

योनबीजमिति ॥ बीज रेतसि सत्वेऽग्नौ हेतावङ्कुरकारणे । आधानेपीति विश्व । 'य बीज न' इति पदत्रयम् । य बुद्धिस्थ बीजम् । न इवार्थे । हेतुरिव । हेतुर्लोके कार्यस्य प्रजनक कार्यात् पृथग्भवति । अय तु कार्य जगत् तत्कारण माया तस्या अपि हेतु कार्यरूपश्च । अतो हेतु रिवहेतु विलक्षण इत्यर्थ । यद्वा न बीजम् अबीज, न अबीजम् अनबीजम् । नञ्द्वयस्य प्रकृतदा-र्ढ्यावबोधकत्वात् दृढ बीजमिति यावत् । लोके अङ्कुरकारणम् अङ्कुरोत्पत्यनन्तर नश्यति । अय तु तथा न, अतो दृढ बीजम् । अथवा न बीज रेतोरूपेण न, किन्त्वीक्षणेनैव । पुन विना बीजमबीजम्, य आधानमन्तरा जगदङ्कुरकारण विवर्ताधिष्ठानत्वात् । पुनर्बीजभावित, बीजेन मायया भावित वर्धित पोषित विषयीकृत इत्यर्थ । यद्वा बीजस्य भाव फलत्वेन सजातोऽस्येति बीजभावित, बीज प्राप्त भूप्राप्तौ । स एव भूतो विष्णुर्व्यापक भवबीज भवो जन्म तस्य बीजम् अज्ञान मे मम अज्ञानावच्छिन्नजीवस्य शा तमुपशम विद्या ज्ञानम् । तद्युक्ता विद्यैवासि खड्ग तेन द्यतु खण्डयतु । अवतु इति पाठे स एवार्थ । रक्षणाद्यर्थान्तरगतहिसार्थ-स्यावते इति सर्वमनवद्यम् ।

अस्य प्रमुखकृतिस्तु श्रीमद्भागवतव्यञ्जनमेव । व्यञ्जनमिति नामकरणस्य कारण स्वय कविना ग्र थसमाप्तौ प्रदर्शितम् । तद्यथा

**" श्रीशुकाभ्युदितभागवताख्य पक्वमन्नमति मिष्टरसाढ्यम् ।**
**स्वाददा तु रसिकस्य जिघृक्षोर्व्यञ्जनाकृतिरिय कृतिरास्ताम ॥ "**

श्रीशुकदेवमुनिनाऽऽख्यातमिद भागवतनाम गन्यामृत पाचितमन्नमिवातिमिष्टम् अस्तिस्वादुरसै परिपूर्णमस्ति । तद्रसास्वादितुमिच्छोरिय मम काव्यरूपाकृतिर्व्यञ्ज नाकृतिरूपेण भवतु । यथा सुमधुरसेवनेन जडत्वङ्गताया जिह्वाया पुन पुना रुच्युत्पा दनाय कट्वाम्लादिरसपूर्णव्यञ्जनस्यावश्यकता भवति तद्वत् श्रीशुकाभ्युदितभागवतस्य पुन पुन सुमधुररससेवनेन मानसीरसना तु जडत्वङ्गता परञ्च सेवनेच्छात्वतृप्ता, अतस्तज्जडत्वविनाशाय ममेय काव्यकृति कट्वम्लादिरसनिर्मितव्यञ्जनवत् स्वाददा भवतु ।

## ग्रन्थव्याख्याकारपरिचय —

प्रस्तुतग्रन्थ॰ मूलरूपेणास्मद्ग्रन्थालये आसीत् । अस्य ग्रन्थस्य व्याख्या तथा प्रकाशन कर्तुमस्माक महती मनीषा बाल्यत एव सजाता । मम गोविन्दशर्मण पिता श्रीजयकृष्णशास्त्री स्वपितुरष्टममपत्यम् । कवेर्निधनानन्तर तस्य ज्येष्ठ पुत्रो श्रीजयकृष्णशास्त्री निजलघुभ्रात्रोर्नारायणभालचन्द्रयोर्भरणपोषण प्राप्तो जीविकार्थे

ग्वाल्हेरसस्थान गत सन् तत्र कस्यचन विदुष समागम प्राप। स विद्वान् छत्रपुरसमीपस्थ नौगावराजकुमारमहाविद्यालये प्राध्यापक सन् कस्मैचित्कालाय निवृत्तिम् अभ्यर्थितवान्। तेन विदुषाऽनुनीतोऽसौराजकुमारकालेजे तस्यैव पदे अध्याप नार्थ नियुक्तोऽभूत्। एव तत्र छत्रपुरसस्थानाधिपतेर्विश्वनाथसिंहस्य छात्रस्य मम पित्रा सह समागमोऽभवत्। असौ शिष्य तस्याध्यापनेन एव प्रभावितोऽभवत् यत् स त निजराजधान्यामाश्रयार्थ प्रेषितवान्। ईदृक् प्रकारेण श्रीजयकृष्णशास्त्री बुन्देल खण्डान्तर्गत छत्रपुरसस्थानाधिपते राजर्षि सर विश्वनाथसिंहजूदेव वर्मण सभापण्डित आसीत्। एव सोऽधिपतिर्जयकृष्णशास्त्रिणा बाल्यत एवाध्यापित। तेनाधिपतिना सस्कृताधिष्ठितन्यायदर्शनवेदान्तादिविविधशास्त्राणामवलोकनमपि मत्पितु सकाशे एव कृतम्। पुनश्च व्रतबन्धे गायत्रीमन्त्रोपदेशमपि अस्मादेव प्राप्तवान्। अत गुरुशिष्यस्य ऋणानुबन्धत्वात् राज्ञि मम पितुर्महती गुरुता तथा विशेषादरश्चावर्तत, यस्तेनाऽऽजीवनम् अमन्यत। कालान्तरेण श्रीनारायणशास्त्री अपि तस्य राज्ञ सभापण्डितोऽभवत्। तृतीयो श्रीभालचन्द्रोपि छत्रपुराङ्ग्लपाठशालायामध्यापक आसीत्। ज्येष्ठस्य श्रीजयकृष्णशास्त्रिणश्चत्वार पुत्रा आसन्। श्रीभालचन्द्रस्यापि तावत्सङ्ख्याका पुत्रा बभूवु। नारायणशास्त्रिणा दारपरिग्रहो न कृत, वेदान्ताध्ययनपरिशीलननिष्ठत्वात्। श्रीजयकृष्णशास्त्री स्वपितृसदृश पण्डितो राजनीतिज्ञ आसीत्। अत एव राजकार्ये तथाध्यापने प्रसक्तत्वात्, तथा च प्राचीनशिलालेखाध्ययनाद्यन्यतमकार्यव्यापृततया, तथा स्वस्वामिन श्रीविश्वनाथसिंहजूदेवस्य वैष्णवमतानुवर्तित्वात् तदीयाचार्याणा हस्तलिखितग्रन्थाना परिशीलन कृत्वा, तद्वाचनश्रावणकर्मप्रसक्ततया, अस्य ग्रन्थस्य टीका कर्तु तथा प्रकाशयितु नावसर लब्धवान्। खजुराहाग्रामस्थशिलालेखाना तथान्येषामध्ययन कृत्वा अनेन खर्जूरवाहकनामक पुस्तक लिखितम्। तच्च मम द्वितीयाग्रजेन श्रीदामोदरशर्मणा हिन्दी भाषायामनुवाद कृत्वा प्रकाशितम्। चतुर्णा भ्रातॄणा मध्ये कनिष्ठोऽहम्। मम पितृव्यज काशीनाथशर्मा स्वभ्रातृषु ज्येष्ठ। मम सस्कृतस्याध्ययन पितु सकाशे एव जातम्। तत्तु मम षोडशवर्षवयोमानपर्यन्तम्। तदवधिपर्यन्तमध्ययनस्य पूर्वपीठिकानुसारेण व्याकरणादि ग्रन्थानामध्यापन पित्रैव सम्पादितम्। यतश्चतुर्षु पुत्रेषु कश्चन वशपरम्परागतसस्कृताध्ययनस्य प्रथामनुसरेदित्याभिलाषेणैव। किन्तु समयानुवर्ती मे तात कालमानेनाङ्ग्ल भाषाया वर्धिष्णुप्रभाव ज्ञात्वा तद्भाषाद्वारेण ज्ञान सपादयितु प्रायतत। अत निज दैशिक नियुज्य एक वर्ष गृहे एवाध्यापन सपादयित्वा, तदनन्तर छत्रपुरस्थाङ्ग्लविद्यालये मे प्रवेश कारितवान्। एव चतुर्षु वर्षेषु मया मेट्रिक् परीक्षा समुत्तीर्णा

अर्थात् १९२१ तमे खृष्टाब्दे । तस्या प्रथमाङ्कसमुत्तीर्णत्वात् प्रतिष्ठामुद्रापि (Medal) मया सम्पादिता । पुनरग्रिमशिक्षणाय छात्रवृत्तिरपि प्राप्ता । किन्तु सस्कृताध्ययन परिशील्न च समाप्तिमगात् । तत खृष्टाब्दे १९२१ मध्ये महाविद्यालय त्यजतेति महात्मागाधीकथनानुसारेण विद्यालय परित्यज्यैकवर्षपर्यन्त गृहे एवातिष्ठम् । तस्या निष्कर्मवेलया कालयापनाय पितु समीपे वैद्यकग्रन्थाना पठनमारब्धवान् । तस्मादुत्स्फूर्तोऽह कालेजशिक्षणमग्रे नानुसरन्नाड्ग्लवैद्यकशिक्षणाय नागपुरमेत्य खृष्टाब्दे १९२६ तमे डॉक्टरोऽभवम् । तदग्रे शासनसेवाया नियुक्तो १९५७ पर्यन्त यत्रतत्र समस्तमध्यप्रदेशविदर्भेषु स्थानान्तरेण परिभ्रमन् पुन सस्कृतग्रन्थाना परिशील्नायावसर न प्राप्तवान् । खृष्टाब्दे १९५७ मध्ये यदा सेवानिवृत्तोऽभव तदा इम मम पूर्वजकृत ग्रन्थ स्मृत्वा छत्रपुर गत्वा त ग्रन्थमिह नागपुरमानयम्, यतो मया नागपुरे एव गृह निर्माय वसति कृता । किन्तु एतावता द्राघीयसा कालेन यत्पूर्व बालवयसि सस्कृताध्यन कृत तत्सर्व विस्मृतमिवानुभूत मया अनभ्यासात्, किन्तु ग्रन्थस्य व्याख्या तु अवश्यमेव करणीया, सापि पुनस्तस्यैव कवेरभिजनेन इति मे निश्चिता धारणा । अतो व्याकरणपारायण तथान्यग्रन्थपरिशील्न कर्तु समारब्धवान् । एव दृढसङ्कल्प निश्चितफलावाप्तये सङ्कुचितोपि पितृचरणौ मनस्याधिष्ठाय अस्य काव्यस्य व्याख्यालेखनमारब्धवान् । अस्मिन्नेवसमये वर्धानगर गतो ममपितृव्यपुत्रो मा द्रष्टुकाम नागपुरमागत । इदमारब्ध कार्यमपि काशीनाथशर्मणे भ्रात्रेपि कथितम् । असौ बन्धुरपि विद्वान् गृहपरिपाट्यनुसारेण बाल्यकाले सस्कृताध्ययनम् अस्मत् पितृव्यस्य नारायणशास्त्रिण समीपे कृतवान् । मम त्रिभिरग्रजैर्भ्रातृभि सममयमपि दूरदृष्टिना पित्रा कालेजाड्ग्लशिक्षणग्रहणाय राजस्थानान्तर्गत जयपुरनगर प्रेषित , यत्र विद्यादान नि शुल्कमासीत् । शिक्षकाध्यापकाना सञ्चयोपि प्रशसनीयोऽवर्तत । पुन परीक्षाफलक्रमाङ्कानुसारेण छात्रेभ्य वृत्तिरपि देयाऽऽसीत् । अतस्तेन तत्र 'मिडिल्' परीक्षात एम् ए परीक्षापर्यन्त छात्रवृत्ति सम्पादिता । तदनन्तर 'डॉक्टरेट' इति जर्मनीदेशस्थपदवी प्राप्त्यर्थमस्य निर्धारणमपि जातम्, परञ्च तस्मिन्नेव वर्षे प्रथममहायुद्धस्योग्ररूपेण भारतशासनछात्रवृत्ति स्थगिता । अतो द्रव्याभावादसौ एकवर्षपर्यन्त गृहे अतिष्ठत्, तदा स पितृव्य श्रीनारायणशास्त्रिणमवोचत् । भो गुरो ! ( अनेनैव नाम्ना सोऽस्माभि सर्वैरपि बन्धुभगिन्यादिभि सम्बोधित आसीत् ) यत् न पितामहकाव्य भवता भूरि भूरि प्रशस्त तद् दर्शयतु भवान् । तैरुक्त मद्दत्तपद्यस्यार्थं निरूपय

पश्चात् ग्रन्थ दर्शयामि । अर्थनिरूपणाय तेन दत्त श्लोको विद्वद्ग्रैवेयके ग्रथितोऽस्ति । तत् पद्यमीदृक्—

**य श्रूयते हली तो य च न वाचोवगाहन्ते ।**
**ग्रन्थाश्चयन्मया इह तमल जानीत विद्वास ॥**

पद्य गृहीत्वा कियत्कालानन्तर तेन कथितम् । अस्य श्लोकस्य द्वावर्थौ । एकोल् प्रत्याहारमपरश्च पतञ्जलिं मुनि वर्णयति । प्रसन्ना सन्तो गुरव स्वलिपिबद्ध व्यञ्जनपुस्तक तस्मै प्रतिलिपिकरणाय दत्तवन्त । तत्प्रतिलिपिस्तेन खृष्टाब्दे १९१८ द्वितीयमासे पूर्णता नीता तत्पश्चादसौ भिन्नभिन्नराज्येषु शासकीयसेवासक्तो ग्रन्थस्यानुशीलनायावसर न प्राप्तवान् । खृष्टाब्दे १९५० तमे सेवानिवृत्तो जात । तदा अस्य ग्रन्थस्यानुशीलनमपि प्रारेभे । सेवाकाले स्वकार्यमाङ्ग्लभाषाया प्रकुर्वता तेन टङ्कलेखनसरणि स्वीकृता विलम्बपरिहाराय । परञ्च टङ्कलेखनस्य दोष यो केषाञ्चित् विषये हस्तस्य कम्पवाते परिणमति सोऽनेनाऽग्रे अनुभूत । तस्मात् लेखनकार्य दुष्करमभूत् । पर पत्रादिलेखनकार्यम् अपरिहार्यतया वामहस्तेन लेखनाभ्यास कृतवान् येन दैनंदिन प्रासंगादिक च लेखन कथमपि सुकर जातम् । सेवानिवृत्त्यनन्तरम् अनेन मध्यप्रान्तेषु बीनानगरसमीपे आगासोदखेटे स्ववसति कृता । यदाऽसौ १९५८ तमे वर्षे मा द्रष्टुकाम नागपुरमागत तदाऽस्यग्रन्थस्य व्याख्यालेखन मनीषा मया निवेदिता । तेन व्याख्या करणाय न केवल प्रोत्साहितोऽह पर सहायतादानमपि प्रतिश्रुतम् । एवमावा परस्परेण प्रोत्साहितौ सतत प्रयतमानौ तातचरणाना कृपाकटाक्षात् इमा व्यञ्जनसुबोधिनी टीका मूलेन सह रसिकविद्वज्जनसम्मुखे स्थापयितु समर्थौ भवाव । सेय सन्ततपरिश्रमेण रचिता व्यञ्जनसुबोधिनी स्रक् तातचरणेषु मन्तर्पणाञ्जलिरूपेणोपतिष्ठताम् । अनेन कर्मणेन्दीवरदलश्यामो मन्दिरानन्दकन्दल कञ्जनयन काव्यस्यास्य नायक श्रीकृष्णो प्रीतो भवतु । इदानी गीर्वाणवाणीसरणिमभिजिगमिषूणा विद्यार्थिजनाना प्रथमत काव्याध्ययनपरिपाटीसाधन शब्दपदवाक्यवाक्यार्थज्ञान भवति । तदर्थमप्येतत्काव्य पूर्णतया योग्यम् । पुनश्चास्मिन् काव्ये यत्र तत्र या व्याकरणप्रयोगचमत्कृति काव्यात्मकतया कविना ग्रथिता साऽनुपमेयत्वात् निश्चयेन विद्वज्जनाना पण्डितानामपि मनोनुरागिणी भवेदिति विस्तरेण अलम् ।

## उपसहार

अयि सदया सहृदया काव्यरसमर्मज्ञा महानुभावा । इद कविवरेण रचित पद्यात्मक श्रीकृष्णचरित्र सटीकमुपहारी क्रियते । मुद्रणसाधनाभावात् प्राचीनकवीना

विदुषा च ग्रन्था न सरलतया प्राप्या । अय ग्रन्थोपि नष्ट एव अभविष्यद्यदि पितृव्य पादा श्रीनारायणशास्त्रिणोऽस्य प्रतिलिपि कृमिभक्षित जीर्णपुस्तकात् कवे स्वहस्तलिखित सङ्ग्रहान्नाकरिष्यन् । यथामति कवेर्भावमर्थं च प्रकटयितु प्रयत्न कृतोस्त्यावाभ्याम् । तस्मिन् विषये कियदस्माक साफल्यमिति निर्णेतु भवन्त एव समर्था । अथात्र मुद्रणानन्तरमपि ये दोषा दृष्टिपथमुपपगतास्ते यथामति शुद्धिपत्रे निदर्शिता तथाप्यत्र भवतो विद्वज्जनान् मानुषनिष्ठनैसर्गिकभ्रमप्रमाददोषाणा दुष्परिहरत्वात् यदशुद्ध भवेत् तत् क्षन्तव्य सूचनीय च येनाऽऽगामिमुद्रणे स्खलनदोषा दूरीक्रियेरन् इत्यभ्यर्थयावहे ।

नागपुरम्
दि २०-६-६५

काळे कुलोत्पन्नौ व्याख्याकारौ
**डॉ जयकृष्णतनूज गोविन्दशर्मा**
**भालचन्द्रतनूज काशीनाथशर्मा च**
एम् ए

## व्याख्याकारौ



डॉ गोविंद जयकृष्ण काळ



श्री काशीनाथ भालचंद्र काळ, एम ए

गोविन्दोऽह काशीनाथश्च बन्धुर्जातौ पौत्रो व्याकुलौ लोपभीत्या ।
काव्यस्यैतस्याद्दितायस्य नून शब्दार्थालङ्कारविभ्राजेतस्य ॥

## श्रीढुंढिनाकृत

# श्रीभागवतव्यंजनम्

## प्रथमोल्लासः

।। श्रीगणेशायनम ।। श्रीकृष्णायनम ।। श्रीगुरवेनम ।।

**अम्बा हासेऽतिशुक्लान्दशनवसनयोर्लोहिता केशपाशे-**
**कृष्णा वन्दे कुलेशा प्रकृतिविकृतिभि सप्तभि शृङगदम्भात् ।।**
**राजन्त या प्रपञ्च मुनिशिखरमधिष्ठाय शैल चकास्ति**
**ब्रह्माण्डाखण्डमूलप्रकृतिरविकृतिश्चेतनालिङिगताङगो ।।१।।**

**अन्वय**—या ब्रह्माडाखण्डमूलप्रकृति अविकृति चेतनालिङ्गिताङ्गी सप्तभि प्रकृतिविकृतिभि शृङ्गदम्भात् राजन्त प्रपञ्च मुनिशिखर शैलम् अधिष्ठाय चकास्ति, (ता) हासे अतिशुक्ला, दशनवसनयो लोहिता, केशपाशे कृष्णा कुलेशाम् अम्बा वन्दे ।।

**व्याख्या—अम्बामिति। या ब्रह्माण्डाखण्डमूलप्रकृति** ब्रह्माण्डस्य अखिलजगतोऽखण्डा भागरहिता । अनन्यत्वादपरकृतोत्सृजनसहायताराहित्यात् स्वयमेव मूलप्रकृतिरादिकारणम्। यया चराचरात्मक जगन्निर्मितमित्यर्थ । **अविकृति** या विकारेण रहिता, अविकृता, अजा इत्यर्थ । **चेतनालिङ्गिताङ्गी**—चेतनेन चैतन्येन पुरुषेण आलिङ्गितम् अङ्ग यस्या सा। पुरुषेण सह वर्तमाना आदिमाया इत्यर्थ । **सप्तभि** सप्तसख्याकै **प्रकृतिविकृतिभि**र्महदाद्यै सप्तभिराद्यनादिकारणैरिव **शृगदम्भात्** शिखरव्याजात्। **राजन्त** शोभमान, **प्रपच** विस्तृत महान्तमित्यर्थ **मुनिशिखर शैल** सप्तशृग नाम पर्वतम्। **अधिष्ठाय** अध्यास्य। **चकास्ति** सर्वोत्कृष्टत्वेन वर्तते शोभते इत्यर्थ । एतादृशी ता। **हासेऽतिशुक्ला** हास्ये अति शुभ्राम्। **दशनवसनयो**र्दन्तवस्त्रयो**र्लोहिता** रक्ताम्। **केशपाशे कृष्णाम्**

म नरन नमो णाम्नि नि यर्थ । **कुलेशा** वत्सगोत्रान्तर्गत–काळे–कुलोत्पन्नानाम् अस्माक कुलदेवताम् **अम्बा** मातर श्रीमद्योगेश्वरीम् । **वन्दे** नतोस्म्यहम् ।।

अस्या स्तुतौ कविना स्वेष्टदेवतास्तुतिव्याजेन समस्तजगत सर्गस्थितिविनाश रूपत्वाच्छोभमानस्य निस्सारत्व, तथा च स्वेष्टदेवताया जन्ममरणादिविकाररहित्यान्‍नाद्यत्वात्, परिपूर्णत्वात्, त्रिकालाबाधितत्वात्, सत्यज्ञानमनन्तस्वरूप प्रतिपादितम् । साख्यशास्त्रानुसारेणेद जगत् सप्तभि प्रकृतिविकृतिभिर्नाम महदाद्यै सप्तपदार्थैर्महदहकार–पञ्चत मात्राभिर्निर्मितमपि राजते स्वादिकारणसम्मिलितपदार्थाना पृथक् व दर्शयत्येव न त्वखण्डत्वम् एवमेवादि कारण सम्मिलितपदार्थाना पृथक्त्व शिखरमिषाददर्शयन्तमपि सप्तशृगिपर्वतरूप ससारमाश्रित्यापि सा सर्वोत्कृष्टतया वर्तमानत्वादात्मनोऽखण्डत्व प्रतिपादयतीति भाव ।।

इय स्वकुलस्वामि या नुति पुष्पमालार्पणमिषात् स्रग्धराछदसा कविना ग्रथिता । लक्षण तु म्रभ्नैर्याना त्रयेण त्रिमुनियतियुतास्रग्धराकीर्तितेयम् ।।१।।

**तत्तत्प्रारब्धदूरीकृतभविकचयाञ्छुण्डयाकृष्य दिग्भ्यो-**
**भक्तान्प्रत्यर्पयन्त श्रवणपवनतस्तासु रिक्तासु चैषाम् ।**
**विघ्नान्प्रस्थापयन्त पदविनतनृणा योगभद्राख्यकृत्य-**
**स्वाङ्गेनैवाचरन्त शरणमिभमुख त दयालु प्रपद्ये ।।२।।**

**अन्वय**—तत्तत्प्रारब्धदूरीकृतभविकचयान् दिग्भ्य शुण्डया आकृष्य भक्तान् प्रत्यर्पयन्त, तासु रिक्तासु श्रवणपवनत एषा विघ्नान् प्रस्थापयन्त, पदविनतनृणा योगभद्राख्यकृत्य स्वाङ्गेन एव आचरन्त त शरण दयालुम् इभमुख प्रपद्ये ।।

**व्याख्या—तत्तदिति** ।। तेषा तेषा भक्ताना प्रारब्धेन दैवेन दूरीकृता निष्कासिता भविकाना कुशलाना चया समूहा तान् । **तत्तत्प्रारब्धदूरीकृतभविकचयान्** । 'भावुक भविक भव्य कुशल क्षेममस्त्रियाम्' इत्यमर । तथा विविधभक्ताना दैवेन दूरीकृतकल्याणसमूहान् । **दिग्भ्य शुडया आकृष्य**—स्वशुडादण्डेन दिगन्तादाकृष्य । **भक्तान्प्रत्यर्पयन्तम्**—पुनरपि स्वभक्तान् प्रति अर्पयन्तम् । **तासु रिक्तासु**—तत्कुशलापहरणाद्रिक्तासु दिक्षु । **श्रवणपवनत**—श्रवणयो पवनो वायुस्तस्मात् तसि । निज श्रोत्रयो सञ्चलनेनोत्थितपवनाद्वायो । **एषा** भक्तानाम् । **विघ्नान् प्रस्थापयन्तम्**, तत्र दिक्षु तेषामन्तरायान् प्रक्षेपयन्त मित्यर्थ । **पदविनतनृणाम्**—पदयोर्विनता नम्रा नर तेषा । शरणागतभक्तानाम् । **योगभद्राख्यकृत्यम्**—योगभद्रो योगक्षेम इति आख्या नाम यस्य स योगभद्राख्य. ।

योगभद्राख्य यत् कृत्य कर्म तत् योगभद्राख्यकृत्य तत् । अप्राप्तस्य प्रापण योग । प्राप्तस्य रक्षण क्षेम इत्यस्मात् निजभक्ताना योगक्षेमात्मक नाम लालनपालनात्मक कर्म । **स्वागेनैवाचरन्तम्**—स्वशरीरावयवे सपादयन्तम्–तनुजस्य लालनपालनात्मक कर्म स्वागेनैव सपादयन्तौ पितराविव इत्यर्थ । एतादृश **त शरण** रक्षितारम् । **दयालुम् इभमुखम्** इभस्य गजस्य मुखमिव मुख यस्य स इभमुख तम् गजानन **प्रपद्ये** नतोस्म्यहम् ॥

अस्मिन् पद्ये 'अवकाशसिद्धान्त' ( Vaccum Theory ) कविना वर्णित । यतो न कुत्राप्यवकाशो रिक्त स्थातु शक्य तस्मात् कुनालापहरणाद् रिक्तता गता दिगन्ता भक्ताना विघ्नै पूरिता गजाननेनेति वर्णितम् । अस्माक पूर्वजानामयमवकाशसिद्धान्तोऽपिज्ञात इति ।

प्रकृतिस्थो गज स्वशुण्डादण्ड पुरत प्रक्षिप्य पुन स्वसम्मुखमाहरति तथा च श्रवसी उभे भूयो भूय सचालयति । प्रभोर्गजाननस्येदृगी क्रियात्र भक्तजनस्य योगक्षेमकारिणी वर्णिता ॥ इद शार्दूलविक्रीडित वृत्तम् । लक्षण तु सूर्याश्वैर्यदिम सजौ सततगा शार्दूलविक्रीडितम् । अत्र स्वभावोक्तिरलकार ॥ दुरूहार्थ स्वक्रियारूपवर्णन ॥२॥

**हरित्पालान्वेणोरमृतमधुरालापविवशान्**
**प्रकुर्वन्तङ्कालाभयसुखमहालाभदपदम् ।**
**विशालाक्षङ्कञ्चिन्नवघनतमालाभमनिश**
**भजे गोधुग्बालानयनवनमालापरिचितम् ॥ ३ ॥**

**अन्वय**—हरित्पालान् वेणो अमृतमधुरालापविवशान् प्रकुर्वन्त, कालाभयसुखमहालाभदपद, विशालाक्ष, नवघनतमालाभ, गोधुग्बालानयनवनमालापरिचित कञ्चित् अनिश भजे ॥

**व्याख्या**—**हरिदिति** ॥ **हरित्पालान्** हरित पालयन्ति रक्षयन्ति ते हरित्पाला तान् । 'दिशश्च ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर । दिक्पालान् । **वेणो**र्वश्या । **अमृतमधुरालापविवशान्**—अमृत सुधामिव मधुरैरालापैर्निनादैर्विवशाविह्वला तान् । **प्रकुर्वन्त** प्रकर्षेण जनयन्तम् । अमृतमिव सुमधुरवेणुनिनादेन सुदूरस्थितदिक्पालानपि विह्वलत्व नीयमानमित्यर्थ । **कालाभयसुखमहालाभदपदम्**—कालात् यमात् अभयस्य सुख स एव महालाभ, त ददाति य स कालाभयसुखमहालाभद तस्य पद स्थान तम् । मृत्युभयमोचनस्थान श्रीकृष्णम् । **विशालाक्षम्** आयतनेत्रम् । **नवघनतमालाभम्**—नवघनश्च तमालश्च नवघनतमालौ तयोराभा

इव आभा कान्तिर्यस्य स तम्। अथवा नवघन इव तमाला नीला आभा कान्तिर्यस्य स तम्। मेघश्यामम्। **गोधुग्बालानयनवनमालापरिचितम्**—गा दुहन्ति ते गोदुह तेषां बाला गोधुग्बाला गोपकन्या तासां नयनैर्वनमालाभि परिचित इंगितो ज्ञात तम्। गोपवधूपरिचितवनमालम्। एतादृशम् **कञ्चित्** कमपि अनिर्वचनीय विभु श्रीकृष्णम् **अनिशं भजे** सतत सेवे ॥ ३ ॥

अनुप्रासशब्दालंकार। शिखरिणी छन्द। लक्षण तु रसैरुद्रैश्छिन्ना यमनसभलाग शिखरिणी ॥

**नमो न मोहाधिविनाशिनो गुरो पदोपदोत्कृष्टपद नयेद्यदि ॥**
**नवेन वेत्ता हितमध्वना कथ सम स मङक्षु स्वजनैर्भवेज्जन ॥४॥**

**अन्वय**—यदि जन मोहाधिविनाशिन गुरो पदोपदोत्कृष्टपद नम मङक्षु न नयेत् (तर्हि) स स्वजनै समं नवेन अध्वना हित (अहित च) वेत्ता कथं भवेत्।

**व्याख्या**—**नम इति॥ यदि जन** जनसाधारण किन्तु मुमुक्षुर्विचक्षणो वा इति भाव। **मोहाधिविनाशिन** मोह कश्मलम् अज्ञानावलिप्तमूर्च्छा स एव आधिर्मानसी व्यथा त विनाशितु दूरीकर्तु शीलमस्य स तस्य। 'सुप्यजातौणिनिस्ताच्छील्ये' इत्यनेन णिनि। 'पुस्याधिर्मानसीव्यथा' इत्यमर। मोहरूपमनोव्यथाया सदुपदेशेन मूलच्छेदनकर्तु समर्थस्य **गुरो** उपदेशकस्य सद्गुरो। **पदोपदोत्कृष्टपद** पदयो उपदा उपहार प्रथमदर्शने महता सम्मुखेऽत्यादरेण समर्पितवस्तु तदेवोत्कृष्ट श्रेष्ठतम पद वस्तु **नम** नमनम्। अर्थात् गुरुचरणयोरुपान्तेऽत्यादरेणसमर्पणाय श्रेष्ठतम वस्तु नमनरूपोपहार एव नत्वन्य। 'पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमर। एतादृशो नम **मङ्क्षु** झटिति **न नयेत्** नानुसरेत्। अर्थात् नतो न भवेत्। तर्हि **स** जन। **स्वजनै समम्** आप्तैर्बान्धवै सह—यत्र गुरुविरहितस्य एकस्यापि हित न भवति तत्र का कथा तस्य बहूना सम्बन्धिनाम् अत सर्वै सह नमेत्। **नवेन** नवीनेनाज्ञातेन **अध्वना** मार्गेण मोक्षरूपहितसाधनायप्रकल्पित केनापि सुज्ञेनाप्रदर्शितो मार्गो नवीन एव, नवीनत्वान्मार्गभ्रशन तथान्यमार्गेपतनमपि सभवति अतो नवीनमार्गेण गच्छन्सन् **हितम्** आत्मावबोधरूप मोक्षप्राप्तिरूप लाभम् अथ च **अहित** हानिरूपम् अर्थात् हिताऽहितयोर्भेद **वेत्ता** ज्ञाता कथ भवेत्। मोक्षाधिकारी कथं भवेत् न कथमित्यर्थ।

सद्गुरो सदुपदेशाद्विना मोक्षरूप ज्ञान न भवति अतो न एकलोजन किन्तु समष्टिरूपेण बहुजनहिताय बान्धवै सह सद्गुरुणा प्रदर्शितमार्गमनुसरेदितिभाव ॥ वंशस्थवृत्तम् ॥४॥

**कालिन्दीपुलिने चरन् वदनजैर्वातै सुवेणोर्नखै**
**छिद्राणा परिचालनैर्व्रजसखीचेतासि सचालयन् ।**
**यान्तीना रमणेषु मोहनिचय सवर्धयन्केशवो-**
**ढुण्ढे ऽ पण्डितमण्डनस्य विपद विद्रावयन् रक्षतु ॥५॥**

**अन्वय** —कालिन्दीपुलिने चरन्, सुवेणो छिद्राणा वदनजै वातैनखैश्च परिचालनै व्रजसखीचेतासि सचालयन् यान्तीना रमणेषु मोहनिचय सवर्धयन्, केशव ढुण्ढे पण्डितमण्डनस्य विपद विद्रावयन् रक्षतु ।

**व्याख्या—कालिन्दीति ॥ कालिन्दीपुलिने**—कलिन्दस्यापत्य स्त्री कालिन्दी यमुना नदी तस्या पुलिन तस्मिन् । यमुनाया तोयोत्थितप्रदेशे । **चरन्** चर गतौ चरतीति चरन् शत्रन्तम् । परिभ्रमन् इत्यर्थ । **सुवेणो छिद्राणाम्**-सुवश्या रन्ध्राणाम् । **वदनजैर्वातै** –मुखोत्पन्नै पवनै तथा च **नखै परिचालनै** –सचालितकराग्रै । आननात्फूत्कारेणोत्थितवातध्वनिभिस्तथा कराग्रैर्वंशीछिद्राणा रोधनानिरोधनक्रमभिरुत्पादितेन षड्जादिसप्तस्वरनिनादेन । **व्रजसखीचेतासि सचालयन्**—व्रजसुदरीणा मनास्याकर्षयन्नुद्दीपयन् इत्यर्थ । **यान्तीना**—गच्छन्तीना रमणीना **रमणेषु** पतिषु **मोहनिचय सवर्धयन्**—मोहवृद्धि कुर्वन्, मृदुवेणुनिनादेन तान् पतीन् सुषुप्ति गमयन्नित्यर्थ । **केशव** स श्रीहरि **ढुण्ढे** कवेर्ढुण्ढिराजस्य । कथ भूतस्य ढुण्ढे ? **पण्डितमण्डनस्य** पण्डिताना विदुषा यो मण्डन विभूषण स पण्डितमण्डन तस्य । **विपद विद्रावयन् रक्षतु**-तस्य क्लेश दूरीकुर्वन् पालयतु ॥ शार्दूलविक्रीडित वृत्तम् ॥५॥

**रसज्ञरसवैरिणोरुभयमेव पृथ्वीचरन्नचैकतरमेतयोरपि रसग्रहेप्रार्थये ॥**
**कृतिर्हि सरसास्ति चेदिहरमेत पूर्व स्वय प्रनिम्नइववारधोवदन-**
**कुभबधु पर ॥ ६ ॥**

**अन्वय**—रसज्ञरसवैरिणो उभय एव पृथ्वीचरम् । एतयो एकतर चापि रसग्रहे न प्रार्थये । कृतिर्हि सरसाऽस्ति चेत् इह पूर्व स्वय रमेत । पर प्रनिम्ने वारिव अधोवदनकुभबन्धु ॥

**व्याख्या रसज्ञेति ॥** अत्र कविर्निजकाव्यरसास्वादनाय न कमपि प्रार्थयते । कस्मात् ? यतो 'वाक्य रसात्मक काव्यम् इत्यस्मात् श्रृगारादिरसप्रदर्शनात्मकानाम् अत्र प्रयुक्तशब्दवाक्याना रस जानात्यसौ रसज्ञ । विद्वान् पण्डित तद्विपरीतो रसवैरी

मूर्ख । अतो **रसज्ञरसवैरिणो** —पण्डितमूर्खयो । उभयमेव पृथ्वीचरम्—पृथिव्या चरतीति पृथ्वीचर तम् 'चरेष्ट' इत्यनेन ट प्रत्यय । युगलमेव जगति वर्तमानम् । **एतयोरुभयोर्मध्ये। एकतर चापि रसग्रहे न प्रार्थये**-मम काव्यरसग्रहणाय एकमपि न याचे। कि कारणम ? **कृतिर्हि रससास्ति चेत्**-अत्र मम काव्यकृति सरसा रसै सहिता रसवती श्रृगारादिरसभाववती भवति चेत् तर्हि **इह पूर्व** स रसज्ञ । स्वय रमेत तस्या मम कृतौ अप्रार्थितोऽपि स्वयमेवावगाहेत। रसास्वाद करिष्यतीति भाव । **परो**नाम रसवैरी तु **प्रनिम्ने वारिव**-निम्नस्थले जलमिव। 'आप स्त्री भूम्नि वार्वारिसलिल कमल जलम्' इत्यमर । **अधोवदनकुम्भबन्धु**-अधोवदनो नाम अधोमुखघटसदृश । यथा निम्नस्थले पतित जल स्थातु समर्थ नास्ति एव मेव अधोमुखकुभ वारिधारा अपि न पूरयन्ति। तद्वत् अरसिक प्रार्थितोऽपि रसग्रहणायासमर्थ इति भाव । इद पृथ्वीछन्द । जसौजसयलावसुग्रहयतिश्च पृथ्वी गुरु. इति लक्षणात् ॥६॥

**वर्तध्वे चित्स्वरूपा श्रुतिनियमबलात्सर्वदा जागरूका-**
**स्तद्युष्मान्प्रार्थयेऽहम्मुहुरिदमखिलानाऽऽविधेरा च कक्षात् ॥**
**उत्प्रेक्षादिप्रयुक्त्या सदसदपि गिरा प्रोच्यते यद्यदस्मिन्**
**काव्ये तत्तत्क्षमध्व निजनिजसदलकारसभावनाभि ॥७॥**

**अन्वय**—श्रुतिनियमबलात् सर्वदा जागरूका चित्स्वरूपा (यूय) वर्तध्वे। तत् अखिलान् युष्मान मुहु इद प्रार्थयेऽहम्। अस्मिन् काव्ये आविधे आकक्षाच्च उत्प्रेक्षादिप्रत्युक्त्या गिरा सदसदपि यत् यत् प्रोच्यते, तत् तत् निजनिजसदलकारसभावनाभि क्षमध्वम् ॥

**व्याख्या—वर्तध्व इति** ॥ **श्रुतिनियमबलात्**-श्रुतीना वेदाना नियमेन स्वाध्यायेन प्राप्त यत् बल तस्मात्। वेदशास्त्राध्ययनादित्यर्थ । अथवा श्रुत्यो शब्दार्थग्रहयो कर्णयोर्नियम प्रतिज्ञान तस्य बलात् सामर्थ्यात्। गुरो सकाशे शब्दग्रहणादध्ययनाद् यत् प्राप्त ज्ञान तस्य बलादित्यर्थ । 'कर्णशब्दग्रहौ श्रोत्र श्रुति स्त्री श्रवण श्रव' इत्यमर । **सर्वदा जागरूका** सदा जागृता । **चित्स्वरूपा** चित् चेतना तदेव स्वरूप विग्रहो येषा ते चित्स्वरूपा । साक्षात् सरस्वतीरूपा । **वर्तध्वे**-यूय कोविदा अस्मिञ्जगति वर्तध्वे स्थ इत्यर्थ । **तत्** तस्मात् कारणात् **अखिलान् युष्मान् अह मुहु** पुन पुनरिद **प्रार्थये**। इद किम् ? अस्मिन् काव्ये **आविधे आकक्षाच्च उत्प्रेक्षादिप्रयुक्त्या गिरा सदसदपि यद्यत्प्रोच्यते**। विधिर्नियम । कक्ष सीमा। आङ् अभिव्याप्तौ मर्यादाया च। काव्यालकारादि

नियमादारभ्य आसीम्ना च सीमापर्यन्त परिपालनादपि अस्मिन् ग्रन्थे अलकारादि प्रयुक्त्या वाण्या ये ये प्रयोगा प्रयुक्ता तेषा प्रयोगेण तथा सुष्टुदुष्ठु परवाक्य प्रयोगेण मया यद्यत् प्रोच्यते कथ्यते **तत्तत् निजनिजसदलकारसभावनाभि क्षमध्वम्**-तत्रतत्र सभावितशब्दार्थालकारग्रहणेनैवाऽऽत्मनोरसग्रहणशक्ति दर्शयन्तु भवन्त इति मे प्रार्थना ॥ यद्यपि पूर्वस्मिन् पद्ये कविर्निजकाव्यरसास्वादाय न कमपि प्रार्थयते तदपि पुन पण्डितान् याचते, यतोऽय शिष्टसप्रदायो महता विनयोऽपि स्रग्धराछन्द ॥७॥

**शुकमुखादिह भागवतामृत विगलित शुभदैववशान्महत् ॥**
**समनुलक्ष्य बुधान्यगदन्निद त्यज सुधे वसुधे भज धन्यताम् ॥८॥**

**अन्वय**—शुभदैववशात् इह शुकमुखात् महत् भागवतामृत विगलित समनुलक्ष्य बुधा इद न्यगदन् ‘सुधे धन्यता त्यज वसुधे तु भज’ ॥

**व्याख्या**—शुकमुखादिति । **शुभदैववशात्**—कल्याणकारि-सौभाग्यात् । **इह शुकमुखान्महद्भागवतामृत विगलित समनुलक्ष्य**-यथा शुकमुखात् कीर-पक्षिणो मुखात् सुस्वाद्वमृतमय पक्व मिष्ट फल नि सरति तद्वत् इहास्मिन् जगति शुकाचार्यमुखात् सुमहदतिविस्तृतम् अमृतस्वरूप भागवत नामक ग्रन्थ विगलित निसृत कथितमित्यर्थ दृष्ट्वा । **बुधा** विद्वास । **इद न्यगदन्** कथयामासु । इद किम् ? **हे सुधे** हे अमृत **धन्यता त्यज** तथा **वसुधे** हे वसुधरे त्व तु **धन्यताम्** अहोभाग्यता **भज** धारय ।

यत शुकमुने प्रसादादिह जगति प्राचुर्येण भागवतरसामृतप्रादुर्भावेण स्वर्गस्थ-सुधाया महिमा स्वल्पीयस्त्व गत किन्तु सत्र सुलभ सर्वै प्राप्य भागवतरसामृत शुकाचार्यणैवोत्पादितत्वाद् वसुधाया महिमा वृद्धिगत । अत सा धन्या । तस्मात् हे सुधे । त्वमहोभाग्यत्व त्यज । परच हे वसुधे ! त्व धन्यता भजेति निर्देश इति भाव ॥

यमकानुप्रासौ । द्रुतविलबित वृत्तम् । द्रुतविलबित माह नभौ भरौ ॥८॥

**अस्ति श्रीमथुरापुरीमधुरिपो सानिध्यभाक्सर्वदा—**
**वैकुण्ठस्य नवावतार इव या वासो यदुक्ष्माभृताम् ॥**
**तस्या यो वसुदेव इत्यभिहितो या देवकीति प्रथा**
**प्राप्ता वृष्णिकुलोद्भवौ न्यवसता कन्याकुमारश्च तौ ॥९॥**

**अन्वय**—सर्वदा मधुरिपो सानिध्यभाक्, वैकुण्ठस्य नवावतार इव, श्रीमथुरापुरी अस्ति। या यदुक्ष्माभृता वास। तस्या य वसुदेव इति अभिहित कुमार, या देवकी इति प्रथा प्राप्ता कन्या च, तौ वृष्णिकुलोद्भवौ न्यवसताम् ॥

**व्याख्या--अस्तीति** ॥ **सर्वदा** सर्वस्मिन् काले। **मधुरिपो** मधोर्दैत्यस्य रिपु शत्रु तस्य। श्रीकृष्णस्य। **सानिध्यभाक्** सनिधेरिद सानिध्यम्। 'गुणवचनादिभ्य इत्यनेन ष्यञ्।' सानिध्य भजते इति सानिध्यभाक् 'भजोण्वि' इत्यनेन ण्वि प्रत्यय। अत्यन्तनिकटतया, सनिकर्षेण वास्तव्यात् वा। **श्रीमथुरापुरी अस्ति** यत्र भगवान् नित्यमेव वर्तते इत्यर्थ। सदावर्तमानत्वात् 'अस्ती'ति वर्तमाने लट्। कथमस्ति? **वैकुण्ठस्य नवावतार इव**–वैकुण्ठ प्रभोर्निलय स इह जगति नवमथुराया स्वरूपेणैव वर्तते। **या** मथुरापुरी। **यदुक्ष्माभृता** यदुपतीनाम्। **वासो** निकेतनमभूत्। **तस्या** मथुराया **यो वसुदेव इत्यभिहितो** नाम्नाऽभिज्ञात **कुमार** तथा च **या देवकीति प्रथा** प्रसिद्धि प्राप्ता ज्ञाता कन्या। एतादृशौ **तौ** कन्याकुमारौ। **वृष्णिकुलोद्भवौ** यदुकुलोत्पन्नौ **न्यवसता** निवसत स्म ॥ शार्दूलविक्रीडित वृत्तम् ॥९॥

**पूर्वस्मिन्ननघे जनुर्द्वयइवाप्यस्मिन्भवे मैव मा**
**त्याक्षीरासुधृतेरितीवनिभृत ससूचयन्पाणिना ॥**
**पाणि गाढमपीपिडत्सुविधिना तस्या स कसस्वसु–**
**र्यद्वा काञ्चनरत्नयौतकयुता जग्राह युद्धार्भटीम् ॥१०॥**

**अन्वय**—'हे अनघे! पूर्वस्मिन् जनुर्द्वये इव अस्मिन् भवेऽपि आसुधृते मा मा एव त्याक्षी' इति पाणिना निभृत ससूचयन् इव स तस्या कसस्वसु पाणि सुविधिना गाढम् अपीपिडत्। यद्वा काचन-रत्नयौतकयुता युद्धार्भटी जग्राह ॥

**व्याख्या–पूर्वस्मिन्निति** ॥ **हे अनघे!** हे निष्पापे! **पूर्वस्मिन् जनुर्द्वय इव**—यथा त्व पूर्वसमये जन्मद्वये 'सुतपा' 'अदिति' इति रूपेण मा पृश्निं कश्यप च न त्यक्तवती एवमेवा**ऽस्मिन् भवेऽपि** इह जन्मन्यपि। **आसुधृते** आ असूना प्राणाना धृतिर्धारण तस्या आ असुधृते। आङ् मर्यादायाम्। प्राणधारण पर्यन्तम् आजीवनमिति यावत्। 'धृतिर्धारणधैर्ययो' इत्यमर। **मा मा एव त्याक्षी** त्व मा कदापि न त्यज। 'नमाङ्योगे' इत्यनेन अडाटौ निषेध। **इति पाणिना निभृत ससूचयन्निव**—इत्थ प्रकारेण करग्रहणविधौ पाणिना हस्तेन

निभृत गुप्ततया दर्शयन्निव स वसुदेव **तस्या कसस्वसुर्देवक्या पाणि** हस्तम् । **सुविधिना,** यथोचित विवाहकर्मणा **गाढम् अपीपिडत्**—' पीड अवगाहने ' लुङि ' भ्राजभासभाष ' इत्यनेन विकल्पनोपधा ऱ्हस्व । दृढतया तस्या करग्रहणमकरोत् । **यद्वा काचनरत्नयौतकयुता युद्धार्भटीं जग्राह**—यद्वा इद करग्रहण सर्वैरपि लक्षित तथापि युद्धस्वरूप कन्याग्रहण युद्धे एव परिणमेदिति नो लक्षित तत् सभावना कवि करोति । विवाहे कन्या प्रति यत् देय तत् यौतक । स्वर्णरत्नादिना पारिबर्हेण विभूषिता सालङ्कृता किन्तु युद्धकन्या जग्राह इत्यर्थ । युद्धार्भटीम्-अर्भ एव अर्भटो बालक । स्त्रिया अर्भटी ता अर्भटीम् । ' वयसि प्रथमे ' इत्यनेन स्त्रिया ङीप । युद्धाय अर्भटी ता युद्धार्भटीम् । युद्धकन्यामित्यर्थ । स वसुदेवो न केवल सालङ्कृता कन्या जग्राह अपि तु भविष्यद्युद्धायाऽऽवाहन कुर्वती युद्धकन्यामपि जग्राह इति भाव ॥ उत्प्रेक्षालङ्कार । शार्दूलविक्रीडित वृत्तम् ॥१०॥

**पुरैकरङ्गेश्वनटादरेण सामाजिकान्मोदयितान्पुरस्थान् ॥**
**तयोर्विवाहोत्सवनाटकस्य कस किलाऽशोभत सूत्रधार ॥११॥**

**अन्वय**—पुरैकरङ्गे अश्वनटादरेण पुरस्थान् सामाजिकान् मोदयिता कस तयो विवाहोत्सवनाटकस्य सूत्रधार किल अशोभत ॥

**व्याख्या—पुरमिति** ॥ **पुर** मथुरानगर तदेव **एक** केवलो**रङ्ग** नटशाला तस्मिन् । समग्रमथुरानगररूपिण्या नृत्यशालायाम् । पुरस्य रङ्गसाम्येन सर्वत्र विवाहोत्सवप्रसगेन निखिलमथुरानगरी रम्भास्तम्भध्वजादिभि समलङ्कृता सुशोभिता इति भाव । **अश्वनटादरेण** अश्वास्तुरगास्ते एव नटा नर्तकास्तेषाम् आदरेण अभिनिवेशेन । तुरगाणा नटसादृश्येन तेऽपि समलङ्कृता बद्धाभिनिवेशेन सभ्रमेण गच्छन्त इति भाव । तेषाम् एतादृग्गमनेन **पुरस्थान्** पुरवासिन नागरिकान् अथ च पुरोवर्तिनश्च तानेव **सामाजिकान्** नाट्यप्रेक्षकान् । सामाजिकानिति सपूर्वोऽजि समुदाय तस्माद्भावे घञ् समाज तस्मात् ठञ् सामाजिक तान् । पुरस्थान् इत्यनेन साभिलाषतया विवाहमहोत्सवप्रेक्षणे पुरोवर्तिस्थितान् इतिभाव । **मोदयिता** ' मुद हर्षे ' इत्यस्मात् णिजन्तात् तृन् । पुरवासिनामानन्दयिता स **कस** । **तयो**र्देवकी-वसुदेवयो **विवाहोत्सवनाटकस्य** विवाह एव नाटक तस्य । विवाहोत्सवाभिन्न नाटकस्य **सूत्रधार** चालक सविधानसूचक अथ च सारथ्येन अश्वप्रग्रहधारी च **अशोभत किल** निश्चयेन शुशुभे ।

॥ रूपकमलङ्कार । वशस्थवृत्तम् ॥११॥

**हन्तो दयिष्यति हतिस्तव नष्टबुद्धे विस्पष्टमष्टमसुतादिति कष्टमस्या इत्युग्रसेनजनुष सुरवर्त्मवाणी बाणी बभूव हृदयातरमर्मभेत्री ।।१२।।**

**अन्वय** —हन्त कष्टम् ! हे नष्टबुद्धे ! अस्या अष्टमसुतात् तव हति उदयिष्यति इति विस्पष्ट सुरवत्मवाणी उग्रसेनजनुष हृदयान्तरमर्मभेत्री बाणी बभूव ॥

**व्याख्या —हन्तेति । हन्त ।** कष्टम् ! खेदे खेदातिशयप्रदर्शनायैव द्वौ शब्दौ प्रयुक्तौ । **हे नष्टबुद्धे !** नष्टाबुद्धिर्यस्य स । तत्सबुद्धौ हे नष्टबुद्धे--रे मूढ ! कस । **अस्या** देवक्या । **अष्टम सुतात्** पुत्रात् **तवहतिर्मृत्युरुदयिष्यति** । हन हिंसाया 'स्त्रियाक्तिन्' हति । **इति विस्पष्टम्** अव्ययम् । इत्थ प्रकारेण स्पष्टतया उक्ता **सुरवर्त्मवाणी** आकाशवाणी । **उग्रसेनजनुष** उग्रसेनात् जनुर्जन्म यस्य स तस्य । कसस्य । **हृदयातरमर्मभेत्री** हृदयस्य अन्तरम् अवकाश तस्मिन् स्थित यत् मर्म सुकोमल सधिस्थान तस्य भत्री । सुदूरपयन्त हृदयाभ्यन्तरे मर्मस्थान भेत्री छेदनरूपा । भिदिर्विदारणे इत्यस्मात् तृच् स्त्रिया ङीप् । **बाणी बभूव** न बाण अबाण , अबाणो बाणो यथा सपद्यते तथा बभूव बाणी बभूव । अभूत तद्भावे च्वि । बाणसदृशी छेदनरूपिणी बभूव ॥ अनुप्रासालकार ॥
वसततिलका छन्द । लक्षण तु उक्ता वसततिलका तभजाजगौग ॥१२॥

**प्रोज्झित्यात्मानमिद्धापदि पदमपथे स्थापयिष्यन्तमश्वान्–**
**सन्मार्गे बद्धदृष्टीन्त्सजवमपितिरश्चोनुयातो गुणान्स्वान् ॥**
**अप्याकृष्टान्कराभ्यामनुपयत इव प्रग्रहान्प्रास्य हस्त–**
**ग्राह जग्राह कस सपदि तदलकान्दुर्मतिर्दुर्गुणांश्च ॥१३॥**

**अन्वय** —तिरश्चोऽपि सन्मार्गे बद्धदृष्टीन् स्वान् गुणान् अनुयात सजवमपि अश्वान् अनुपयत इव अपथेपद स्थापयिष्यन्तम् आत्मानम् इद्धापदि प्रोज्झित्य, आकृष्टान् प्रग्रहान् कराभ्या प्रास्य, स्वान् तिरश्च गुणान् अनुयात दुर्मति कस सपदि तदलकान दुर्गुणाश्च हस्तग्राह जग्राह ॥

**व्याख्या--प्रोज्झित्येति । तिरश्चोऽपि**–तिर्यक् योनि पशुयोनि गतानपि । **सन्मार्गे बद्धदृष्टीन्** सन्मार्गे सरलपथे दत्तदृष्टीन् अथ च मनुष्याद्धीनयोनौ जातानपि सन्मार्गमेवानुसरत । **स्वान् गुणान् अनुयात** -निजरश्मिसकेतानुसारेण गच्छत **सजव** ( अव्यय ) सवेग वेगेन धावमानान् **अश्वान्**–रथाश्वान् । **अनुपयत इव**

निरोधयत इव, अग्रे गन्तुमशक्नुवत इव इत्यर्थ । **अपथे पद स्थापयिष्यत** दुष्टमार्गे कुमार्गे पादन्यास करिष्यमाण **आत्मानम् इद्धापदि प्रोज्झित्य**-महद्विपत्तौ त्यक्त्वा ' जिइन्धी ' दीप्तौ इत्यस्मात् ' जीत क्त ' इत्यनेन क्तप्रत्यय । प्रज्वलित विपत्तौ त्यक्त्वा इत्यर्थ । **आकृष्टान् प्रग्रहान्** अश्वरश्मीनपि । **कराभ्या प्रास्य** हस्ताभ्या दूरीकृत्य । **स्वान्तिरश्चो गुणाननुयात** तिरश्च कुटिलान् निज कुटिलगुणान् मनोविकाराननुगच्छन् स दुर्मति कस । **सपदि** तत्कालमेव । **तदलकान्** तस्या भगिन्या देवक्या अलकान् कचान् **दुर्गुणाश्च हस्तग्राह जग्राह** हस्तेन दृढमग्रहीत् । हस्तग्राहमिति ' हस्तेवर्तिग्रहो ' इत्यनेन णमुल् ।

पशुयोनिजा अश्वा स्वान् गुणाननुसरन्त सन्मार्गमेवागच्छन् पर च मनुष्ययोनि प्राप्त कसो निजसदसद्विवेकात्मकान् सुष्टु गुणान् त्यक्त्वा दुर्गुणान् दधत् स्वस्यैवानुजा देवकीं हन्तुमुद्युक्तोबभूवेतिभाव ॥

अप्रस्तुतप्रशसालकारो विशेषात् सामान्यसमर्थनरूप ॥ श्लेषालकारश्च । स्रग्धराछद ॥१३॥

**साध्वीमुदारा च गुणै प्रसक्ते प्राणव्ययेऽपि प्रतिपालनीयाम् ।**
**कस स्वसार निशितासिनाऽपि क्रियामिवच्छेत्तुमसौ प्रयेते ॥१४॥**

**अन्वय —**प्रसक्ते प्राणव्ययेऽपि गुणै प्रतिपालनीया क्रियामिव साध्वीम् उदारा च स्वसारम् असौ कस निशितासिना अपि च्छेत्तु प्रयेते ।

**व्याख्या—साध्वीति । प्रसक्ते**-आसन्नभूते प्राप्त इत्यर्थ । **प्राणव्ययेऽपि** प्राणाना व्ययो नाश तस्मिन् । प्राणनाशनेऽपि । आत्मनाशे प्राप्ते सत्यपीत्यर्थ । **गुणै. प्रतिपालनीया**-गुणैर्धैर्यादिगुणै रक्षणीयाम् । **क्रियामिव**-कृत्यामिव देवसतर्पणाद्यावश्यकत्वेन रक्षणीयाम् अनुल्लघनीया कर्तु योग्या विविधा क्रियामि वेत्यर्थ । " कृत्या क्रिया देवतयोस्त्रिषुभेद्येधनादिभि " इत्यमर । **साध्वीम् उदारा च**-सुचरित्रामुदाराशया **स्वसारम्** आत्मभगिनीमपि । **असौ कसो निशितासिनापि च्छेत्तु प्रयेते**-तीक्ष्ण खड्गेन छेदनाय प्रयत्नवान् बभूव ॥ पूर्णोपमालकार ॥ उपजातिवृत्तम् ॥१४॥

**हन्तु स्वा भगिनी व्यधायि न पुरस्तेनाऽसियष्टिर्द्विषत्-**
**कीलालार्द्रपृषद्वती परमहो दुष्कीर्तिरेवास्य सा ॥**
**तस्या स्वर्गपदाधिरोहणलसद्धेतोरिहेतोऽनम-**
**द्रागानूनमनूनदीप्तिरकरोत्प्रोत्कण्ठकण्ठग्रहम् ॥१५॥**

**अन्वय** —पुर तेन स्वा भगिनी हन्तुम असियष्टि नव्यधायि। अहो सा अस्य द्विषत्कीलालार्द्रपृषद्वती इह दुष्कीर्ति एव। इत पर तस्या स्वर्गपदाधिरोहणलसद्धेतो अनूनदीप्ति स अनमद्रागानून प्रोत्कठकठग्रह अकरोत् ॥

**व्याख्या--हन्तुमिति। पुर** इत पूर्वमद्यापि पयन्त। **तेन** कसेन। **स्वा भगिनीं** देवकी **हन्तुम् असियष्टि** खड्गो **नव्यधायि** न धृता। अधायि इति लुङि कर्मणि चिण्। कस्मात् कारणान्नव्यधायि ?। **अहो** इति निश्चयात्मके। **सा** असियष्टिस्तु **अस्य** कसस्य **द्विषत्कीलालार्द्रपृषद्वती** द्विषदा शत्रूणा कीलाल रक्त, द्विषत्कीलालेन आर्द्रा पृपद्वती च। रक्तबिदून् धारयन्ती। शत्रुरक्तेन रजिता, शत्रुघातिनी आसीत् इत्यर्थ। 'पृषति बिन्दु पृषता। शोणितमसिकीलालम्' इत्यमर। अत **इह** भगिनीवधाय सा **दुष्कीर्ति एव** स्यात्। **इत पर**–अतऊर्ध्वम्। अस्मिन् समयात् पुरत **तस्या** देवक्या **स्वर्गपदाधिरोहणलसद्धेतो** स्वर्गस्य पद स्थान त प्रति अधिरोहण स एव लसत् इच्छतो हेतु तस्मात्। अत्र तस्या स्वर्गगमनार्थमेवहेतु तस्मात्। **अनूनदीप्ति स**—न ऊना लघ्वी दीप्ति तेजो यस्य स। स महान् प्रतापी कस। **अनमद्रागानून** न नमता रागेण, उद्दीप्तविकारेण। अनून पूर्ण (न ऊनम् अनूनम्) उद्धतविकारेण परिपूर्ण। **प्रोत्कण्ठकण्ठग्रहम्**--उत्कठेन कठग्रहणम् अकरोत्। विवृद्धविकारवशात्उत्कठेन तस्या कण्ठ जग्राह इत्यर्थ।

देवकी–विवाहात्पूर्व तेन कसेन स्वासि शत्रुरक्तरजित कृत। पर विवाहादनतर तमेवासि 'भगिनी मे शीघ्र स्वर्ग गच्छतु' इति हेतो तेन कसेन तस्या देवक्या कठे स असि स्थापित इति भाव ॥

स्वभावोक्तिरलकार। शार्दूलविक्रीडित वृत्तम् ॥१५॥

**अद्योढकान्ताविपदग्रदग्ध क सश्रयाणि व्यसनोपहत्यै।**
**इत्थ विमर्शे किल शूरसूनोर्भिन्नार्थरीत्या हृदि निर्णयोऽभूत् ॥१६॥**

**अन्वय** —अद्योढकाताविपदग्रदग्ध (अह) व्यसनोपहत्यै क सश्रयाणि। इत्थ विमर्शे (सति) शूरसूनो हृदि भिन्नार्थरीत्या किल निर्णयोभूत् ॥

**व्याख्या—अद्येति ॥ अद्य** अद्यैवाह्नि। अद्य या ऊढा परिणीता कान्ता भार्या तस्या विपत् तस्या अग्रम् अत्यधिक तेन दग्ध पीडितो य. स। **अद्योढकाता-**

**विपदग्रदग्ध** । भार्याया विपदाधिक-पीडितो वसुदेवोऽहम् । **व्यसनोपहत्यै** व्यसनस्य विपत्तेरुपहतिर्निवारण तस्यै। तस्या विपत्ति निवारणाय। **क** जन। **सश्रयाणि** शरण गच्छेयम्। **इत्थ विमर्शे**-एव चितयति सति। **शूरसूनोर्हृदि** वसुदेवस्य हृदये। **भिन्नार्थरीत्या किल निर्णयोऽभूत्**-अन्यप्रकारेण 'कस श्रयाणि' इत्याकारकेण कसमेव शरणार्थ गच्छामभीति धारणा जाता। कान्ताया स्थाने तस्या पुत्रान् व्यापादयितु, वधाय दातु निश्चितनिश्चयोऽभूत् इत्यर्थ ॥

निश्चयान्तसदेहालकार ॥ इन्द्रवज्रावृत्तम्। स्यादिन्द्रवज्रा यदि तौ जगौ ग ॥१६॥

**आत्माध्युपास्तिनिभृताहितभूरिवीर्य्या**
**सत्याजितोद्भवदपत्यफला निकामम् ॥**
**भार्य्येव शोकविकलस्य यदूत्तमस्य**
**सत्कर्मपद्धतिरिवाकृत चित्तशुद्धिम् ॥१७॥**

**अन्वय**—निकामम् आत्माध्युपास्तिनिभृताहितभूरिवीर्या सत्याजितोद्भवदपत्यफला सत्कर्मपद्धति इव शोकविकलस्य यदूत्तमस्य भार्यैव चित्तशुद्धि अकृत ॥

**व्याख्या—आत्मेति। निकाम** पर्याप्त यथा स्यात् तथा। **आत्माध्युपास्तिनिभृताहितभूरिवीर्या**-आत्मनो ब्रह्मण अध्युपास्ति उपासना सैव निभृत गुप्तम् आहित स्थापित भूरि महत् वीर्य तेजो यस्या (सत्कर्मपद्धत्या) सा। भार्यापक्षे-आत्मन स्वस्य तस्या जायमानत्वात् या अध्युपास्ति सततस्मरण सैव निभृत गुप्तरूपेण आहित स्थापित भूरिवीर्य प्रचुरमोजो यस्या (भार्याया) सा। **सत्याजितोद्भवदपत्यफला** सम्यक् त्याजितम् उद्भवदपत्यफल जनिष्यमाणसत्कर्म फलनिष्पत्तिर्यस्या सा। [illegible] त्याजितम् उद्भवदपत्यफलम् उत्पत्स्य मानपुत्ररूप फल यस्या सा। **सत्कर्मपद्धतिरिव**-सुकर्ममार्ग इव। **भार्या एव** देवकी एव। **शोकविकलस्य** दु खपरिपीडितस्य। **यदूत्तमस्य** यदुश्रेष्ठस्य वसुदेवस्य। **चित्तशुद्धिम अकृत** मनस्ताप जहार।

यथा सत्कर्ममार्ग ब्रह्मप्राप्तिरूप तेज प्रच्छन्नरूपेण पर्याप्ततया च स्थापितमस्ति यमनुसरतो जनस्य ब्रह्मावाप्तिरूप फल निश्चित यदि सत्कर्मजनितस्वर्गादिसुखभोगेच्छा त्यक्ता। अर्थात् सत्कर्ममार्गानुसरण यदि अनासक्तभावेन फलकामेच्छारहितेन अनुक्रियते तदा ब्रह्मप्राप्तिर्निश्चिता। एवमेव ह्यह वसुदेव पुत्रलाभ विना अर्थात्

अस्याम् उत्पादयिष्यमाणा पुत्रा न मयाकाङ्क्षिता इति कृत्वैव यद्यहम् अमु स्वीकरोमि तदा अस्या प्राप्तिमे निश्चिता । अतो भायेव तस्य मनस्ताप जहारेति भाव ॥

उपमालङ्कार ॥ वसततिल्का वृत्तम् । उक्ता वसततिल्का तभजाजगौग ॥१७॥

**स्वहृदयगर्भगानपि विजित्य न षट् प्रथम-**
**सहजरिपून्स्वसुर्बत शिशूनवधीन्मधुप ॥**
**यदिदमकर्म वा सुरमुनि कथमैधयत**
**क्षितिमथवा परीक्ष्य वपन्ति बुधा उचितम् ॥१८॥**

**अन्वय**—मधुप स्वसु प्रथम षट् शिशून् स्वहृदयगर्भगान् सहजरिपून् विजित्यापि न अवधीत् । बत सुरमुनि. तदिदम् अकर्म कथ वा ऐधयत । अथवा बुधा क्षिति परीक्ष्य उचित वपन्ति ॥

**व्याख्या—स्वहृदयेति । मधुप** मधन् एतत्सज्ञप्रन्देशान् पाति रक्षतीति मधुप । 'आतोनुपसर्गेक' इत्यनेन क प्रत्यय । कस । **स्वसुर्**भगिन्या देवक्या । **प्रथम षट्** आद्य षट्सख्याकान् **शिशून्** पुत्रान् । कथ भूतान् शिशून् ? **स्वहृदयगर्भगान्** स्वस्यैव देवक्या हृदयस्य गर्भे अभ्यन्तरे गच्छन्तीति स्वहृदयगर्भगा तान् 'अन्तात्यन्ताध्व दूरपार सर्वानन्तेषुड' एषु गमेड । समानोदर्याया भगिन्या हृदय तस्य कसस्य स्वहृदयसदृशत्वात् निजपुत्रानेव इत्यर्थ । 'स्वो ज्ञातावात्मनि' इत्यमर । **सहजरिपून्** सहजेन स्वभावेन जन्मजातेनैव रिपून् शत्रून् । **विजित्यापि** गृहीत्वापि **न अवधीत्** न अमारयत् । **बत** इदमाश्चर्य यत् । **सुरमुनिर्**नारदमुनि । **तदिदमकर्म** तस्य कसस्य इद बालकवधात्मकम् अयोग्य कर्म । **कथ वा ऐधयत** कस्मात् कारणात् वृद्धिमनीयत । तत्प्रसिद्धमिति शेष । **अथवा बुधा** पण्डिता । **क्षिति परीक्ष्य उचित वपन्ति** भूम्युत्पादनशक्ति निरीक्ष्य योग्य बीज वपन्ति ॥

अर्थान्तरन्यासालङ्कार । नर्कुटक वृत्तम् यथा "नजौ भजजलागुरुर्नर्कुटकम्" ॥१८॥

**एकेन द्वे मातरौ गर्भवत्यौ येनाभूता यश्च नागाधिराज ।**
**मूर्ध्निक्षोणी सर्षप मन्यते या सा त दध्रे सर्षपी भावयन्ती ॥१९॥**

**अन्वय**—येन एकेन द्वे मातरौ गर्भवत्यौ अभूताम् । यश्च नागाधिराज । यो या क्षोणी मूर्ध्नि सर्षप मन्यते, त सा सषपी भावयन्ती दध्रे ।

**व्याख्या—एकेनेति।** **येन एकेन** बलरामेण। **द्वे मातरौ** देवकीरोहिण्यौ **गर्भवत्यौ अभूता** बभूवतु। **यश्च नागाधिराज** सर्पाधिपति शेष। **यो या क्षोणी** भूमि **मूर्ध्नि सर्षप मन्यते** शिरसि निधाय सर्षपम् अल्पात्यल्प तुच्छ-तैल धान्य शून्यमिव मन्यते। **तम्** एतादृश नागाधिराजम्। **सा** माता देवकी रोहिणी वा। **सर्षपीभावयन्ती** न सर्षप असर्षप असर्षप सर्षप सपद्यमानेन भावित सर्षपी भावयन्ती। 'अभूत तद्भावे कृभ्वस्तियोगे सपद्यमाने कर्तरि च्वि'। सर्षप इव तुच्छ मन्य ती। **दध्रे** त शेषनाग स्वोदरे दधार।

उभयोरेकक्रियाधारणत्वाद् अन्योन्यमलकार ॥ शालिनीछन्द। मात्तौ गौ चेच्छालिनीवेदलोकै इति॥१९॥

**भूभारभूतभवभूरिभयानकेन्द्रप्रत्यर्थिकैतवमहीपतिवाहिनीभि**
**सप्लावितान्सकलसज्जनसाधुमार्गानुद्धर्तुमैहत—**
**विभुर्विधिनार्थित सन् ॥२०॥**

**अन्वय**—स्पष्टम्।

**व्याख्या—भूभारेति। विधिना अर्थित सन् विभु** ब्रह्मणा प्रार्थित स प्रभु। भुवोभारभूता भूभारभूता। भव जगत् प्रति ये भूरि भयानका। इन्द्रस्य प्रत्यर्थिन अभिघातिन, परिपथिन, कैतवा कपटिनो, महीपतयो राजान, वाहिनी सेना। [illegible] ये इन्द्रप्रत्यर्थिन, कैतवा महीपतयश्च तेषा वाहिन्य ताभि। **भूभारभूतभवभूरिभयानकेन्द्रप्रत्यर्थिकैतवमहीपति वाहिनीभि**। धराभारभूते द्रगत्रुराजसैन्यै। 'ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमू' इत्यमर। **सप्लावितान्** आक्रान्तान्। **सकलसज्जनाना साधुमार्गान्। उद्धर्तु** त्रातुम्। **ऐहत** ऐच्छन॥

प्रभोरवतारकारण दर्शयति। ब्रह्मणा प्रार्थित सन् जगत् प्रति भारभूतभयान कन्द्रद्विड्भिराक्रातान् लोकान् त्रातु स प्रभुरैच्छत् इतिभाव ॥ अनुप्रासशब्दालकार। वसततिलकावृत्तम्॥२०॥

**पीताकाचघटीवसभृतमषी श्रीकृष्णसधारणात्**
**गर्भे केतकगर्भगौरतनुरप्यन्तर्बहिर्देवकी ॥**
**कृष्णाङ्गी समदृश्यतेह न भयात्कसस्य सोऽपि ध्रुव**
**तच्छायाप्रतिबिम्बनस्य कलनात्कालस्य कालानल ॥२१॥**

**अन्वय** —अन्तर्बहि केतकगर्भगौरतनु अपि देवकी, गर्भे श्रीकृष्णसधारणात् सभृतमषी पीताकाचघटीव अन्तर्बहि कृष्णाङ्गी समदृश्यत। इहकसस्य भयात् न। (परच) कालानल सोऽपि तच्छायाप्रतिबिम्बनस्य कालस्य कलनात् ध्रुवम् (कृष्णाग अदृश्यत इतिशेष)

**व्याख्या —पीतेति।** **अन्तर्बहि** –बाह्याभ्यन्तरे। **केतकगर्भगौरतनुरपि**- केतकस्य पुष्पविशेषस्य गर्भोऽन्त प्रदेश तस्य इव गौरातनुर्मूर्तिर्यस्या सा। बाह्याभ्यन्तरे गौरवर्णाऽपि **देवकी** सा कृष्णमाता। **गर्भे श्रीकृष्णसधारणात्** गर्भाशये श्रीकृष्णस्य धारणात्। **सभृतमषी पीताकाचघटीव**-सभृता स्थापिता मषी यस्या सा सभृतमषी। कृष्णवर्णमषी पीतवर्णकाचघटे स्थापिता यथा दृश्यते तथा सा देवकी अन्तर्बहि **कृष्णागी** श्यामतनु **समदृश्यत** अभात्। **इह कसस्यभयात् न**-कसाद्यद्भय तस्मात् न। अस्मिन् समये तस्या श्यामलत्वाय कसभय कारण न इत्यर्थ। **सोपिकालानल** –स मृत्युरूपी अग्नि कस। य कस साक्षात् मृत्यु प्रति कालरूप सन् सोऽपि। **तच्छायाप्रतिबिम्बनस्य**–तस्य श्रीकृष्णस्य छाया काति तस्या प्रतिबिंबनम् अनुबिम्ब मडल तस्य। **कालस्य** मृत्यो। **कलनात्** प्रभावात् भयात् इत्यर्थ। तस्य श्रीकृष्णस्य सर्वत्रप्रतिरूपस्यकाल स्यप्रभावात्भयात्। **ध्रुव** निश्चयेन कृष्णाङ्गोऽभूदिति शेष। स कस कृष्णभयात् श्यामत्व गत इत्यर्थ। गौरागी देवकी कृष्णसधारणेना तर्बहि कृष्णागी समभवत्। पर कसो य स्वय मृत्युदाहकोऽवर्तत सोपी तस्य कालस्य कालरूपि कृष्णस्य छायामय रूप सर्वदा स्वनिकषैवकल्पयन् भयात् कृष्णवर्णत्व गत इति भाव॥ तद्गुणालकार॥ शार्दूलविक्रीडितवृत्तम्॥२१॥

**पूर्ण ब्रह्माधिवर्ष विधृतगुणमधिश्रावण चाधिताम्यत्–**
**पक्ष तत्राधिरोहिण्यधिरजनि तथाध्यष्टमिस्पष्टमिष्टम्॥**
**दातु सभ्द्योऽधिमेदिन्यधिमथुरमधिष्ठाय तेजोधिकारा-**
**गार किचाध्यरिष्टपरमधिशयनसर्वत प्रादुरासीत्॥२२॥**

**अन्वय** —अधिमेदिनि सद्भ्य इष्ट दातु, अधिवर्षम्, अधिश्रावणम्। अधिताम्यत् पक्ष। अध्यष्टमि। अधिरजनि। अधिरोहिणि च अधिमथुरम्। अधिकारागारम्। अध्यरिष्टम्। अधिशयनम्। कि च सवत तेजोधिष्ठाय, पर पूर्णब्रह्म तत्र स्पष्ट विधृतगुण प्रादुरासीत्॥

**व्याख्या—पूर्णमिति।** **अधिमेदिनि** मेदिन्याम् इति अधिमेदिनि इहात्र जगति। **सद्भ्य इष्टम्** इच्छित **दातु** सज्जनाना मनोरथतृप्त्यर्थम् इत्यर्थ। **अधिवर्ष** वर्षाया इति अधिवर्षम् वर्षतौं। अत्र सर्वत्र अव्ययीभावेन सप्तम्यर्थ-द्योतकोऽधि प्रयुक्त। 'अव्ययीभावश्चे'त्यनेन क्लीबत्वम्। यथा वर्षासु इति अधिवर्षम्। 'ह्रस्वोनपुसके प्रातिपदिकस्य' इत्यनेन ह्रस्वत्वम्, यथा अधिरोहिणि, अधिमेदिनि, इत्यादि। **अधिश्रावण** श्रावणमासे। **अधिताम्यत् पक्षम्।** कृष्णपक्षे। **अध्यष्टमि** अष्टम्या तिथौ। **अधिरजनि** रजन्या, रात्रौ। **अधिरोहिणि** रोहिणी नक्षत्रे। तथा च **अधिमथुर** मथुरायाम्। **अधिकारागार** कारागारे, बन्दिशालायाम्। **अध्यरिष्ट** सूतिकागृहे। **अधिशयन** शय्यायाम्। **किं च सर्वत** आसमतात् सर्वत्र। **तेजोधिष्ठाय** प्रभा प्रसार्य। **पर पूर्ण ब्रह्म** तत् सच्चिन्मात्र केवलानदस्वरूप निर्गुण निर्विकारम्। यद्यपि निर्गुण निर्विकार तदप्यत्र **स्पष्ट विधृत-गुण प्रादुरासीत्** त्रिगुणमय्या प्रकृत्या मायया सह गुणात्मभूत चतुर्भुजाद्यवयवात्मक साकारभूतम् अस्मिन् जगति नानारूपा लीला कर्तु सद्भ्य इष्ट दातु स परमात्मा सनातन प्रादुरासीत् साकार तस्थौ ॥ स्रग्धरावृत्तम् ॥२२॥

**स्ववशसभूतिमिमामपीह प्राग्वत्किमु श्रोष्यति दुर्मनीष ॥**
**इत्युग्रचिन्तार्धतनूकृतत्वा दिवोदगान्नष्टकलाष्टको ग्लौ ॥२३॥**

**अन्वय**—दुर्मनीष इमामपि स्ववशसभूतिम् इह प्राग्वत् श्रोष्यति किमु इति उग्रचिन्तार्धतनूकृतत्वात् इव ग्लौ नष्टकलाष्टक उदगात् ॥

**व्याख्या—स्ववश इति ॥** **दुर्मनीष** दुष्टा मनीषा इच्छा यस्य स। निजावश्यभाविप्राक्तननिवारणाय अर्थात् श्रीकृष्णान्निजमृत्युनिवारणाय कृतसकल्प तदर्थेऽन्यथाकर्तु प्रवृत्तोऽविवेकी कस इति भाव। **इमामपि स्ववशसभूतिम्** स्ववशस्य सभूतिरुत्पत्तिस्ताम्। यादवाश्चन्द्रवशीया इत्यस्मात् स्ववशस्य देवक्या अष्टमगर्भस्य श्रीकृष्णस्य उत्पत्तिम्। **इह** अस्मिन्नपि काले। **प्राग्वत्** यथा पूर्व सप्तगर्भाणा सभव तेन कसेन श्रुत तद्वत् अस्याष्टमगर्भस्यापि सभूति जन्म असौ **श्रोष्यति किमु** श्रवण करिष्यति किम्। गर्भोत्पत्तिकाल एव तस्य वधप्रवृत्तित्वात् श्रवणचिन्ताहेतुत्व भवति। **इति उग्रचिन्तार्धतनूकृतत्वात्** उग्रचिन्तया अर्धतनू अर्धाकृति कृता येन स उग्रचिन्तार्धतनूकृत'। तस्य भाव तस्मात्। महत्या चिन्तया स्वागम् अर्धकृशीकृतत्वादिव। **ग्लौ** चन्द्र। **नष्टकलाष्टक** नष्ट कलानामष्टक यस्य स। केवलमर्धचन्द्र **उदगात्** उदय प्राप ॥ ग्लौरिति

ग्लै हर्षक्षये इत्यस्मात् ग्लायतीति ग्लौ । 'ग्लानुदिभ्या डौ' इति उणादिसूत्रेण डौ प्रत्यय ।

शिशूना जन्मश्रवणे एव वधप्रवृत्तिरसौ अविवेकी कस मम वशोद्भवाना देवकी सभूताना सप्ताना जन्म यथापूर्वम् अनेन श्रुत तद्वत् अस्याष्टमस्यापि जन्म श्रोष्यति किमिति चिन्तया असौ षोडशकलात्मको ग्लौ चन्द्र ग्लानिस्वभावात् सकुचितोऽर्ध-तनूकृतोऽष्टकलात्मक उदगात् किम् इति उत्प्रेक्षते कवि । पुन प्रभोरवतारग्रहण यदष्टम्यामर्धरात्राावभवत् तत् चद्रस्याष्टकलात्मकेन प्रदर्शितम् ॥ वशस्थवृत्तम् ॥२३॥

**आद्यन्तयोर्देवपदाङ्किताभ्या व्यलोकि मध्योपि तथा पितृभ्याम्**
**यत्तादृशा पुण्यविशेषभाजा देव कुतोप्युज्झति नो सनीडम् ॥२४॥**

**अन्वय** —आद्यन्तयो देवपदाङ्किताभ्या पितृभ्या मध्योपि तथा व्यलोकि । यत् देव तादृशा पुण्यविशेषभाजा सनीड कुतोपि नो उज्झति ॥

**व्याख्या—आद्यन्तयोरिति** ॥ **आद्यन्तयो** तयोर्देवकीवसुदेवयोरभि-धानयोराद्यन्तभागयो । **देवपदाङ्किताभ्या** देव इति पदेन अङ्किताभ्या चिह्निताभ्या **पितृभ्या** देवकीवसुदेवाभ्या **मध्योपि तथा** तयोर्मध्यप्रदेशोपि तथैव देवपदाङ्कित **व्यलोकि** दृष्ट । अर्थात् देवक्या वसुदेवेन च तयोरुभयोर्मध्ये देव श्रीकृष्ण विहरन् सन् दृष्ट । **यत्** यस्मात् कारणात् । **देव** प्रभु **तादृशा पुण्यविशेष भाजाम्** ईदृशा पुण्यात्मना, पुण्यश्लोकाना **सनीड** सान्निध्य । **कुतोपि नो उज्झति** कुत्रापि स्थाने समये च कदापि न त्यजति । ईदृशा मध्ये स सदा वसतीत्यर्थ ॥ अर्थान्तरन्यासालकार ॥ इन्द्रवज्रावृत्तम् ॥२४॥

**सुपर्वतोषाय यथा यथा क्रम प्रभु स खर्वोऽपि पुरा स्म वर्धते ॥**
**पितृप्रियायाऽत्र महानपि स्वय लघुर्बभूवेन्दुरिव स्वपूर्वज ॥**

**अन्वय** —सुपर्वतोषाय स प्रभु यथा पुरा खर्वोऽपि यथाक्रम वर्धतेस्म । अत्र स्वय महानपि पितृप्रियाय लघु बभूव । स्वपूर्वज इन्दुरिव ॥

**व्याख्या —सुपर्वतोषायेति** । **सुपर्वतोषाय** सुपर्वणा देवाना तोषाय प्रमो-दार्थम् । **स प्रभुरीश्वर** । **यथा पुरा** येन प्रकारेण पूर्वस्मिन्नवतारे । **खर्वोऽपि**

लघुर्वामनोपि । **यथाक्रम** क्रममनतिक्रम्य शनै शनैर्**वर्धते स्म** विशालतामगमत् । **अत्र** तथैव अस्मिन्नवतारे । **स्वय महानपि** स्वतो विशालोऽपि । **पितृप्रियाय** पित्रो सतोषाय । **लघुर्बभूव** शिशुत्वमगमत् । **स्वपूर्वज इन्दुरिव** यथा चन्द्र । इन्दु शुक्लपक्षे क्रमशो वृद्धिं गत्वा पौर्णिमाया विशालोपि कृष्ण पक्षे क्रमेण लघुता गच्छति तद्वत् । स्वपूर्वज इति यादवाश्चन्द्रवशीया इति भाव । उपमामूलकदृष्टा तालकार ॥ वशस्थवृत्तम् । लक्षण—ज्तौन वशस्थ मुदीरितजरौ ॥२५॥

**असान्तताभागमुना दधेऽय कृष्णस्वरूपीह तु सान्तताभाक् ॥**
**मयेति मत्वा निगडो नु शौरेर्युक्त विशीर्णो बहुलोहजुष्ट ॥२६॥**

**अन्वय**—अमुना इह असान्तताभाक् कृष्णस्वरूपी अय दधे । मया तु सान्तताभाक् कृष्णस्वरूपि अय दधे, इति मत्वा नु शौरे निगड बहुलोहजुष्ट विशीर्ण । युक्तम् ॥

**व्याख्या—असान्तताभागिति ॥ अमुना** शौरिणा वसुदेवेन **इह** अस्मिन् कृष्णस्य गोकुल प्रति नयनसमये । **असान्तताभाक्** सकारेण सह अ तताम् अन्तावयवत्व भजतीति सान्तताभाक् नञ् समासेन असान्तताभाक् । 'भजोण्वि' **इत्यनेन** ण्वि प्रत्यय । अर्थात् सकारान्तत्वरहित, अकारान्त इति भाव । **अथ च** अन्तो नाश तस्य भावे तल् प्रत्यय स्त्रियाम् अन्तता । अन्ततया विनाशित्वेन सहिता सान्तता ता भजतीति । नञ असान्तताभाक् अविनाशी इत्यर्थ । **कृष्णस्वरूपी** साक्षात् स्वय श्रीकृष्ण एतादृश **अय** शुभावह सर्वतया शुभकारी **दधे** धृत । 'अय शुभावहो विधि' इत्यमर । गोकुल नयनाय निजमस्तके धृतवान् । **मया तु** मया निगडेन तु । **सान्तताभाक्** सकारान्तम् 'अयस्' इत्याकारक, मृद्घपदादिसयोगेन विनाशि, **कृष्णस्वरूपि** श्यामवर्णम् **अय** अश्मसार लोह इत्यर्थ । **दधे** धृतम् । 'लोहोऽस्त्री शस्त्रक तीक्ष्ण पिण्ड कालायसायसी' इत्यमर । **इति मत्वा नु** इति विचारेणैवकिम् । **शौरे** वसु देवस्य **निगड** श्रृखला । **बहुलोहजुष्ट** बहुलेन ऊहेन तर्कवितर्केण जुष्ट सेवित अथ च बहुना लोहेन अश्मसारेण जुष्ट सभूत । **विशीर्ण** विगलित । जुष्ट इति जुषी प्रीति सेवनयो जुषते । अथवा जुष परितर्कणे जोषति इत्यस्मात् क्त । विशीर्ण इति शॄ हिसायाम् इत्यस्मात् कर्तरि निष्ठा 'रदाभ्यामित्यादिना' निष्ठातस्य न । वसुदेवपादाभ्या विगलित । **युक्त** तत् योग्यमेव ॥ अयसात्मको निगड स्वापेक्षया विशिष्ट शुभावहम् अय वसुदेवमूर्ध्नि दृष्टा न्यूनगडत्वात् गलिततनुरिव वसुदेवपादाभ्या स्खलितोऽभूदिति भाव ॥ श्लिष्टपरपरित उत्प्रेक्षालकार ॥ उपेन्द्रवज्रावृत्तम् ॥२६॥

**कामक्रोधादिवक्रक्रकचसममहादष्ट्रयाद प्रचार–**
**व्यालोलद्भ्रान्तिचक्रोद्भटमपि न चिरात्स्वस्ति ससारवार्धिम् ।।**
**वेशन्ताल्पविधत्ते दधतमुत हृदोभ्यन्तरे य निगूढ**
**सौरी शौरि कथ त बहिरपि च तत सवहन्त रुणद्धु ।। २७ ।।**

**अन्वय** —हृदोभ्यन्तरे य उत निगूढ दधत, कामक्रोधादिवक्र-क्रकचसममहादष्ट्रयाद प्रचारव्यालोलद्भ्रातिचक्रोद्भटम् अपि ससार-वार्धि न चिरात् स्वस्ति वेशन्ताल्प विधत्ते त हृदोभ्यन्तरे बहिरपि च सवहन्त शौरि सौरी कथ रुणद्धु ।।

**व्याख्या—कामक्रोधादिति ॥ हृदोभ्यन्तरे** हृदयस्यान्तरे **यम् उत निगूढ दधत** ससारसागरतरणाभिलाषतया ध्यानधारणाभिमानसपूजनेन य सच्चिन्मात्र परमात्मानम् उत निगूढ दधत यथा स्यात् तथा अन्तर्मनसि गुप्त धारय त। **कामक्रोधादि-वक्रक्रकचसममहादष्ट्रयाद प्रचारव्यालोलद्भ्रान्तिचक्रोद्भटमपि** — वक्रा कुटिला क्रकचसमा करपत्रसदृशास्तीक्ष्णा महादष्ट्रा बृहद्दन्ता येषा यादसा नक्रादि-जलजतूना तानि । कामक्रोधादय एव वक्रक्रकचसममहादष्ट्रयादासि तेषा प्रचारेण सचारेण व्यालोलद्भिरितस्तत प्रसरद्भिर्भ्रान्तिचक्रैरावर्तै उद्भटम् उत्कट दुस्तरमित्यर्थ । एतादृशमपि **ससारवार्धिं** ससारसमुद्रम् । महाविकरालतीक्ष्णदष्ट्रप्रचलज्जलजन्तु सदृशकामक्रोधादिमनोविकारपरिपूर्णमपि ससारसागरम् । **नचिरात्** शीघ्र **स्वस्ति** यथासुखम् अनायासेनैवेत्यर्थ । **वेशन्ताल्प** वेशतस्य पल्वलस्य अल्प क्षुद्रभागम् । पल्वलसदृश क्षुद्रजलाशय **विधत्ते** करोति । सुखेनतरति पारगच्छतीत्यर्थ । 'वेशन्त पल्पल चाल्पसरोवापी तु दीर्घिका' इत्यमर । अत त परमात्मान हृदोभ्यन्तरे हृदयस्यान्तरे अन्तर्मनसि **हृदयाद्बहिरपि च** मूर्न्धि इति भाव । **सवहन्त** सम्यक् कौशल्येन धारयन्त **शौरि** वसुदेवम्। **सौरी** सूरो नाम सूर्य तस्य अपत्य स्त्री सौरी अपत्यार्थे अण्, अण्णन्तत्वात् 'ङीप्'। यमुना नदी 'कालिदी सूर्यतनया यमुना शमनस्वसा' इत्यमर । **कथ रुणद्धु** कथ निरोध कुर्यात्। विध्यर्थे लोट्। न कथमपीत्यर्थ ।। स्रग्धरावृत्तम् ।। २७ ।।

**शूरान्वयोऽयमलघून् विनिहत्य योधान्**
**जन्येषु मे जनकमप्यति रन्ध्रिताङ्गम् ।।**
**कर्ता कियत्यहमिहेति भयादिवासौ**
**मार्ग तयोरदिशद्गूढशरोत्करापि ।।२८।।**

**अन्वय**—अय शूरान्वय जन्येषु अलघून् योधान् विनिहत्य मे जनकमपि अतिरन्ध्रिताङ्ग कर्ता, इह अह कियती इति भयादिव असौ ऊढशरोत्कराऽपि तयो मार्गम् अदिशत् ॥

**व्याख्या—शूरेति**। **अय शूरान्वय** शूरस्य वसुदेवपितु अथ च सग्राम-शूरस्य अन्वय वश । 'कुलान्यभिजनान्वयौ' इत्यमर । असौ वसुदेव सग्राम निपुणवशज । **जन्येषु** रणाङ्गणेषु । 'युद्धमायोधन जन्यम्' इत्यमर । **अलघून्** महतो **योधान् विनिहत्य** हत्वा **मे जनक** मत्पितर सूर्यमपि **रन्ध्रिताग कर्ता** रन्ध्रित भेदित अग रविमण्डलमित्यर्थ यस्य स तम् । रणागणे हताना रविमडलस्य प्राप्तिरितिभाव । कर्ता करिष्यति । अनद्यतने लुट् । **इहाह कियती** तत्र का कथा मे सहश्या । नात्र मम सामर्थ्यमिति भाव । **इति भयादिव ऊढशरोत्करापि** ऊढ धृत स्वीकृत वा शर जल ऊढशरम् । ऊढशरम् उत् उन्नत कर्तु शील यस्या सा ऊढशरोत्करा । 'कृञोहेतुताच्छील्यानुलोम्येषु' इत्यनेन कृञ ट प्रत्यय । अर्थात् वीचीभि जलराशिभि परिपूर्णा । परपराभवे साधनसहितापि **असौ** कालिन्दी **तयो** वसुदेवकृष्णयो **मार्गम् अदिशत् (ददौ)** दत्तवती । कियती इति वतुप् । वस ततिल्क वृत्तम् ॥ २८ ॥

**एत्य चत्वरवितर्दिमर्थिनो लब्धमर्दितकपर्दिनो निधिम्**
**न्यस्य तत्र पतिता कपर्दिका गृह्लतोऽनुकृतिरापि शौरिणा ॥२९॥**

**अन्वय**—चत्वरवितर्दिम् एत्य अर्दितकपर्दिन लब्ध निधि न्यस्य, तत्र पतिता कपर्दिका गृह्लत अर्थिन अनुकृति शौरिणा आपि ॥

**व्याख्या—एत्येति** । **चत्वरवितर्दिम् एत्य** गृहागणवेदिकामागत्य । **अर्दितकपर्दिन**-अर्दित पूजित कपर्दी शकरो येन स अर्दितकपर्दी तस्य । शिवभक्तकुबेरस्य **लब्ध निधिं** प्राप्तसपत्तिम् । **न्यस्य** तत्र वेदिकाया त्यक्त्वा । प्रास्य इत्यर्थ । **तत्र पतिता कपर्दिका** कपर्दिका क्षुद्रशख (कौडीति भाषायाम्) **गृह्लत** ग्रहणशीलस्य । **अर्थिन** अर्थ प्रयोजन यस्य सोऽर्थी तस्य अर्थिन । याचकस्य । 'मार्गणोयाचकार्थिनौ' इत्यमर । **अनुकृति** अनुकरणम् । **शौरिणा आपि** श्रीकृष्णेन प्राप्ता । 'देवकीनन्दन शौरि श्रीपति पुरुषोत्तम' इत्यमर । आप्लृ व्याप्तौ इत्यस्मात् कर्मणि चिण् । कथम् ? यथापूर्वपद्ये वर्णित स सर्वशक्तिमान् सपत्तिमान् प्रभु पितृतोषाय निजमहत्व त्यक्त्वा तयो शिशुत्वमगमत् । तदेव अर्थान्तरेण पुनर्दर्शयति । हरे कृति तस्य याचकस्य सदृशी भाति यो कुबेरधन

प्राप्य, तद्धनमन्यस्य द्वारि सस्थाप्य, तत्र पतिता तुच्छकपर्दिका गृह्णाति । अर्थात् स्वमहत्व त्यक्त्वा हीनत्वमगीकरोति इति भाव ।। अथ च शौरिणा वसुदेवेन । शूरो नाम वसुदेवपिता तस्याऽपत्य पुमान् शौरि । 'अतइञ्' इतिसूत्रेण इञ प्रत्यय । तेन शौरिणा । वसुदेवस्य कृतिस्तस्य याचकस्य सदृशी भाति य कुबेरधन प्राप्याऽपि, तद्धनमन्यस्य द्वारि सस्थाप्य तत्र पतिता तुच्छकपर्दिका गृह्णाति, यत स वसुदेव तपआराधनेन महाप्रयासेन प्रभुसदृश श्रीकृष्णस्वरूप महद्धन नन्दस्य गृहाङ्गणे न्यस्य तत्र पतिता तुच्छकपर्दिकारूपिणीं कन्यामग्रहीदिति भाव ।। रथोद्धता वृत्तम् । रान्नराविह्लगौ रथोद्धता इति ॥२९॥

**यानैषीद्बलकेशवौ व्रजमहो जीवेश्वरौ प्राक्तन–**
**स्थानाद्देहमिवाचिराद्व्रजपति समोचित शोकत ।।**
**बन्धेशूरसुतोऽर्पितोपि च यथा विद्येत्यविद्येत्युभे**
**बिभ्रत्येव तनू स्फुट जयति सा माया यशोदात्मजा ।। ३० ।।**

**अन्वय**—या बलकेशवौ जीवेश्वरौ अहो प्राक्तनस्थानात् व्रज देहमिव अनैषीत् । विद्येत्यविद्येति उभे तनू स्फुट बिभ्रती एव । यथा व्रजपति शोकत अचिरात् समोचित, अपि च शूरसुत बन्धे अर्पित, सा यशोदात्मजा माया जयति ।।

**व्याख्या—येति ॥ या** माया **बलकेशवौ** रामकृष्णौ **जीवेश्वरौ** जीवशिव-रूपिणौ । रामकृष्णयोर्जीवेश्वरत्व प्रसिद्धम् । **अहो** इति आश्चर्ये । **प्राक्तनस्थानात्** दैवनिर्दिष्टस्थानात् । जीवेश्वरौ यद्यपि निर्गुणत्वात् प्राक्तनान्मुक्तौ तदपि यदा गुण-सभृतौ बलकेशवरूपिणौ तदा प्राक्तनार्पितौ । जनसाधारणवदिति भाव । अत विधिनिर्दिष्टस्थानात् मथुरारूपात् ब्रह्मपदाच्च । **व्रजं** गोकुल **देहमिव** निर्गुणस्वरूपात् गुणावलिप्तशरीरावयवै साकारतामिव **अनैषीत्** प्रापयामास । पुन या माया **विद्या इति अविद्या इति उभे तनू** द्वौ देहौ । **स्फुट बिभ्रती एव**—विद् ज्ञाने इत्यस्मात् 'सज्ञाया समजनिषद निपत मन विद षुञ् शीङ् भृञिण' इति सूत्रेण **क्यप्** । विदन्ति जानन्ति अनया सा विद्या अर्थात् ससृतिबन्धान्मुक्तिरूप ज्ञान मया ज्ञायते, जन्यते वा सा विद्या एतादृक् तनुर्देह । तथा ससृतिबन्धरूप यदज्ञान तत् ज्ञानमिति मन्यमानता सा अविद्या एतादृगपि तनुर्देह इति उभे तनू देहौ स्फुट यथा स्यात् तथा प्रव्यक्त प्रत्यक्ष स्वयमेव बिभ्रती दधती । कथ तदुदाहरति । **यथा व्रजपति** नन्द **शोकत** पुत्राभावरूपससृतिबन्धात् **अचिरात्** शीघ्र **समोचित** मुक्त. कृत कृष्णप्रापणेनेति भाव, विद्याया. प्रभावात् । **अपि च शूरसुत** वसुदेव

पूर्व श्रीकृष्णप्रापणान्मुक्तोऽपि कृष्णस्य नन्दगेहे सत्यागेन अज्ञानमये शोकरूपे ससृति-**बन्धे** तथा पुनश्च कारागारे निगडबन्धे **चार्पित** स्थापित, अविद्यारूपिण्या मायाया प्रभावात्। अत विद्याऽविद्यारूपा माया एव निमित्त सर्वत्र इति भाव। एतादृशी सा यशोदात्मजा माया जयति प्रभवति, सर्वोत्कृष्टत्वेन वर्तते, अधुनापि विभिन्नस्थाने पूज्यरूपेण वर्तते इति भाव ॥ शार्दूलविक्रीडित छन्द ॥३०॥

**स्वर्लोकानन्दमूर्ध्नं पदमुपरि ददद्भोजराजे कर च**
**ज्यायोमित्रस्य शौरे श्रुतिमपि च शिर सद्वचस्याङ्घ्रियुग्मे ॥**
**नन्दो दृष्टि च धर्मे हृदयमपि सुतेऽध्यूढसर्वागदाना—**
**वेशोपि क्वापि नादादनभिमुखतयेवात्मन पृष्ठमेकम् ॥३१॥**

**अन्वय**—स्वर्लोकानन्दमूर्ध्नं उपरि पद ददत्, भोजराजे कर च, ज्यायोमित्रस्य शौरे सद्वचसि श्रुतिम् अपि च अङ्घ्रियुग्मे शिर, धर्मे दृष्टि च, सुते हृदयमपि ददत् नन्द अध्यूढसर्वागदानावेश अपि आत्मन एक पृष्ठम अनभिमुखतया इव क्वापि नादात् ॥

**व्याख्या—स्वर्लोकेति। स्वर्लोकानन्दमूर्ध्नं उपरि पद ददत्** स्वर्लोकस्य आनन्द तस्य मूर्धा शिरोभाग परमावस्था तस्य। स्वर्लोकप्राप्तिरूपानदस्यापि उपरि पद चरण ददत् दाता। ददिति दाण दाने इत्यस्मात् शत्रन्त 'नाभ्यस्ताच्छतु' इत्यनेन नुम् निषेध। श्रीकृष्णसदृशपुत्रप्रापणानन्देन आत्मन स्वर्लोकस्यापि उच्चतर स्थान प्राप्तमिति मन्यते स्म इति भाव। **भोजराजे** कसे **कर** वार्षिक देय ददत् अथ च कर हस्त च। **ज्यायोमित्रस्य** ज्याय मित्र ज्यायोमित्र तस्य। वयसा पदेनापि च श्रेष्ठसुहृद। 'वषीयान् दशमीज्यायान्' इत्यमर। **शौरे** वसुदेवस्य **सद्वचसि** हितकारकबोधने—नात्रस्थेय बहुतिथमित्यादिभाषणे, **श्रुतिं** कर्ण ददत् श्रुतवानित्यर्थ। **अपि च अङ्घ्रियुग्मे शिरो ददत्**—वसुदेवस्य श्रेष्ठत्वात् तस्य चरणयुगले आदरेण नतमस्तकोऽभवत्। **धर्मे दृष्टिं ददत्**—धर्माचरणेनैव सकटानि निवारयिष्यसीत्याकारके वसुदेवेन सूचितवाक्योपरि दृष्टि ददत्। अर्थात् धर्मेक्षणे निश्चयधारणा दधत् इत्यर्थ। **सुते** श्रीकृष्णोपरि **हृदय ददत्** सुत प्रति मनसि प्रेमबाहुल्य दधदित्यर्थ। एतादृश दाता **नन्द, अध्यूढसर्वागदानावेश** अध्यूढ स्वीकृत (आत्मन) सर्वागस्य सकलावयवस्य दान तस्य आवेशोभिनिवेशो येन स। नन्द सकलावयवसमर्पणे आसक्त सन्नपि **आत्मन• एक पृष्ठ** पृष्ठभागम् **अनभिमुखतया इव** सम्मुखे अविद्यमानत्वादिव **क्वापि नादात्** न ददौ। पुत्रोत्सवे कस्मिन्नपि उचितकर्मणि तिर्यङ्मुख उदासीनो वा नाभूदितिभाव। स्रग्धरावृत्तम् ॥३१॥

**अहह बत दुरात्मप्रेषिता द्राक् शिशूना-**
**मसुविदलनकामा पूतना नूतनानाम् ॥**
**नरकरिपुकरैष्यन्मृत्युत प्रागपि स्वा-**
**त्रिदशवरवधूयन्त्यभ्ययान्नन्दगोष्ठम् ॥३२॥**

**अन्वय**—अहह बत ! दुरात्मप्रेषिता नूतनाना शिशूना द्राक् असुविदलनकामा पूतना नरकरिपुकरैष्यन्मृत्युत प्रागपि स्वा त्रिदशवरवधूयन्ती नन्दगोष्ठम् अभ्ययात् ॥

**व्याख्या**—**अहह बत** ! इति महति खेदे । **दुरात्मप्रेषिता** दुरात्मना कसेन प्रेषिता । दुरात्मना इत्यनेन शिशूना प्राणहरणेन स्वप्राणरक्षणपरतया दुरात्मत्वमिति स्पष्टम् । **नूतनाना शिशूना** सद्योजाताना बालकाला **द्राक्** शीघ्रम् **असुविदलनकामा** असूना प्राणाना विदलन विनाश कामयते या सा । दल विशरणे इत्यस्मात् ल्युट् । नवीनशिशूना प्राणनाशनमिच्छन्ती पूतना राक्षसी । **नरकरिपुकरैष्यन्मृत्युत प्रागपि** नरकरिपो श्रीकृष्णस्य करात् एष्यतो भविष्यतो मृत्यु तस्मात् तसि । नरकरिपो इत्यनेन श्रीकृष्णस्य नाममात्रग्रहणेन महापातक्यपि पीडा नानुभवति किं पुन तस्यैव करेण मृतानाम् । तेषामेवतु अवश्य भाविनी स्वर्गप्राप्तिरिति ध्वन्यते । तस्मादेवहेतो तत्पूर्वमेव **स्वाम्** आत्मान **त्रिदशवरवधूयन्ती** वरा श्रेष्ठा वधू वरवधू । वरवधूरिव आचरति वरवधूयति । 'उपमानादाचारे' इत्यनेन क्यच् । तस्मात् शतृ वरवधूयन् स्त्रीत्वविवक्षायाङीप् वरवधूयन्ती । त्रिदशाना देवाना वरवधूयन्ती त्रिदशवरवधूयन्ती देवागनानामिवाचरन्ती सती मोहिनीरूपेणेति भाव । **नन्दगोष्ठ** गोकुल **अभ्ययात्** आजगाम ॥ मालिनीवृत्तम् ॥३२॥

**बहुरक्षण यदि भवेदवद्यमप्यनुसर्यमक्षिविनिमील्य कोविदै ॥**
**इति बोधयन्निव निशाचराङ्गना पिहितेक्षण क्षणमहन्त्स शास्त्रकृत्**
**॥३३॥**

**अन्वय**—'यदि बहुरक्षण भवेत्, कोविदै अक्षिविनिमील्य अवद्यमपि अनुसर्यम् ।' इति बोधयन् इव स शास्त्रकृत् पिहितेक्षण निशाचरागना क्षणम् अहन् ॥

**व्याख्या**—**बहुरक्षणमिति** । **यदि बहूना रक्षण क्षेम भवेत्** तर्हि **कोविदै** पण्डितै । **अक्षिविनिमील्य** नेत्रपिधान कृत्वा, विनाविचारेणैवेत्यर्थ । **अवद्यमप्यनुसर्यम्** गर्ह्यमपिकर्म सपादनीयम् । अवद्यम् 'अवद्यपण्यवर्या-

गर्ह्यपणितव्यानिरोधेषु ' इत्यनेन ' यतो ' निपातनम् ।। **इति बोधयन्निव** इति शास्त्रमनुसरन्निव । **स शास्त्रकृत्** स्वय शास्त्रकृत् पण्डित । ' सुकर्म पापमन्त्रपुण्येषु कृञ ' इत्यनेन कृञ क्विप् । ह्रस्वस्य पिति कृति तुक् । शास्त्र कृतवान्, शास्त्रकृत् इति सिध्यति । स पडित श्रीकृष्ण । **पिहितेक्षण** पिहिते निमीलिते ईक्षणे नेत्रे येन स । **निशाचराङ्गनाम्** । अक्षिनिमीलन कृत्वा राक्षसीं पूतना **क्षणम् अहन्** क्षणादेवावधीत् ।

स्त्रीवध अवद्योगर्ह्यमेव किन्तु पूतना यद्यपि स्त्री तदपि राक्षसीभावात् तस्या वधो बहूना क्षेमाय भवतीतिविचार्य स शास्त्रकृत् श्रीकृष्ण तस्या स्त्रीभावोपरि अक्षिनिमीलन कृत्वा तामहन्निति भाव ।। अर्थान्तरन्याससंसृष्टोत्प्रेक्षा । मञ्जुभाषिणी वृत्तम्-यथा मञ्जुभाषिणी सजौसजौग इति ।।३३।।

**पर सहस्रासुरवश्यभोजी स्तन्येन तस्या किलकृष्णकाल ।।**
**प्राणाहुतीना सहपञ्चकेन मन्येऽमृतोपस्तरण चकार ।।३४।।**

**अन्वय** —पर सहस्रासुरवश्यभोजी कृष्णकाल तस्या स्तन्येन प्राणाहुतीना पचकेन सह अमृतोपस्तरण चकार किल मन्ये ।।३४।।

**व्याख्या—पर इति ।।** सहस्रात् परमिति पर सहस्र, पर सहस्र च ते असुराश्च पर सहस्रासुरा तेषा, पर सहस्रासुराणाम् । वशेभवा वश्या तेषा भोजी । भोक्तु शीलम् अस्य भोजी । सुप्यजातौ इत्यनेन णिनि । पर सहस्रासुराणा वश्यभोजी **पर सहस्रासुरवश्यभोजी** अगणित दैत्यसहारक । **कृष्णकाल** कृष्ण एव कालोमृत्यु । मृत्युरूप कृष्ण । **तस्या** पूतनाया । **स्तन्येन** स्तने भव स्तन्यम् । इति यत् । तेन स्तन्येन दुग्धेन । **प्राणाहुतीना पचकेन सह** प्राणापानव्यानोदानसमानै पचभि सह । **अमृतोपस्तरण** आचमन **चकार** । तस्या स्तन्येन सह एकैकप्राण शोषयामास । **किल मन्ये** इत्यह खलुनिश्चयेन मन्ये इति उत्प्रेक्षा ।। उपेन्द्रवज्रावृत्तम् ।। उपेन्द्रवज्राप्रथमेलघौसा जतजगग ।।३४।।

**काव्यालकारविद्याव्यसनपरवशेवाद्य सा प्रत्यनीका-**
**लकारस्य स्मरन्ती व्रजधरणिरुहानात्रिगव्यूत्यभाक्षीत् ।।**
**मूर्ति स्वा सप्रसार्य द्रुतमपि च पर रूपमाक्षिप्य शाब्द-**
**शास्त्र व्याकुर्वतीव प्रलयघनरवा बिभ्रती पूर्वरूपम् ।।३५।।**

**अन्वय** —काव्यालकारविद्याव्यसनपरवशा इव सा अद्य प्रत्य-नीकालकारस्य स्मरन्ती, प्रलयघनरवा शाब्द शास्त्र व्याकुर्वती इव,

द्रुतमपि च परूपम् आक्षिप्य, स्वा मूर्त्ति सप्रसार्य पूर्वरूप बिभ्रती, व्रजधरणिरुहान् आत्रिगव्यूति अभाक्षीत् ।।

**व्याख्या —का येति ॥** काव्यालकारयोविद्या ज्ञान तस्या व्यसन व्यासग तेन या परवशा परतत्रा अधीना वा । सा । **काव्यालकारविद्याव्यसनपरवशा ।** अलकारपूर्वककाव्यशास्त्रज्ञा विदुषीव सापूतना । कथ ? । काव्यस्य दैत्यगुरो शुक्रस्य या अलकारविद्या भूषणभूतकपटविद्या माया इत्यर्थ । तस्या व्यसनेन परवशा । मायाविद्याया चतुरा इत्यर्थ । **सा अद्य प्रत्यनीकालकारस्य स्मरन्ती**— यथा विद्वान् काव्यशास्त्रविवेचने प्रत्यनीकालकारस्य स्मरण करोति तथैव सा पूतना कपटविद्याया प्रवीणा अद्य प्रत्यनीकस्य बलवत शत्रो श्रीकृष्णस्य अलकारस्य— पराक्रमस्य स्मरती । प्रतिपक्ष बलवन्त ज्ञात्वा प्रत्यनीकालकार ध्यायन्ती । यथा ‘ प्रतिपक्ष मशक्तेन प्रतिकर्तु तिरस्क्रिया । या तदीयस्य तत्स्तुत्यै प्रत्यनीक तदुच्यते ’। इति ॥ पुनश्च **प्रलयघनरवा** स्वातसमये कल्पातमेघगर्जननिनादा । **शाब्द शास्त्र व्याकुर्वतीव**—शाब्द शास्त्र व्याकरणशास्त्र व्याकुर्वती प्रकट कुर्वतीव । **पर रूपमाक्षिप्य** मोहिनी रूपेण वात्सल्यरसात्मक **‘ कृष्णेहि ’** इत्यत्र ( **‘ कृष्णायों-नमो** ’वा ) ‘ ओमाडोश्च ’ इति व्याकरणसूत्रेण सिद्ध पररूपम् आक्षिप्य आक्षेप कृत्वा त्यक्त्वा । अथ च मोहिनीरूपस्य अस्वीकार कुवती । **स्वा मूर्त्तिं सप्रसार्य पूर्वरूप बिभ्रती** निज पूर्वरूप राक्षसीरूप विस्तार्य । पुन ‘ एड पदान्तादति ’ इतिसूत्रेण सिद्ध पूर्वरूप **‘ हरेऽव ’** इति बिभ्रती । स्वातसमये ‘ हरे अव ’ हे विभो पाहि इति स्मरती, कितु प्रत्यनीकालकारस्मरणेन **व्रजधरणिरुहान् आत्रिगव्यूति अभाक्षीत्**—श्रीकृष्णसबधिव्रजवृक्षान् त्रिगव्यूतिपर्यन्त ध्वसयती पपात । भञ्जो आमर्दने, लुडि अभाक्षीत् नाशयामास इत्यर्थ । आगव्यूते आगव्यूति । ‘ आड् मर्यादाभि विध्यो ’ इत्यनेन अव्ययीभाव । ‘ गव्यूति स्त्री क्रोशयुगम् ’ इत्यमर । उपमालङ्कारो त्प्रेक्षा ससृष्ट ॥ स्रग्धरावृत्तम् ॥३५॥

**मोक्षवरीतुमघमूर्त्तिरिय मुकुन्द प्राप्यात्मनस्तु परिपूर्णमनोरथापि ।।**
**प्रासीसरत्करपद स्वजनस्यमुक्त्यै लाभेन्धनेन समदीप्यतिलोभवह्नि**
॥३६॥

**अन्वय** — इय अघमूर्त्ति मुकुद प्राप्य आत्मन परिपूर्णमनो-रथाऽपि, स्वजनस्य मुक्त्यै तु मोक्ष वरीतु करपद प्रासीसरत् । लाभेन्धनेन अतिलोभवह्नि समदीपि ॥

**व्याख्या—मोक्षमिति । इयमघमूर्त्ति** एषापापरूपा पूतना । **मुकुन्द प्राप्य** ईश्वर श्रीकृष्ण लब्ध्वा, ईश्वरस्य सानिध्येनेत्यर्थ । **आत्मन परिपूर्ण-**

**मनोरथाऽपि** स्वाभिलाषान् पूर्णत्व नीत्वा, स्वय मुक्ति प्राप्तापि इत्यर्थ । **स्वजनस्य मुक्त्यैतु** स्व परिवारस्य मुक्त्यर्थमपि । **मोक्ष वरीतु** याचितु । **करपद प्रासीसरत्** हस्तौपादौ प्रातनोत् । मृत्युपक्षे सापूतना करौ च पदौ च करपदम् । 'द्वद्वश्च प्राणितूर्यसेनागानाम्' इत्यनेन समास एकवत् । करपदौ प्रसार्य मृता पपात । **लाभेन्धनेन** लाभरूपिकाष्ठप्रापणेन, **अतिलोभवह्नि** तृष्णाग्नि **समदीपि** प्रजज्वाल । यथा यथा लाभ तथा तथाऽधिक लोभोवर्धते इतिभाव । अदीपि इति कर्मणिच्चिण् ॥ अर्थान्तरन्यासालकार । वसततिलकावृत्तम् ॥३६॥

**ससक्तेन हि चोज्झितेन पशुभिरह्नाय गोसज्ञितै–**
**र्मूत्रेणस्नपनादरस्त्रिपथगातीर्थास्पदाघ्रेर्भयात् ॥**
**पादाब्जस्पृशदिन्दिरालिकलसन्नाभे स नाभेदि किं–**
**भाले गोपकुटुम्बिनीपदमृदा सग शिशोर्वैद्रुतम् ॥३७॥**

**अन्वय**—भयात् अह्नाय गोसज्ञितै पशुभि उज्झितेन मूत्रेण, गोपकुटुबिनीपदमृदा ससक्तेन हि सग स्नपनादर त्रिपथगातीर्थास्पदाघ्रे पादाब्जस्पृशदिन्दिरालिकलसन्नाभे शिशो भाले स द्रुत न अभेदि किम् ॥

**व्याख्या—संसक्तेनेति ॥ भयात्** मरणसमये पूतनाकृतप्रलयान्तरवेणोत्पन्न भय तस्मात् । भयादिति ल्यब् लोपे पचमी । भय प्रकल्प्य । **अह्नाय** झटिति **गोसज्ञितै** धेनुसज्ञै अर्थात् गोभि **पशुभि उज्झितेन** त्यक्तेन **मूत्रेण** प्रस्रावित मलेन । **गोपकुटुबिनीपदमृदा ससक्तेन** गोपाना बल्लवाना कुटुबिन्य समस्त कुटुबव्यापृतस्त्रीवर्ग तासा पदाना मृद् धूलि तया । ससक्तेन ससृष्टेन । अर्थात् गोपीना पदपाथे या धूलि तया ससृष्टेनगोमूत्रेण । **हि** निश्चये । **सग** सग कृत । **स्नपनादर** स्नपनस्य स्नानस्य आदर स्वीकार । **त्रिपथगातीर्थास्पदाघ्रे** त्रिपथगाया भागीरथ्या तीर्थस्य पवित्रजलस्य आस्पद स्थान अघ्रि चरण यस्य स तस्य । एतादृश विष्णो श्रीकृष्णस्य । 'भागीरथी त्रिपथगात्रिस्रोताभीष्मसूरपि' इत्यमर । पुन **पादाब्जस्पृशदिन्दिरालिकलसन्नाभे** इदिराया लोकमातूरमाया अलिके ललाटे (ललाटमलिक गोर्धिरूर्ध्वेदृग्भ्याभ्रुवौस्त्रियौ' इत्यमर ) लसन्ती या नाभि, तिलककरणेन शोभमाना या कस्तूरिका । 'क्षत्रियेपि च नाभिर्ना सुरभिर्गवि च स्त्रियाम्' इत्यमर । सा इन्दिरालिकलसन्नाभि । पादाब्जयो स्पृशन्ती इन्दिरालिकलस-न्नाभि यस्य स तस्य । **शिशो** बालकस्य अर्थात् श्रीकृष्णस्य । भाले मस्तके । **स** गोपीपदरजमिश्रितगोमूत्रस्नपनादर स्नानाचार **न अभेदि किम्** अर्थात् भिन्नत्व

न नीतवान् किम् ॥ पूतनामरणानतर बालशिशु श्रीकृष्ण तस्या पूतनाया पुरोभागा दाहरन्ती न-दागना मृतकस्पर्श दोषवारणाय तस्या राक्षस्या प्रलयरवेणभीता गोवत्सा तेषा मूत्रक्षरणेन युक्त तथा च गोपीपदरजसा ससृष्टम् एव मूत्रमिश्रितपासु तस्य पृथुकस्य श्रीकृष्णस्य ललाटे दत्तवती अगरागरूपेण इति भाव । स तोकोऽपि त्रिपथगा तीर्थास्पदाघ्रि, तथा च पादाब्जस्पृशदिन्दिरालिकलसन्नभि, अत गोपीना पदधूलि गोवत्साना भयजनितमूत्रक्षरणेन मिश्रिता जाता। तेन मूत्रमिश्रितपासुना कृततिल्क स्नानादर नाभेदि अपि तु अभेदि। अथवा न अभेदि भिन्नत्व न नीतवान् किम् ? तस्यार्भकस्य स्वत तीर्थपादत्वात् तथा इन्दिरातिल्ककस्तूरी ससृष्टत्वात् नापि पूतिगधि । इति श्लोकस्य स्पष्टो भाव । शार्दूल विक्रीडितम् ॥ स्वभावोक्तिरलकार ॥३७॥

**अहो महीयस्तनुदाहनक्षम क्ववेन्धन स्यादिति सभ्रमाकुला ॥**
**द्रुमच्छिद वीक्ष्य तु ता न गोदुहो विषादकालेऽपि मुद व्यमुक्षत ॥३८॥**

**अन्वय** —'अहो ! महीयस्तनुदाहनक्षमम् इधन क्व वा स्यात्' इति ता द्रुमच्छिद वीक्ष्य तु सभ्रमाकुला गोदुह विषादकालेऽपि मुद न व्यमुक्षत ॥

**व्याख्या—अहो इति** ॥ '**अहो**' इति आश्चर्ये। **महीयस्तनुदाहनक्षममिन्धन क्व वा स्यात्** महीयस तनोर्दाहनक्षम तत्। अस्या पूतनाया महादेहस्य दाहनाय परिपूर्णम् इन्धन कुत्र लभ्येत' इति **ता द्रुमच्छिद वीक्ष्य तु** द्रुमान् छिन्नवतीति द्रुमछित्। छिदिर्द्वैधीकरणे इत्यस्मात् क्विप् प्रत्यय । ता द्रुमच्छिदम् व्रजधरणिरुहान् ध्वसयन्तीं ता पूतना दृष्ट्वा। **सभ्रमाकुला गोदुह** – आश्चर्यचकिता गोपाला । **अस्मिन् विषादकाले अपि मुद हर्ष न व्यमुक्षत** नात्याक्षु, अपि तु हर्ष लेभिरे इत्यर्थ ॥ द्रुमनाशोत्थविषादोत्पत्तावपि दाहक्रियार्थ तया स्वय छिन्न काष्ठसचय दृष्ट्वा ते गोपाला काष्ठसचयायासपरिहारात् प्रसन्ना बभूवुरितिभाव ॥

प्रतिकूलमनुकूलानुबधित्वात् अनुकूलमलकार ॥ वशस्थवृत्तम् ॥३८॥

**अतीत्य तत्तत्पदमुच्चदेशभाग्बकीव धूम्यापि तदीय देहजा**
**तुतोद गाढ व्यवधामबिभ्रतीस्तदेन्द्रचन्द्रादिदृशो भृशोज्वला ॥३९॥**

**अन्वय** —बकीव उच्चदेशभाक् तदीयदेहजा धूम्यापि तत्तत्पदम् अतीत्य। तदा व्यवधाम् अबिभ्रती भृशोज्वला इन्द्रचन्द्रादिदृश. गाढ तुतोद ॥

**अपातयत्** प्राक्षेपयत् । **इदम्** अन एक केवल **स्वस्थितम्** आत्मोपरिगत **भाण्डजात** भाण्डसमूह **विध्वस्तराजद्रस** विध्वस्ता प्रक्षिप्ता नष्टा वा राजन्तो विलसन्तो रसा दधिदुग्धादयो यस्य स तम् । **नाकरोत्** । स श्रीकृष्ण स्वपदोत्क्षेपणेनानेन न केवल स्वस्थित रसभाण्ड निरसमकरोत् **किन्तु अस्य** श्रीकृष्णस्य **औत्थानिकोत्थम्** उत्थानकालेभव औत्थानिकम् । 'कालाट्ठञ्' इत्यनेन 'ठञ्' । औत्थानिकात् उत्थ जातम् औत्थानिकोत्थम् । उत्थानकर्मप्रयुक्तम् **महम्** उत्सवम् । 'मह उद्धवउत्सव' इत्यमर । **अपि** तदुत्सवस्य वैरस्य जनयामास । अथ च अस्य औत्थानिकोत्थ स्वस्थित स्व स्वर्लोके स्थितम् । 'खर्परे शरि वा विसर्गलोपो वक्तव्य' इति वार्तिकेन विसर्गलोप । स्वर्लोके देवादिभि क्रियमाण महम् उत्सवमपि विध्वस्तराजद्रस विरस रसशून्यमकरोत् । **पतितस्य** स्थानभ्रष्टस्य, पातयितव्यदोषयुक्तबहिष्कृतस्य वा । **अरसस्य** रसविहीनस्य प्रेमरहितस्य च शकटाऽसुरस्य इतिभाव **तत्** वैरस्यकरण क्षम युक्त योग्यमेव ॥ स्रग्धरावृत्तम् ॥४०॥

**प्राप्तैर्गोपैस्तदूढैर्ग्रहसुरपितृभि कल्पितारिष्टशङ्का**
**तत्तत्सस्पृह्यदध्यक्षतकुशपयसा सचयेनाञ्चितस्य ॥**
**प्राग्वत्तस्याहितस्य क्षणगलितरसो विष्णुपादाब्जविद्ध–**
**ब्रह्माण्डोद्भित्तनिर्यच्छुचिविबुधधुनीधारया स्पर्धते स्म ॥४१॥**

**अन्वय**——ग्रहसुरपितृभि तदूढै कल्पितारिष्टशङ्का प्राप्तै गोपै तत्तत्सस्पृह्यदध्यक्षतकुशपयसा सचयेन अञ्चितस्य, प्राग्वत् आहितस्य, तस्य क्षणगलितरस विष्णुपादाब्जविद्धब्रह्माण्डोद्भित्तनिर्यच्छुचिविबुधधुनीधारया स्पर्धते स्म ॥

**व्याख्या—प्राप्तैरिति ॥ ग्रहसुरपितृभि** ग्रहा रविचन्द्रादिनवग्रहा सुरा इन्द्रादिदेवाश्च पितर प्राप्तपञ्चत्वपूर्वजाश्च ते, तै । **तदूढै** तेन शकटेन ऊढैर्धृतै अर्थात् शकटारूढैर्ग्रहसुरपितृभि सद्भि । शकटमारुह्येत्यर्थ । **कल्पितारिष्टशङ्का** वितर्केणघटितानिष्टसशय । **प्राप्तैर्गोपैर्नन्दाद्यैर्व्रजौकसै । तत्तत्सस्पृह्यदध्यक्षतकुशपयसाम्** तेषा तेषा ग्रहादीना सस्पृह्याणा सम्यक् स्पृहणीयाना यथाकाममित्यर्थ । दध्यक्षतकुशपयसा **सचयेनाञ्चितस्य** पूजितस्य । दध्यक्षतकुशाबुभि तेषा तेषा ग्रहादीना यथाकाम सपूज्य इत्यर्थ । **प्राग्वत्** यथापूर्वम् । **आहितस्य** स्थापितस्य । श्रीकृष्णपदाहतेन उद्गतशकट यथास्थान स्थापयित्वा इत्यर्थ । **तस्य** शकटस्य । **क्षणगलितरस** क्षणेन पूजाविधानेन गलित च्युत रस दधिदुग्धादिमिश्रितशुभ्रपूजाजल स । **विष्णुपादाब्जविद्धब्रह्माण्डोद्भित्तनिर्यच्छुचिविबुधधुनीधारया स्पर्धते स्म** विष्णो त्रिविक्रमस्य पादाब्जेन चरणकमलेन विद्धात्

आहतात् ब्रह्माण्डस्य उद्भित्तात् उर्ध्वछेदनात् निर्यत्या निर्गच्छन्त्या शुचा श्वेतया पवित्रया च विबुधाना देवाना धुनी सरित् तस्या गगाया धारया सपातेन स्पर्धामकरोत् विजिगीषामैच्छत् ।

स्रग्धरावृत्तम् । अतिशयोक्तिरलकार ॥४१॥

**शङ्का पुनर्ग्रहपरामथबिभ्रतीव**
**चेलाचलेन मरुतापि दुरासदेन ।**
**सद्य सुत पिदधती किल तस्य साध्वी**
**नन्दाङ्गना स्तनमदाद्वदनारविन्दे ॥४२॥**

**अन्वय** – अथ मरुतापि दुरासदेन चेलाचलेन सुत पिदधती, पुन ग्रहपरा शका बिभ्रतीव साध्वी नन्दाङ्गना सद्य तस्य वदनारविन्दे स्तनम् अदात् ॥

**व्याख्या—शङ्कामिति** । **अथ** राक्षसी पूतनावधानतरम् । **मरुतापि** वायुनापि । **दुरासदेन चेलाचलेन**–क्षेपणासमर्थेन स्ववस्त्रोपान्तेन । **सुत** श्रीकृष्ण **पिदधती** आच्छादयन्ती । **पुनर्ग्रहपरा शका बिभ्रती इव** पुनरपि दुष्टग्रहजनितबाधाया कारणेन घटितापमृत्युयोग सुत प्रति तर्कयन्तीव । **साध्वी नदाङ्गना** यशोदा **सद्य** स्तत्कालमेव । **तस्य वदनारविन्दे** श्रीकृष्णस्य मुखकमले । **स्तनमदात्** दुग्ध पानार्थं त प्रेरयामास ॥

स्वभावोक्ति ससृष्टोत्प्रेक्षालकार । वसततिलकावृत्तम् ॥४२॥

**प्रायच्छ सुदृढ विचार्य हृदये प्राक् चीर्णभक्ते फल**
**स्वीयबालतृणीकृतामृतसुख बाल्यात्मक वैभवम् ॥**
**अस्यै स्तन्यपय पिबेन तु मया कि देयमित्याकुलो–**
**ऽपश्यत्सर्वविदप्यसौ ननु हसन्मातुर्मुख विस्मयात् ॥४३॥**

**अन्वय** —चीर्णभक्ते फल हृदये सुदृढ विचार्य बालतृणी कृतामृतसुख स्वीय बाल्यात्मक वैभव प्राक् प्रायच्छम् । स्तन्यपय पिबेन तु मया अस्यै किं देयम् इति आकुल असौ सर्वविदपि हसन् मातुर्मुख विस्मयात् अपश्यत् ननु ।

**व्याख्या—प्रायच्छमिति** । **चीर्णभक्ते** चीर्णा बहुकालकृता भक्तिस्तपो सा चीर्णभक्ति तस्याश्चीर्णभक्ते । **फल हृदये सुदृढ गाढ विचार्य**

अस्या यशोदाया पूर्वकृतदृढभक्ते फल हृदि सुचारुरूपेण ध्यात्वा। **बालतृणीकृतामृतसुख** न बालतृणम् अबालतृणम् अबालतृण बालतृणमिव सपद्यमान कृत बालतृणीकृत । ‘अभूततद्भावेच्वि’। तुच्छ तृणवत् हीन कृतम्। बालतृणीकृतम्, अमृतस्य सुख यथास्यात्तथा। स्वीय **बाल्यात्मक** निज शैशवात्मक **वैभव** श्रेष्ठतरसुख **प्रायच्छम्** अददाम्। यदग्रे अमृतस्य सुखमपि तृणवत् हीनम् एतादृशम् आत्मन श्रेष्ठतर शैशवसुखम् अस्या पूर्वकृतभक्ते फल हृदि सुभृश विचार्य मया पूर्वमेव दत्तम्। किंतु अत परम् अस्या **स्तन्यपय पिबेन**–स्तने भव स्तन्यम्। ‘यत् प्रत्यय।’ स्तन्य यत् पयो दुग्ध तस्य पिब तेन स्तन्यपय पिबेन। पिबतीति पिब। श प्रत्यय । तेन पिबेन पानेन **तु मया अस्यै कि देयम्** इति विचारेण **आकुलो** व्याकुलो व्यग्र सन् **असौ** श्रीहरि **सर्वविदपि** सर्वज्ञोऽपि **हसन्** हास्य कुर्वाण **मातुर्यशोदाया मुख विस्मयाद् अपश्यत्। ननु** इति कि न? अस्तीत्यर्थ॥ शार्दूलविक्रीडित वृत्तम्॥४३॥

**धृताजितोऽप्यधिहृदय तदाश्रितावहेलनादुपरिगतोऽप्यध पतेत्॥**
**इति ब्रुवन्निव रजसार्दितव्रजस्तृणभ्रम सहरिरिहापतद्दिव॥४४॥**

**अन्वय**—अधिहृदय धृताजितोऽपि उपरिगतोऽपि तदाश्रितावहेलनात् अध पतेत् इति ब्रुवन् इव इह रजसा अर्दितव्रज तृणभ्रम सहरि दिव अपतत्।

**व्याख्या—धृतेति। अधिहृदय** हृदये इति अधिहृदयम्। ‘अव्यय विभक्ति इत्यादिना’ समास। **धृताजितोऽपि** धृत अजितो हरिर्येन स। अजित इत्यनेन जेतु प्राप्तुमतिकठिन। हरिं हृदये दधदपि। **उपरिगतोऽपि** उच्चस्थान स्वर्गमेव गतोपि प्राप्तोपि। **तदाश्रितावहेलनात्** त प्रभुम् आश्रिता आश्रय गता तेषाम् अवहेलनात् निरादरात् त्यागात् वा। ‘द्वितीयाश्रितातीतपतितगतात्स्तप्राप्तापन्नै’ इत्यनेन द्वितीया। **अध पतेत्। इति ब्रुवन् इव** इति प्रत्यक्ष दर्शयन्निव। **इह** अस्मिन् समये। **रजसार्दितव्रज** रजसा धूलिना अर्दित पीडित व्याप्त वा व्रज गोकुल येन स अर्दितव्रज। **तृणभ्रम** तृणावर्तराक्षस। **सहरि** हरिणा श्रीकृष्णेन सहित। **दिव** आकाशात्। **अपतत्** भूमौ पपात॥

अप्राप्यमीश्वर हृदये स्थापितोऽपि तत्प्रभावादुपरि नाकाधिष्ठितोऽपि, तस्य प्रभोर्भक्तानामवमाननादध पतति इति भाव। निदर्शनालकार। पातक्रियया पतनमाश्रये सति उन्नतपदप्राप्तिरूपस्य सम्बन्धो वर्ण्यते॥ रुचिरावृत्तम्। चतुर्ग्रहैरिह रुचिराजभौ सगौग इति॥४४॥

**कृत्वाभ्रकषमीषदप्यविरतभ्रान्तिर्न सर्वंकष**
**कालात्मानमिम विकर्तुमशकद्वात्या करीषकषा ॥**
**कि त्वेता विभुरीदृशीमपि पर ससारकूलकषा**
**म्भोधे पारमजीगमच्छलयतामप्याशु मद्रकर ॥४५॥**

**अन्वय**—अविरतभ्राति करीषकषा वात्या इम कालात्मान सर्वकषम् ईषत् अभ्रकष कृत्वापि विकर्तु न अशकत् । किन्तु ईदृशीम् एता वात्या स विभु ससारकूलकषाम्भोधे पर पारम् आशु अजीगमत् । छलयतामपि (असौ) विभु आशु मद्रकर ।

**व्याख्या—कृत्वेति । अविरतभ्रान्ति** अविरता सन्तता भ्रातिर्भ्रमण यस्या सा । **करीषकषा**–झझावात । **वात्या** वातूल तृणावर्तासुर इत्यर्थ सा **इम कालात्मान** कालो मृत्युरेव आत्मा यस्य स तम् । मृत्युस्वरूपम् । **सर्वंकष** सव कषति नश्यतीति सर्वकष तम् । 'कष हिंसायाम् ।' एतादृश सर्वशक्तिमन्त परमात्मान श्रीकृष्णम् । **ईषद् अभ्रकष कृत्वापि** किंचिदूर्ध्वं मेघस्पर्शिन कृत्वापि । **विकर्तु न अशकत्** नष्ट कर्तु समर्थो नाऽभूत् । **किन्तु ईदृशीम्** एतादृशी प्रभोर्विनाशे उद्युक्ताम् एताम् उत्पातकारिणी वात्या । **स विभु** श्रीकृष्ण । **ससारकूलकषाम्भोधे पर पारम् आशु अजीगमत्** ससार एव कूलकषा नदी तस्या अबुधि तस्य । 'कूलकषा वैतरणी स्रोतो वक्रा सरस्वती' इत्यमर । परतीर गन्तु प्रेरयत् । अजीगमदिति गमेर्ण्यन्तात् लुडिरूपम् । **छलयतामपि विभुर्मद्रकर**–कपट कुर्वाणमप्यसौ विभुर्मद्रकर कल्याणकर ॥ स झझावातस्तृणावर्तासुर स्वभ्रमावर्तेन त हरि विनाशयितुम् उपरिनीत्वाप्यसमर्थोऽभृत् । पर च स कल्याणकर श्रीकृष्ण तमुत्पातकरमपि वातूलम् दृढ ससारसागरस्य पार झटिति निनाय, त मुक्त कृतवान् इति भाव ॥

अस्मिन् पद्ये 'अभ्रकष सर्वकष करीषकषा कूलकषा तथा मद्रकर' एतानि रूपाणि साकल्येन ग्रथितानीति चित्रम् 'सर्वकूलाभ्रकरीषेषु कष' तथा 'क्षेमप्रिय मद्रेण् च' इति सूत्रद्वयेन खच् प्रत्यय । खचि मुम् । महता प्रस्तुतचरितस्या-गत्वादुदात्तालकारो यमक ससृष्ट ॥ शार्दूलविक्रीडित वृत्तम् ॥४५॥

इति श्रीमता वत्सगोत्रान्तर्गतेन काळेकुलोत्पन्नेन श्रीढुण्ढिराज रामचद्र शास्त्रिणा विरचितस्य भागवतव्यञ्जनस्य, तस्यैव कविवरस्य पौत्राभ्या गोविन्द काशीनाथाभ्या कृताया व्यञ्जनसुबोधिनीव्याख्याया प्रथम उल्लास ॥१॥

---

# श्रीढुंढिनाकृत

# श्रीभागवतव्यंजनम्

## द्वितीयोल्लासः

**आख्याकर्माविधाय स्वतनययुगलस्याषडक्षीणदेशे**
**भूशुध्यादेरपेक्षामतिचरति शुचौ गोव्रजे नो व्रजेत ॥**
**इत्थ गर्ग समेतो व्रजमुपगतभी कसतोऽर सतोष**
**नन्देन प्रार्थित सन्नकृत भगवतो कपलनामल्पनाम्नाम् ॥१॥**

**अन्वय** —"अषडक्षीणदेशे भूशुध्यादे अपेक्षाम् अतिचरति शुचौ गोव्रजे, स्वतनययुगलस्य आख्याकर्म अविधाय इत नोव्रज" इत्थ नन्देन प्रार्थित सन्, कसत उपगतभी व्रज समेत गर्ग अर सतोष भगवतो अल्पनाम्ना कल्पनाम् अकृत ॥

**व्याख्या– आरव्येति** ॥ **अषडक्षीणदेशे**–न षट् अक्षीणि श्रोत्राणि सति यस्मिन् देशे तस्मिन्। अषडक्षीणो यस्तृतीयादिनाऽगोचरो गुप्तदेश नस्मिन्। रहसि गुप्तस्थाने इत्यर्थ। अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते। अषडक्षीण इति 'अषडक्षाशितङ्ग्वलङ्कर्मालपुरुषाध्युत्तरपदात्ख' इत्यनेन ख प्रत्यय। 'बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात्षच्' । इति षच्। तदन्तादनेन ख। खस्य ईन। **भूशुध्यादे** भुव शुध्यादिस्तस्या। लेपनादिकर्मण। **अपेक्षाम्** अपेक्षण स्पृहाम्। **अतिचरति** अतिक्रान्ते सपन्ने भूते। **शुचौ गोव्रजे** पवित्रीभूते गोष्ठाने। रहसि स्थिते व्रजभूम्या सर्वतोपर्यपेक्षिते, लेपनादिकर्मणा पवित्रीकृते गोस्थाने इत्यर्थ। **स्वतनय-युगलस्य**–स्वतनयस्य निजपुत्रस्य युगल द्वद्व तस्य। **आख्याकर्म** नामकरणसस्कारम्। **अविधाय** अकृत्वैव। **इत** अस्मात् व्रजात्। **नो व्रज** न गच्छ। **इत्थम्** एतत्प्रकारेण **नदेन प्रार्थित सन्**। **कसत उपगतभी** कसात् प्राप्तभय। **व्रज समेत** व्रज गोकुल प्रत्यागतो **गर्गो** मुनि। **अर सतोषम्** ( अव्यय )

अर द्रुतम्, अथ वा रलयोरभेदात् अल पर्याप्तम्। अल सन्तोषेण यथा स्यात् तथा अत्यानन्देन। **भगवतो** प्रभो। **अल्पनाम्ना कल्पनाम् अकृत**–अल्पाक्षरा 'राम कृष्ण' इति नामकल्पना नामकरण वा चकार॥ स्रग्धराछन्द ॥१॥

**वत्सग्रन्थिविमोचन प्रकुरुते बालान्विकर्षत्यसौ–**
**स्वास्येनापि च सर्वतो मुखमय सयोजयत्योजसा॥**
**सर्व पातुमशक्नुवन्नपि मरोरध्वन्यवच्चेष्टते–**
**गुह्य स्त्रीभिरिति प्रसू प्रति हरेरन्यार्थत स्मोच्यते॥२॥**

**अन्वय** –-असो वत्सग्रथिविमोचन प्रकुरुते। बालान् विकर्षति। सर्व पातु स्वास्येन अशक्नुवन्नपि सवत ओजसा अय मुख सयोजयति, मरो अध्वन्यवच्चेष्टते इति हरे गुह्य प्रसू प्रति स्त्रीभि अन्यार्थत च उच्यते स्म।

**व्याख्या–-वत्सेति॥ असौ** हरि। **वत्सग्रथिविमोचन प्रकुरुते**–यत्र तत्र गत्वा दामग्रथि विसृजन् गोवत्सान् विमोचयति। **बालान्** गोपालबालान्। **विकर्षति** कर्षणेन पीडयति। **सर्व पातु** सर्व दधिदुग्ध प्राश्नातु, प्राशनाय **स्वास्येन अशक्नुवन् अपि**–स्वमुखेन असमर्थोपि। **सर्वत** —सर्वत्रैव गोपगृहेषु गत्वा। **ओजसा**–निवारितोपि हठात्। **अय** श्रीकृष्णो **मुख सयोजयति** भाड मुखे सयोजयति। सर्व दुग्धमुच्छिष्ट करोतीत्यर्थ। **मरोरध्वन्यवच्चेष्टते**–मरुस्थलस्य यात्रीवत् वर्तते। यथा मरुस्थले यात्री जलपानार्थ इतस्तत सर्वत्र दृष्टिक्षेप करोति तद्वदय कृष्णोपि गव्यप्राप्त्यर्थ परिभ्रमणचेष्टा करोतीति भाव। **इति हरेर्गुह्यम्** इत्थ श्रीकृष्णस्य गुप्तचेष्टा। **प्रसू**–जननी यशोदा प्रति। **स्त्रीभि**र्गोपिस्त्रीभि**रुच्यते स्म**–कथ्यते स्म। **अन्यार्थतश्च उच्यते स्म**–अन्यतरेणापि अस्य हरेर्गुह्य गोपनीय रहस्य च कथ्यते स्म। तद्यथा–**असौ वत्सग्रथिविमोचन प्रकुरुते**–अय श्रीकृष्णो गोपीना वत्सग्रथिं नाम वक्ष स्थलस्य ग्रथिं विमोचयति कचुकीग्रथिम् इत्यर्थ। कुचपीडन करोतीति भाव। 'उरो वत्स च वक्षश्च' इत्यमर। **बालान् विकर्षति**–तासा कचान् विकर्षन् लालयति। **स्वास्येन ओजसा मुख सयोजयति**–तासा मुख बलात् स्वमुखेन सह सयोजयति चुबति इत्यर्थ। **सर्व पातु अशक्नुवन्नपि**–ता सर्वा गोपीरुपभोक्तुमसमर्थोपि। **मरो अध्वनि अवस् चेष्टते**–मरोर्नाम धराधरस्य अध्वनि मार्गे अवस् बहि चेष्टते। नगराद् बहि पर्वतस्य मार्गोपरि कामीवत् तासा गोपीना कुचेष्टा करोतीति भाव। 'मरुधन्वधराधरौ' इत्यमर॥ स्वभावादेकार्थै शब्दैरनेकार्थ वाचकमूल श्लेषालकार॥ शार्दूलविक्रीडित वृत्तम्॥२॥

**नित्यापराधशतक व्रजमुदरीणा-**
**माकर्ण्य सूनुविहित मुखतो यशोदा ।।**
**मोदातिशोभिवदना मदनात्तचित्ता-**
**स्ता एव साक्षिपदनाथपति न भीतम् ।। ३ ।।**

**अन्वय** —सूनुविहित नित्यापराधशतक व्रजसुन्दरीणा मुखत आकर्ण्य, सा मोदातिशोभिवदना यशोदा मदनात्तचित्ता ता एव आक्षिपत् । भीतम् अनाथपति न ।।

**व्याख्या —नित्येति** । **सूनुविहित**-सुनुना पुत्रेण श्रीकृष्णेन कृतम् । **नित्यापराधशतकम्** नित्य प्रतिदिनम् अपराधाना शतकम् । नित्यमेव शतश कृतानपराधान् । **व्रजसुदरीणा** गोपीना । **मुखत** । पचम्यास्तसिल् । मुखेभ्य **आकर्ण्य** श्रुत्वा । **सा मोदातिशोभिवदना**-मोदेन हर्षेण अतिशोभि अतिसुदर वदन मुख यस्या सा । हर्षोत्फुल्लानना **यशोदा** कृष्णमाता । इत्यनेन मातृ सुलभ वात्सल्यभावना प्रदर्शिता । **मदनात्तचित्ता** मदनेन कामविकारेण आत्त व्याप्त चित्त मनो यासा ता । ता । कामपीडिता , **ता** व्रजसुन्दरी । **आक्षिपत्** अभर्त्सयत् । किन्तु **त भीत** भीतियुक्त अनाथपति दीनवत्सल श्रीकृष्ण न आक्षियत् ।

'अनाथपति ' इत्यनेन स प्रभुरनाथाना दीनानामेव पाती रक्षक न तु कामपीडि ताना मनोन्मत्ताना कुमार्गगामिनाम् । अतोऽत्र व्रजसुदरीणा कामिनोन्मदत्वापराधात् तासा निर्भर्त्सन मातृद्वारा कारयामासेति दर्शितम् ।। वसन्ततिलकावृत्तम् ।।३।।

**बीजावापविधि मृदि प्रकुरुते लोको विचित्र त्विद**
**मातुर्भक्तिरसेन गोपनिखिल स्वास्यालवाले मृदम् ।।**
**यद्गूढ वपति स्म यत्र समभूदुर्वीवियद्वह्निवा-**
**र्वायुव्यूहवनव्रजव्रजवधूव्राताङकुरोज्जृम्भणम् ।।४।।**

**अन्वय** —लोक बीजावापविधि मृदि प्रकुरुते । इद विचित्र यत् गोपनिखिल तु मृदम् । मातु भक्तिरसेन (सिचिता इति शेष) स्वास्यालवाले गूढ वपति स्म, यत्र उर्वीवियद्वह्निवार्वायुव्यूहवनव्रज-व्रजवधूव्राताकुरोज्जृभण समभूत् ।।

**व्याख्या—बीजेति** । मृद्भक्षण कृतवत श्रीकृष्णस्य मुखे माता यशोदा यदपश्यत् तदिह उत्प्रेक्षते कवि ।। **लोक** इतरो जन. । **बीजावापविधिं**

बीजविकिरणविधान । **मृदि प्रकुरुते** मृत्तिकाया करोतीति सामान्यन्याय । किंत्वस्य हरेरिद बीजविकिरण **विचित्र** लोकोत्तरम्। **यत्** यस्मादय श्रीकृष्ण । गोप **निखिल तु मृदम्**–अखिलव्रजग्राममेव मृदम्। 'गोपो ग्रामेषु भूरिषु' इत्यमर ।' **मातुर्भक्तिरसेन**–ता मृद मातुर्यशोदाया भक्तिरसेन जलेन सिंचितामिति शेष । **स्वास्यालवाले**–स्वस्य आस्यस्य मुखस्य आलवाले आवाले, आत्ममुखावापे इत्यर्थ । 'स्यादालवालमावालमावापोऽथनदी सरित्' इत्यमर । **गूढ वपति स्म** अतिगुप्ततया अवपत् । **यत्र** यस्मिन्, तस्य हरेर्मुखे इत्यर्थ । उर्वी पृथ्वी, वियत् आकाश., वह्नि, वा जल, वायु एतेषा व्यूह । अर्थात् पचमूलभूततत्त्वानि, तथा च वन, व्रज गोकुल, व्रजवधू एतेषा सर्वेषा व्रातश्चय तस्य अकुराणाम् उज्जृम्भण स्फोट उत्पत्तिर्वा समभवत् ।। विषमालकार कारणगुणविजातीयकार्यत्वात् ।। शार्दूल विक्रीडित वृत्तम् ।।४।।

**दृक्चक्रभ्रमिमावहन्व्रजवधूवर्गस्य सत्तार्किकै**
**कर्त्तृत्वैकनिदर्शनीकृतकुलालोऽसौ विभु स्वानने**
**आम पक्वयतीव सानलतया दण्ड प्रसूहस्ततो**
**गृह्णन्नत्र मृदापरामजनयद्ब्रह्माण्डभाण्डक्रियाम् ।।५।।**

**अन्वय**—प्रसूहस्तत दड गृह्णन् व्रजवधूवर्गस्य दृक्चक्रभ्रमिम् आवहन् सत्तार्किकै कर्त्तृत्वैकनिदर्शनीकृतकुलाल असौ विभु स्वानने सानलतया आम पक्वयतीव अत्र मृदापरा ब्रह्माडभाडक्रिया अजनयत् ।।

**व्याख्या**—मृद्भक्षणत्वान्मात्रा ताडनाय गृहीतदडविषये कविरन्यच्चोत्प्रेक्षते ।। **दृगिति ॥ प्रसूहस्तत** प्रस्वा हस्तस्तस्मात् । पचम्यास्तसि । मातु करात् । **दण्ड** लगुड गृह्णन् । कुलालस्य यत्र भ्रामयितु मातुर्हस्ताद् दण्ड गृह्णन्निति भाव । **व्रजवधूवर्गस्य** व्रजागनाना, गोपस्त्रीसमूहस्य । **दृक्चक्रभ्रमिम् आवाहन्** दृक् दृष्टिरेव चक्रम्, कुभकारस्य यत्र तस्य भ्रमिर्भ्रमणम् । ता । आवहन् भ्रामयन् । व्रजागनाना चचलदृष्टिपात एव कुलालस्य चक्रभ्रमणम् । **सत्तार्किकै**–नैय्यायिकै । **कर्तृत्वैकनिदर्शनीकृतकुलाल** कर्तृत्वस्य स्वातन्त्र्येण कर्म कर्तु समर्थस्य । कर्त्तृत्वस्य एकमात्र निदर्शनीकृत । केवल कर्ता इति यो निदर्शित । अथवा कर्तृत्व क्रियाकारित्वम् एकमेव निदर्शन लक्षण कृत यस्य स एव कुलाल कुभकार । केवल कर्तैव स्वतत्ररूपेण कर्म कर्तु समर्थ इति नैय्यायिकै प्रतिपादितम् । तथाविधोऽय कर्ता, स्रष्टा कुलाल । असौ श्रीकृष्ण कुभकार । **विभु** सर्व

शक्तिमान् सर्वव्यापक । **स्वानने सानलतया** ‘मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत’ इति वेदवचनात् स्वमुखे अग्नेर्विद्यमानत्वात् । **आम पक्वयतीव** आमम् अपक्व भर्जते इव । **अत्र** इह जगति । **मृदापरा** मृदेव मृदा आब तोपि । मृत्तिकामयी । **ब्रह्माण्डभाण्डक्रियामजनयत्** ब्रह्माण्डरूपा घटाविष्कारक्रिया असृजत् ॥ अथवा **अपरा ब्रह्माडभाडक्रिया मृदा अजनयत्** । इह पच तत्वात्मकसृष्टे पूर्वस्मादेव विद्यमानत्वादपराम् अन्या ब्रह्माडरूपा भाडक्रिया मृदा मृदभक्षणेन इत्यर्थ स्वानने असृजत् ॥ अथवा अपराम अनन्या लोकोत्तरा विचित्रा ब्रह्माडभाडक्रिया ब्रह्माडानि एव भाण्डानि तेषा क्रिया सर्जनरूप कर्म मृदा केवलमृत्तिकातत्वेनैव अजनयत् असृजत् इति भाव ॥ श्लिष्टपरम्परितरूपकमलकार ॥ शार्दूलविक्रीडित वृत्तम् ॥५॥

**सर्वाङ्गभ्रमणै कियन्तमवधि पद्भ्या कराभ्यामथो**
**जानुभ्या च कियद्दिन व्रजमृद रिङखन् यथेच्छ भुवि ॥**
**पद्भ्यामेव कियत्सम परिलिहन् यास्यन्पुरोद्वारका**
**दूरे हातुमशक्नुवन्निवहरिर्गूढ पिचण्डे न्यधान् ॥६॥**

**अन्वय**——भुवि कियन्तमवधि सर्वाङ्गभ्रमणै व्रजमृद यथेच्छ रिखन् । अथो कियद्दिन पद्भ्या कराभ्या जानुभ्या च । कियत् पद्भ्या समम् एव परिलिहन् । पुर द्वारका यास्यन् दूरे हातुम् अशक्नुवन्निव हरि पिचण्डे गूढ न्यधात् ॥

**व्याख्या—सर्वाङ्गेति । भुवि** इहात्रव्रजप्रदेशे । **कियन्तमवधि** कतिपय कालपर्यन्तम्, उत्तान शयनकालादारम्य रिगणकालपर्यन्तमिति भाव । **सर्वागभ्रमणै** निखिलशरीरावयवानाम इतस्तत सचालनै । **व्रजमृद** व्रजभुव ययेच्छ यथास्यात् तथा पर्याप्त **रिंखन्** विलोडयन् । **अथो** तदनतरम् । **कियद्दिन पद्भ्या कराभ्या जानुभ्या च** रिंगणेन व्यलुठत् इति शेष । यावत् पद्भ्या न चलति तावत् कालपर्यन्तमित्यर्थ । **कियत् पद्भ्या समम् एव परिलिहन्** तत् पश्चात् पादचारेणैव ता मृदमास्वादयन् । गच्छन्नित्यर्थ । **पुर** अग्रे आगामिनि समये । **द्वारका यास्यन् दूरे हातुमशक्नुवन् इव** यदा द्वारका गमिष्यामि तत्र दूर देशे इमा व्रजमृद नतु मशक्यमितीव तत्र चाप्यप्राप्तत्वात् । **हरि** श्रीकृष्ण । **पिचडे गूढ न्यधात्**—ता मृद जठरे गूढ यथा स्यात् तथा गुप्तमद्यैव स्थापितवान् ॥ ‘पिचड कुक्षी जठरोदरतुन्द स्तनौकुचौ’ इत्यमर । ओहाड् गतौ इत्यस्मात् तुमन् हातु नेतुमित्यर्थ ॥ उत्प्रेक्षालकार ॥ शार्दूलविक्रीडित वृत्तम् ॥६॥

**अप्यूढकल्पनगमेरुमणित्रिलोकी**
**नो कीर्त्यते सकलगोकुलभूसमत्वे ॥**
**एकप्रदेशगतयापि मृदा यदस्या-**
**स्तद्रूपत शिशुमुखे परिणम्यते स्म ॥७॥**

**अन्वय**--ऊढकल्पनगमेरुमणित्रिलोकी अपि सकलगोकुलभू-समत्वे नो कीत्यते । यत् अस्या एकप्रदेशगतयापि मृदा शिशुमुखे तद्रूपत परिणम्यते स्म । अथवा अस्या मृदा शिशुमुखे एकप्रदेश-गतयापि तद्रूपत परिणम्यते स्म ॥

**व्याख्या**—मृद्भक्षणम् भग्यतरेणापि वर्णयति ॥ **अप्यूढेति** ॥ **ऊढकल्पन-गमेरुमणित्रिलोकी** त्रयाणा लोकाना समाहारस्त्रिलोकी 'द्विगो' इत्यनेन स्त्रिया ङीप्। त्रिभुवनम्। ऊढा धृता कल्पनगमेरुमणयो येन स कल्पनगमेरुमणि स एव त्रिलोकी ऊढकल्पनगमेरुमणित्रिलोकी । 'परवल्लिंगद्वद्वतत्पुरुषयो' इति सूत्रेण लिग परवत् ॥ या त्रिलोकी कल्पवृक्ष, मेरुपर्वत, पातालस्थितशेषनागस्य मणि इतरमणीनपि अर्थात् त्रिभुवनाना रत्नभाडार धारयति। सापि। **सकलगोकुलभूसमत्वे** भूसमानत्वे **नोकीर्त्यते** कीर्ति न नीयते। त्रिभुवनमपि व्रजभूसमानत्व न गच्छतीत्यर्थ । कि कारण ? **यत्** यस्मात् कारणात्। **अस्या** सकलगोकुलभुव । **एक प्रदेशगतयापि मृदा** अस्या कुत्रापि एकस्थानाद्गृहीतया मृदापि। **शिशुमुखे** अस्य श्रीकृष्णस्य मुखे। **तद्रूपत** तस्यरूप तद्रूप तस्मिन्। सप्तम्यर्थे तसि । **परिणम्यते स्म** श्रीकृष्णस्वरूपिण्या भूयते स्म। अथवा **अस्या** व्रजभुवो **मृदा शिशुमुखे एकप्रदेश गतयापि** श्रीकृष्णमुखस्य कुत्रापि एकस्थाने सलग्नयापि। तद्रूपत परिणम्यते स्म श्रीकृष्ण**स्वरूपिण्या** भूयते स्म। अत त्रिलोकी अस्या व्रजभुव समानत्व न गच्छतीत्यर्थ ॥ व्यतिरेकालकार । उपमानादुपमेयस्याधिक्य न्यूनत्व वा व्यतिरेक ॥ वसततिलकावृत्तम् ॥७॥

**प्राप्यता कथमहो व्रजभूमेर्मृत्कणोपिहि मयाऽग्रिमकल्पे ।**
**इत्थमलिपतजगत्त्रयतृष्णक् स्वोदरे किमु विभु समगृह्णात् ॥८॥**

**अन्वय**—अहो ! अग्रिमकल्पे व्रजभूमे मृत्कणोपि हि मया कथ प्राप्यताम् । इत्थम् अलिपतजगत्त्रयतृष्णक् विभु किमु स्वोदरे समगृह्णात् ?

**व्याख्या**—पुनरपि मृद्भक्षणमेवोत्प्रेक्षते। **प्राप्यतामिति** ॥ **अहो** इति आश्चर्ये। **अग्रिमकल्पे** आगामिनि मन्वन्तरे, यत्तु युगाना दिव्यानामेकसप्ततिरित्य

स्मात्कालावधे स्थित्यनन्तरादनन्तरं यदाहमत्रावतरिष्यामि इति भाव । तदा । **व्रजभूमेर्मृत्कणोऽपि हि मया कथं प्राप्यताम् इत्थम्** एतत् प्रकारेण व्रजभूमेर्म हनीयता विचार्य । **अर्पितजगत्त्रयतृष्णक्** अर्पिता स्तोकत्वं नीता जगत्त्रयस्य त्रिजगत तृष्णा वाञ्छा येन स । 'ञितृषा पिपासायम्' । तृष्यतीति तृष्णक् । 'स्वपितृषोर्नजिङ्' इत्यनेन कृद ते नजिङ् । इकार उच्चारणार्थं तृष्+नज्= तृष्णक् पिपासु पातुम् इच्छु इत्यर्थ । व्रजभूमेरग्रे जगत्त्रयमपि तुच्छं विलेखितवान् स विभु श्रीकृष्ण । **किमु स्वोदरे समगृह्णात्**–तामद्यैव निजजठरे दधार किम् इति उत्प्रेक्षा ॥ उत्प्रेक्षालङ्कार ॥ स्वागतावृत्तम् । स्वागतेति रनभात् गुरु युग्मम् ॥ ८ ॥

**मुक्ति ददाति न कदापि हि भक्तियोग–**
**मित्युक्तमात्मनियम व्रजगोपबालै ॥**
**सख्य जुषद्भिरतिमुक्ति समीक्ष्य भग्न**
**कि दीनवन्मृदमदाद्वदने मधुद्विट् ॥९॥**

**अन्वय**—मधुद्विट् 'मुक्ति ददाति भक्तियोग कदापि हि न इति सख्य जुषद्भि व्रजगोपबालै उक्तम् । (तदा) अतिमुक्ति आत्मनियम भग्न समीक्ष्य कि दीनवत् मधुद्विट् वदने मृदम् अदात् ॥

**याख्या**—पुनश्च मृद्भक्षणमुत्प्रेक्षत ॥ **मुक्तिमिति** ।

**मधुद्विट्** मुरारि श्रीकृष्ण । 'द्विष अप्रीतौ' इत्यस्मात् क्विप् । मधु राक्षस द्वेष्टीति मधुद्विट् । **मुक्ति ददाति**–स्वभक्ताय कदाचित् मुक्ति इहससारपाशात् मोक्ष ददाति किन्तु । **भक्तियोग कदापि हि न**–भक्तेर्योग सयोग त भक्ति योगम् । तपोदानस्वाध्यायादियमनियमै सिद्ध प्रभोर्भक्तियोग सेवायोग स प्रभु कदापि न ददाति खलु । **इति सख्य जुषद्भि** । 'जुषपरितर्पणे' परितर्पण तृप्तिक्रिया जुषन्तीति जुषन्त तै जुषद्भि । शत्रन्तम् । **व्रजगोपबालैरुक्तम्** एतत् प्रकरेण तन हरिणा सह सखिभावेन केवल सख्य भक्ति सेवा कृतवद्भिर्गोपै कथितम् । **अतोऽतिमुक्ति** मुक्ति अतिक्रम्य अतिमुक्ति । अव्ययम् । **आत्म-नियम** मुक्तिम् अतिक्रम्य वर्तमानम् आत्मन स्वस्य नियम मर्यादाम् । **भग्न समीक्ष्य** खण्डित दृष्ट्वा, मुक्तेर्मोक्षस्य महिमा लुप्तता गतो दृष्ट्वा **स मधुद्विट्** श्रीकृष्ण । **किं दीनवत् वदने मृदमदात्** असहायत्वेन धूलिं मुखे अदात् किम् ॥ भग्यन्तरेण उत्प्रेक्षा । वसततिलकावृत्तम् उक्ता वसततिलका त भ जा ज गौ ग इति ॥९॥

क्षीराकूपारकन्याकरकृतदिविषद्धेनुगव्योत्थभोज्या-
विच्छिन्नास्वाददत्तारुचिजडरसनाशोधनायेव मृत्स्नाम् ।।
कृत्स्नात्मप्रेष्ठगोपार्भकनवविविधान्नस्पृहा बिभ्रदभ्र-
त्विट् विद्विट्देहरोचिर्भृशसफलितसत्कृष्णनामा लिलेह ।।१०।।

**अन्वय**—विद्विट्देहरोचि अभ्रत्विट् भृशसफलितसत्कृष्ण-नामा कृत्स्नात्मप्रेष्ठगोपार्भकनवविविधान्नस्पृहा बिभ्रत् क्षीराकूपारक-न्याकरकृतदिविपद्धेनुगव्योत्थभोज्याविच्छिन्नास्वाददत्तारुचिजडरस-नाशोधनाय इव मृत्स्ना लिलेह ।।

**व्याख्या**—पुनरपि प्रभोर्मृद्भक्षण भङ्ग्यतरेण उत्प्रेक्षते ।। **क्षीरेति** ।। **विद्विट् देहरोचि** विद्विष शत्रोर्देह प्रति रोचिर्ज्वाला इव स । शत्रुतापी । **अभ्रत्विट्**-अभ्र मेघस्तस्य त्विट् इव त्विट् कातिर्यस्य स । मेघश्याम । इत्यस्मात् । **भृशस फलितसत्कृष्णनामा**-भृशम् अतिशय सफलित सार्थक सत् शोभन कृष्ण इति नाम यस्य स । **कृत्स्नात्मप्रेष्ठगोपार्भकनवविविधान्नस्पृहाम्**-अतिशयेन प्रिया प्रेष्ठा । इष्ठन् प्रत्यय । कृत्स्ना सर्वे आत्मप्रेष्ठा ये गोपार्भका गोपबालका तेषा नव नवीन विविधान्न नानाखाद्य तस्य स्पृहा इच्छा ताम् । बिभ्रत् दधत् । य स्वप्रियवयस्याना विविधान्नस्वाद ग्रहीतुमिच्छु । स स्वयमपि तद्धेतवे । **क्षीराकूपारकन्याकरकृतदिविषद्धेनुगव्योत्थभोज्याविच्छिन्नास्वाददत्तारुचिजडरसनाशोधनाय इव**-क्षीरस्य अकूपार क्षीराकूपार क्षीरसमुद्र तस्य कन्या लक्ष्मी तस्या करौ, ताभ्या कृता दिविषद्धेनुगव्योत्थभोज्या कामधेनो पयोविकारा-दुत्थिता निर्मिता भोज्या पदार्था तेषाम् । क्षीराकूपारकन्याकरकृतदिविषद्धेनुगव्योत्थ भोज्यानाम् अविच्छिन्नास्वादो निरतरसेवन, तेन दत्ता या अरुचि तया जडा या रसना, वधिरत्व प्राप्ता स्वादज्ञानरहिता या जिह्वा तस्या शोधनम् उद्वर्त्तन, मार्जन तस्मै । इव **मृत्स्ना** मृत्तिकाम् **लिलेह** अलेट् स्वादु कारमभक्षयत् । उत्प्रेक्षालकार । स्रग्धरावृत्तम् ।।१०।।

चरणस्थितैर्न वृषलैर्बतोचित
सममास्यगै क्षितिसुरैस्तु योजनम्
इति नु क्षमामधिमुख वहन्नपि
व्यरमत्कलेरुदयशङ्कयाच्युत ।।११।।

**अन्वय**—अच्युत, चरणस्थितै वृषलै सम योजनम् उचित न। बत आस्यगै क्षितिसुरै सम तु योजनम उचितम् इति नु अधिमुख क्षमा वहन्नपि कलेरुदयशङ्कया व्यरमत् ॥

**व्याख्या**—श्रीकृष्ण मृद्भक्षणात् कथ परावृत्तोऽभवत् तदुत्प्रेक्षते कवि। **चरणस्थितैरिति** ॥

**अच्युत** श्रीकृष्ण। **चरणस्थितै** चरणयोस्तिष्ठति ते चरणस्थिता तै। इति निष्ठाक्त। विराड्पुरुषस्य चरणोद्भवै। चरणवर्तिभि। **वृषलै** शूद्रै 'पद्भ्या शूद्रो अजायत' इति श्रुते। 'शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजा।' इत्यमर। **सम** सह **योजन** सयोगकरण **उचित न**। अर्थात् क्षमाया शान्त्या धरित्र्याश्च वृषलै सह सयोगकरणम् उचित न यमनियमादिभी रहितत्वादिति भाव। **बत** अपितु **आस्यगै** आस्य मुख गच्छन्ति ते आस्यगा तै। गमेर्ड प्रत्यय। मुखजै मुखवतिभि **क्षितिसुरै** ब्राह्मणस्तु योजनम उचित '[illegible]' इति श्रुते। शमदमब्रह्मचर्यादिगुणयुक्तैर्ब्राह्मणे सह क्षमा शाति धरित्रि च योजन योग्यमेव इत्यर्थ। **इति नु,** नु वितर्के। इत्यस्मान्नेवहेतो किम् **अधिमुख** मुखे इति अधिमुखम्। अव्यय विभक्तिसमीप इत्यादिसूत्रेण अव्ययीभावसमास सप्तम्यर्थे द्योतक। **क्षमा वहन्नपि** अर्थात् स्वस्य मुखे क्षमा शान्ति पृथ्वी च मृदमित्यर्थ वहन्नपि वोढु प्रवृत्तोपि, धर्तु प्रवृत्तोपि अर्थात् मृद्भक्षण कर्तु प्रवृत्तोपि। **कलेरुदयशकया** श्रीकृष्णावतारोद्वापरान्तो दितत्वात् कले धर्माधर्मयोर्वैपरीत्यविचारकारिकलियुगस्य उदयशकया व्यरमत्। अर्थात् कलियुगोदये ब्राह्मणसगत्या क्षमा शातिर्नैवस्थास्यतीतिशकया मुख क्षमाधारणाद्विरराम। अथ च कलेरुदयशकया यतोह मुखे क्षमा मृद धारयामि तत कले कलहस्य मात्रापि सह विवादो भविष्यतीति शकया मृद्भक्षणात् विरराम। व्यरमत् इति 'व्याङ्परिभ्योरम' इत्यनेनपरस्मैपदम्। अच्युत इत्यत्रप्रयुक्तेन च्युतिरहितोप्यसौ हरि मृद्भक्षणमारब्धकार्यात् हेतुभूतेन वैचित्र्येण विच्युतोपि अच्युत इति हेतूत्प्रेक्षा ॥ मञ्जुभाषिणी छद ॥११॥

**विबन्धदुस्थानि मृदुत्वसाम्यतो**
**मुकुन्दमात्रा शिरसादृतान्यपि ॥**
**च्युतानि तत्पादपथे बताच्युत–**
**प्रसूनताधि कुसुमानि तत्यजु ॥१२॥**

**अन्वय**—कुसुमानि मृदुत्वसाम्यत मुकुन्दमात्रा शिरसा आदृतानि अपि विबन्धदुस्थानि। बत तत्पादपथे च्युतानि अच्युतप्रसूनताधि तत्यजु ॥१२॥

**व्याख्या—बिबन्धेति ॥ कुसुमानि** पुष्पाणि । **मृदुत्वसाम्यत** मृदुत्वस्य कोमलताया साम्य सादृश्य तस्मात् तसि । निजाना यशोदाया अपि च एतयोर्द्वयो कोमलत्वयो साम्यात्पि । पुन **मुकुन्दमात्रा** यशोदया **शिरसादृतान्यपि** मूर्ध्ना स्वीकृतानि अपि । तया निज शिरसि धृतानि गुफितानीत्यर्थ । आदृतानि इति दृङ् आदरे इत्यस्मात् निष्ठाक्त । **विबन्धदुस्थानि** विबन्धेन गुफितेन अर्थात् बन्दीकृतेन दुस्थानि दु खेन स्थितानि । 'ष्ठा गतिनिवृत्तौ इत्यस्मात् 'सुपिस्थ' इत्यनेन क प्रत्यय '। बन्धे गतत्वात् दु खितानीत्यर्थ । **बत** किन्तु पश्येदमाश्चर्य यत् । **तत्पादपथे च्युतानि** यदा तस्या यशोदाया पादस्य पथा तत्पादपथ तस्मिन् । तस्या सजवगमनात् मार्गे पतितानि तदा पुन साम्यत्व प्राप्तानि इति भाव । अर्थात् यशोदा तु श्रीकृष्णस्य पुत्रभाव प्रापणेन भवबन्धाद् विमुक्ततया सौस्थ्यवती स्वतन्त्रा अत साम्यत्व लुप्तानि कुसुमानि यदा तस्या कबरीबन्धनात् च्युतानि तदा पुन बन्धाभावतया साम्यताभाव प्राप्तानि । **अच्युतप्रसूनताधि तत्यजु** प्रसूनस्य भाव प्रसूनता । न च्युता न पतिता अच्युता । अच्युता या प्रसूनता कुसुमत्व तस्या आधि मानसीव्यथा तम् । अर्थात् अच्युतरूप बन्धरूप यत् कुसुमत्व तेनोत्थित दुख तत् तत्यजु अत्यजन् । अथ च अच्युतस्य श्रीकृष्णस्य प्रसू यशोदा तस्या ऊनता न्यूनता कोमलत्वे सादृश्याभावता तस्या आधि तम् तत्यजु । अर्थात् स्वातन्त्र्य प्राप्तानि तानि कुसुमानि यशोदाया साम्यताप्रापणेन मानसी व्यथा तत्यजु इत्यर्थ ॥ वशस्थवृत्तम् उत्प्रेक्षा श्लेषालकार च ॥१२॥

**गृहोपलेपादिनियुक्तदासीपरागससृष्टकरावमर्शात्**
**विकारभीत्या हरये कदाचित्स्वय यशोदा दधि निर्ममन्थ ॥१३॥**

**अन्वय**—स्पष्टम्

**व्याख्या—गृहेति । गृहोपलेपादिनियुक्तदासीपरागससृष्टकरावमर्शात्**—गृहोपलेपनादि नियुक्ता या दासी (करयोर्लेपनकर्मणि प्रसक्तत्वात्) तस्या परागेण गोमयेन धूलिना च ससृष्टौ करौ हस्तौ तयोरवमर्श स्पर्श तस्मात् । **कदाचित्** कस्मिन्नेवसमये । हरये श्रीकृष्णाय । **विकारभीत्या** रोगभीत्या । **यशोदा** कृष्णमाता **स्वय दधि निर्ममन्थ** दधिमथनकर्म स्वयमेवाकरोत् ।

गृहोपलेपादिकर्मणा दास्या रजोवलिप्ताभ्या हस्ताभ्या कदाचित् श्रीकृष्णाय ससर्गजनितविकारसभावनेन भीतियुक्ता सा यशोदा ता दासी दधिमथनकर्म नाचख्यौ किंतु स्वयमेव निर्ममन्थ इति भाव ॥ उपेन्द्रवज्रावृत्तम् ॥१३॥

**गायन्ती मुरकालबालचरित स्निग्धत्वगर्वान्ननु**
**क्षुभ्यद्गव्यजिगीषयेवहि बहिर्निर्यत्पय सझ्झरौ ॥**
**बिभ्राणाऽऽत्तरुचौ कुचौ शिशुमती नन्दाङ्गना मन्थती**
**नव्य हव्यभुजोपि लोभयति यद्गव्य तदव्यञ्जयत् ॥३४॥**

**अन्वय**—ननु स्निग्धत्वगर्वात् मुरकालबालचरित गायन्ती शिशुमती मन्थती क्षुभ्यद्गव्यजिगीषया इव हि बहिर्नियत्पय सझ्झरौ आत्तरुचौ कुचौ बिभ्राणा नन्दागना यत् नव्य गव्य हव्यभुजोपि लोभयति तत् अव्यजयत् ॥

**व्याख्या—गायन्तीति । ननु स्निग्धत्वगर्वात्**—'ष्णिह प्रीतौ स्निह्य तीति स्निग्ध इति क्त तस्य भाव स्निग्धत्वम्'। प्रेम। स्निग्धत्वस्य गर्वादहकारात्। पुत्रप्रत्यतिशयप्रेमवात्सल्यादित्यथ । **मुरकालबालचरितम्** मुरस्य मुरदैत्यस्य कालोऽन्तक श्रीकृष्ण तस्य बाल्चरितम्। अय च 'मुर सवेष्टने' इत्यस्मात् मुरकाल सवेष्टितकालो न दिवा न रात्रिस्तस्मिन्। प्रत्यूषे बालस्य श्रीकृष्णस्य चरितम्। मुरारे श्रीकृष्णस्य चरित्राणि गायन्ती। **शिशुमती** पुत्रवती **मन्थती** रविमथ्नती विलोडन कुर्वती। **क्षुभ्यत् गव्यजिगीषया इव हि**-'क्षुभ सचलने' क्षुभ्यतीति क्षुभ्यत्। शत्रन्तम्। मथनविलोडनात् फेनिल सजात यत् गव्यम गोर्विकार। 'गोपय सोर्यत्' इति गव्यम्। दुग्धविकार तत् जिगीषया जेतुमिच्छया इव खलु। **बहिर्निर्यत्पय सझ्झरौ**—बहिर्निर्यत् बहि पदेशे प्रस्रवत् यत् पयो बहिर्निर्यत्पय। 'झॄष् वयोहानौ' झीर्यतीति झर। 'ऋदोरप्' इति अप् प्रत्यय। सम्यक् झरौ सझ्झरौ बहिर्निर्यत्पयसा सज्झरौ बहिर्निर्यत्पय सज्झरौ तौ। **आत्तरुचौ** रुचिरौ **कुचौ** स्तनौ **बिभ्राणा** धृतवती **नन्दागना** यशोदा। **यत् नव्य गव्य** नूतनमपर्युषितदवि सा व्यलोडयत्। **हव्यभुजोपि लोभयति**-हव्य भुजते ते हव्यभुजस्तान् देवानपि लोभयति पानार्थ स्पृहयति तत् अव्यजयत् समुद्भावयत् ॥

अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। म्रक्षण सघात। विशेषेण अञ्ज व्यञ्जम् एकत्रीभूतम्। नामधातो कृत्यर्थे णिच्। व्यञ्ज करोति व्यञ्जयति। लडि अव्यञ्जयत्। विलोडनेन एकत्रीकरणार्थे प्रेरयन्तीत्यर्थ। यमकसंसृष्टोऽनुप्रासालकार। शार्दूलविक्रीडित वृत्तम् ॥१४॥

**कुर्वन्मथानदण्ड निजकरकलित देवताभूतशक्र–**
**स्तम्भान्निश्चेष्टहस्ता विदधदथ हरि स्तन्यकामो यशोदाम् ॥**
**क्षीर चोद्रेच्य चुल्या शुचिमरुदरुणै शोषयन् भीतभीतै–**
**र्भीषाश्रुत्या विजज्ञे मणिकमपि दृषन्मृत्युना घातयन्द्राक् ॥१५॥**

**अन्वय** — अथ स्तन्यकामोहरि देवताभूतशक्रस्तभात् यशोदा निश्चेष्टहस्ता विदधत्, मथानदड निजकरकलित कुवन्, चुल्या क्षीर च उद्रेच्य भीतभीतै शुचिमरुदरुणै शोषयन् मणिकमपि दृषन्मृत्युना घातयन् भीषाश्रुत्या द्राक् विजघ्ने।

**व्याख्या—कुर्वन्निति ॥ अथ** अनन्तरम्। **स्तन्यकामो हरि** –स्तनयोर्भव स्तन्यम्। स्तन्य कामयतेऽसौ स्तन्यकाम पय पानार्थी श्रीकृष्ण। **देवता भूतशक्रस्तभात्** शक्रस्य स्तभ शक्रस्तभ। देवताभूतो देवतेव पूजित शक्रस्तभो देवता भूतशक्रस्तभ तस्मात्। मथनकर्मणि सहायीभूतइन्द्रस्तभात्, मथनदण्डात् **यशोदा निश्चेष्टहस्ता विदधत्** निश्चेष्टौ क्रियारहितौ हस्तौ यस्या सा ताम्। विदधत् कुर्वन्। मथनकर्मणि मथनकर्मप्रसक्ता यशोदा चलन–वलन क्रियारहितहस्ता कुर्वन्। **मथानदड निजकरकलित कुर्वन्** मथदण्ड स्वहस्ताभ्या गृह्णन्। **च** तदनतर। **चुल्या क्षीरम् उद्रेच्य**–चुल्लिकाया तापयितु स्थापित दुग्धमुत्ताय। **भीतभीतै शुचिमरुदरुणै** –अतिशयभीतैरग्निवायुसूर्यै शोषयन् **तत्** क्षीर तापयन्। भीतभीतै रितिभृशार्थे द्वित्वम्। अनेन श्रीकृष्णस्य सार्वभौमत्वमितिभाव। **मणिकमपि** त दधिघटमपि। **दृषन्मृत्युना घातयन्** दृषदा मृत्यु दृषन्मृत्यु तेन। लोष्ठाघातेन ताडयन। **भीषाश्रुत्या द्राक् विजघ्ने** भीषया श्रुत्या भीषाश्रुत्या भयकरेण शब्देन सह प्रस्फोटयामास। नष्ट कृतवान् इत्यर्थ स्रग्धरावृत्तम् ॥१५॥

**धत्तेऽधश्च खलाक्षरान्वयमितीवाङ्घ्रिद्वयेनाधरी–**
**कुर्वन्नेष उलूखल खलतते शास्ता स्वकार्ये पुरा ॥**
**मर्केभ्यो विहितोद्यमेभ्य इव सद्धैयगवीन ददत्**
**भुङ्क्तेस्म स्वयमप्यकुण्ठविभव पाटच्चराचारभाक ॥१६॥**

**अन्वय** ––खलतते शास्ता पुरा स्वकार्ये खलाक्षरान्वयम् अधश्च धत्ते। इतीव। एष उलूखलम् अङ्घ्रिद्वयेन अधरी कुवन्, विहितोद्यमेभ्य मर्केभ्य इव सद्धैयगवीन ददत, अकुठविभव, पाटच्चराचारभाक्, स्वयमपि भुङ्क्ते स्म।

**याख्या—धत्ते इति ॥ खलतते** खलाना दुष्टाना तति श्रेणि समूह इत्यर्थ, तस्या। **शास्ता** नियन्ता। दुष्टाना नियन्ता। **पुरा** पूर्वस्मा देव अद्यापि पयन्तम्। **स्वकार्ये खलाक्षरान्वयम्** ‘खल’ इति अक्षरद्वयनाम्ना यद्यत् वर्तते तत् सर्वम् अर्थात् खल दुर्जन **अधश्च धत्ते** नत स्थापयति नमयतीत्यर्थ। **इतीव इति दर्शयन्निव। एष** हरि। **उलूखलम् अङ्घ्रिद्वयेनाधरीकुर्वन्।**

'अभूततद्भावे च्वि'। पद्भ्यामुलखल नत कुवन्, तस्योपरि तिष्ठन्नित्यर्थ। **विहितोद्यमेभ्य** —विहितो विद्धृत उद्यम प्रयत्नो यैस्ते विहितोद्यमास्तभ्य। चौर्य कर्मणा शिक्यस्थ नवनीत स्रागितु प्रयत्नशीलेभ्यो **मर्केभ्यो** मेर्क एव मर्कटो वानरेभ्य इव गोपबालकेभ्य **सद्धैयगवीन** सत् सुस्वादु हैयगवीन नवनीत ह्योगोदोहोद्भव घृत ददत् अर्पयन्।' 'तत्त हैयङ्गवीन यद्ध्योगोदोहोद्भव घृतम्' इत्यमर। **अकुण्ठविभव** अकुठ अप्रतिहतो विभव श्रीर्यस्य स। अतुलश्रीमानपि। **पाटच्चराचारभाक्** पाटच्चरस्य चोरस्य आचार कर्म त भजतीति भाक्। भज सेवायाम्। 'भजोण्वि' इत्यनेन ण्वि प्रत्यय। चौरकर्म कुर्वन् **स्वयमपिभुङ्क्ते** स्म चखाद।

शार्दूलविक्रीडित वृत्तम् ॥१६॥

**आस्थान एव प्रपतत्पदस्य विकपमानस्य जलार्द्रदृष्टे ॥**
**पुस पुराणस्य गृहीतयष्टि प्रसू कराग्रेऽन्वचलन्न चित्रम् ॥१७॥**

**अन्वय** —कराग्रे गृहीतयष्टि प्रसू आस्थाने प्रपतत्पदस्य विकपमानस्य जलार्द्रदृष्टे पुराणस्य पुस अनु एव अचलत् न चित्रम्॥

**व्याख्या—आस्थान इति॥ कराग्रे** हस्ते। **गृहीतयष्टि**—गृहीता धृता यष्टिर्लगुडो यया सा। धृतकरयष्टिका **प्रसू**र्माता यशोदा। **आस्थाने** सभागृहे गृहागणे इत्यर्थ। **प्रपतत्पदस्य**—प्रपतन्तौ पदौ यस्य स तस्य। पदेपदे पतत। **विकपमानस्य**—विकपतेऽसौ विकपमान। शानच्। तस्य। जातवेपथो। **जलार्द्रदृष्टे**—जलेन अश्रुणा आर्द्रा क्लिन्ना दृष्टिर्यस्य स तस्य अश्रुपूर्णचक्षुप रुदत इत्यर्थ। **पुराणस्य पुस** पुराणपुरुषस्य। **अन्वेवाचलत्** अन्वगच्छत् इति न चित्रम् नाश्चर्यमिदम्। पितरौ पुत्रमेवानुगच्छत। अतोऽत्र माता यशोदा पुराणपुरुषस्याऽस्य विष्णो श्रीकृष्णस्य पश्चात् गच्छतीति किमाश्चर्यम्॥ उपजाति वृत्तम्॥ १७॥

**श्रुतिनुतमतिशेते निर्गुण यत्स्वरूप**
**ननु दशकरशाखोन्मानतो व्याप्य विश्वम्।**
**कथमविबुधगोपोद्भावितै स्तैर्गुणौघै-**
**स्तदफलपरिमाणे द्व्यगुलोनैर्न भाव्यम् ॥१८॥**

**अन्वय** —यत निर्गुण स्वरूप श्रुतिनुत ननु विश्व व्याप्य दशकरशाखोन्मानत अतिशेते। अविबुधगोपोद्भावित गुणौघै तदफलपरिमाणे तै द्व्यगुलोनै, कथ न भाव्यम्

**व्याख्या—श्रुतिनुतमिति ॥ यत् निर्गुण स्वरूपम्**-गुणै रहित निर्गुण, यत् ब्रह्म न केनापि गुणेन व्याप्त परिवेष्टित वा। यस्य निर्गुणमेव स्वरूपम्। **यत् श्रुतिनुतम्** श्रुत्या आम्नायेन नुत स्तुतम्। **ननु** निश्चयेन **विश्व व्याप्य दशकर-शाखोन्मानत** दशकरशाखाना दशागुलीनाम् उन्मानम् अधिकमान तस्मात् तसि। 'अगुल्य करशाखा स्यु' इत्यमर। **अतिशेते** अतिशयेन वर्तते। यस्य ब्रह्मणो निर्गुणमेव स्वरूप यच्च वेदै परिमाणग्रहणरूपया स्तुत्या कथित भवति तदपि तत् ब्रह्म सर्व चराचरात्मक विश्व व्याप्य दशागुलीनामु मानेन, अतिशयेन भूत्वा वतते। अत **अविबुधगोपोद्भावितै** [illegible]नैरुद्भावितैर्मानकल्पितै। **गुणौघै** रज्जुसमूहै। तदेव ब्रह्म इह यदज्ञगोपा रज्वादिभिर्मान कुर्वतो भवति चेत् तर्हि तदा **तद्फलपरिमाणे** तन्मानस्य अफलपरिगणने निष्फलप्रयासे इत्यर्थ। तत् ब्रह्मस्वरूप तै रज्वादिभि**र्द्व्यगुलोनै**र्द्व्यगुलेन ऊनैर्न्यूनै **कथ न भाव्यम्** कथ न भवत् अपितु स्यादेव ॥

ब्रह्मण स्वरूप यत् वेदै प्रतिपादित तत् निर्गुणमेव, गुणातीतमेव वर्णितम्। तस्य देशकालपरिमाणराहित्यात् 'अणोरणीयान् महतो महीयान्सत्तामात्र निर्विकार निरीहम्' इत्यादिवचनैर्निरूपित रूप सगच्छते। अतस्तत् ब्रह्म पुरो दृश्यमानमिद विश्व जगत् सर्वतोऽभिव्याप्यापि दशागुल्परिमाणेनाऽतिरिच्यते। 'सभूमि विश्वतो वृत्वा त्यतिष्ठद्दशागुलम्' इति वेद कथयति। तस्मात् गोपा स्वाज्ञत्वकारणेन तत् ब्रह्म परिमातुमिच्छन्तो लौकिकदामभिस्तत मिमतेस्म। तथा च तन्मानग्रहणे यदि लौकिकरज्जवो द्व्यगुलेन न्यूना जातास्तर्हि नायमाश्चर्यविषय। गुणा निर्गुणस्य मान कर्तु सर्वथाऽसमर्था। यद् ब्रह्म निखिल चराचरात्मक जगत् सर्वतोभिव्याप्यापि दशागुलैरधिक वर्तते। अत कविर्गुणशब्दश्लेषेण ब्रह्मणोमहत्व गोपानामज्ञत्व साधयन् निष्फलप्रयत्नस्य व्यर्थत्व व्यग्य ध्वनिना बोधयतीति भाव ॥ श्लेषालकार मालिनी वृत्तम्। यथा। न न म य य युतेय मालिनी भोगिलोकै ॥१८॥

**चौर्यानुकूल्यभृदनभ्रमुलूखल च**
**कृष्ण च तत्र सहसापि विमुक्तिद तम् ॥**
**रोषाद्बबध जननी कठिनेन दाम्ना**
**साम्नापि य न वशयन्ति विरिचिमुख्या ॥१९॥**

**अन्वन**—विरिचिमुख्या साम्नापि य न वशयति। तत्र त विमुक्तिद कृष्ण जननी रोषात् कठिनेन दाम्ना सहसापि बबध। चौर्यानुकूलयभृदनभ्रम् उलूखल च (बबध)।

**व्याख्या—चौर्येति । विरिंचिमुख्या** मुखे भव मुख्य । ' दिगादिभ्यो यत् ' इति यत् । विरिंचिर्ब्रह्मा मुख्य प्रधानो येषु ते । ब्रह्मादिदेवा । **साम्नाऽपि** सामवेद गायनेनापि अथ च उपायचतुष्टयेषु आद्येन साम्नापि । य विभु **न वशयति** न प्राप्नुवन्ति । **तत्र त विमुक्तिद** मोक्षद कृष्ण । **जननी** यशोदा । **रोषात्** क्रोधात् **कठिनेन दाम्ना** सुदृढया रज्ज्वा, उपायेषु तृतीयेणेति भाव । **सहसापि** विना केनापि विचारेण बबन्ध । अथ च दाम्ना उपायेषु द्वितीयेन खाद्यादि मिष्ट प्रलो भनेन स्ववशमानयत् । **चौर्यानुकूल्यभृदनम्रम् उलूखल च ।** चोरस्य भाव कर्म वा चौर्यम् । ' गुणवचन ब्राह्मणादिभ्य कर्मणि च ' इत्यनेन ' ष्यञ् ' । अनुकूलस्य भाव आनुकूल्यम् । अत्रापि ' ष्यञ ' । चौर्ये आनुकूल्य बिभर्ति तत् चौर्यानुकूल्य भृत् । ' क्विप् ' प्रत्यय । चौर्यानुकूल्यभृत् च न नम्र अनम्र च चौर्यानुकूल्यभृदनम्र तत् । यत् चौर्यकर्मणि साहाय्यकारि तथा च उद्धत तिष्ठन् तत् उलूखल च बबन्ध ॥

ब्रह्मादयो देवा य पुराणपुरुष सामगायनेन उपायेष्वाद्येन कर्मणा शात्याग्नि- सधिकर्मणा स्ववश आनेतुमसमर्था सति । तमेव माता यशोदा क्रुद्धा भूत्वा, क्रोधरागो पहता मुक्तिदातार पुत्र श्रीकृष्ण दाम्ना रज्ज्वा उपायेषु तृतीयेण दण्डेन स्ववशमानयदिति भाव ॥ श्लेषालङ्कार । वसन्ततिलकावृत्तम् ॥१९॥

**कुरुससदि द्रुपदजापर शताशुककल्पनाय किमु वात्रिजन्मन ॥**
**वनमेष्यतोऽन्नचयसिद्धयेऽकरोद्गुणसग्रह भजकतापहृद्विभु ॥२०॥**

**अन्वय**—भजकतापहृद्विभु कुरुससदि द्रुपदजापर शताशुक- कल्पनाय वा वनमेष्यत अत्रिजन्मन अन्नचयसिद्धये गुणसग्रह- मकरोत् किमु ॥

**व्याख्या—कुरुससदीति ॥ भजकतापहृद्विभु** भजकस्य भक्तस्य ताप दु ख हरतीति । इति क्विप् । भजकतापहृत् स एव विभु श्रीकृष्ण भक्ततारक । आगामिनि समये **कुरुससदि** सभाया **द्रुपदजापर शताशुककल्पनाय** शतात् परमिति पर शतम् अगणितसख्याकम् अशुक वस्त्र । द्रुपदजाया पाचाल्या पर शताशुकाना कल्पन घटन निर्माण वा तस्मै । द्रौपदीहेतवे अनल्पवस्त्रनिर्माणाय । **वा** अथवा । **वनमेष्यत** वन पाडवाना निवासभूत कानन एष्यत आगमिष्यत **अत्रिजन्मन** मुने दुर्वासस । पाडवाना सत्वहरणाय दुर्योधनप्रेरणादिति भाव । **अन्नचयसिद्धये** पाकसिद्धि कर्तु **गुणसग्रहमकरोत् किमु** अत्र श्लेषेण गुणशब्दे नोत्प्रेक्षते कवि । गुणा रज्जुरूपास्ते एव तन्तव तथा गुणा औदानिका सूदा तथा सग्रह सचयमत्रैवोदरबन्धनमिषादकरोत् किम् । ' शुल्ब वराट स्त्रीतु रज्जुस्त्रिषु वटी गुण. ' । तथा ' आरालिका आन्धसिका. सूदा औदानिका गुणा. ' इत्यमर. ।

श्रीकृष्णो मात्रा यशोदया गुणेन दाम्ना उदरे बद्ध । अतो गुणमनुलक्ष्य उत्प्रेक्षते कवि । गुणा नाम रज्जव ते एव तन्तव वस्त्रनिर्माणाय सूत्राणि तथा गुणा नाम औदानिका पाककुशला । अत सूत्रभूता गुणा ये मात्रा अस्योदरे सयोजितास्ते आगामिनि समये द्रौपदीवस्त्रहरणक्रियाया तस्या वस्त्रपूरणार्थं तथा औदानिकरूपा गुणा पाण्डवाना सत्वपरीक्षणार्थमेष्यत अत्रिपुत्रस्य दुर्वासस औदानिकरूपेणान्नपूरणार्थमनैव्यानेन श्रीकृष्णेनोदरे धृता किम् ? इति उत्प्रेक्षा ।। मञ्जुभाषिणीवृत्तम् ।।२०।।

**हृदयबन्धनभेद्यपिचिन्तना त्स रसलोभधृतोदरबन्धन**
**अनुससार किलोदरमन्तर विदधदोभयभाक्त्वमिति श्रुतिम् ।।२१।।**

**अन्वय**—चिन्तनात् हृदयबन्धनभेदी अपि रसलोभधृतोदरबन्धन स उदरम् अन्तर विदधत् आ उभयभाक्त्वम् इति श्रुतिम् अनुससार किल ।।

व्याख्या—**हृदयेति ॥ चिन्तनात्** ध्यानात् ध्यानयोगमात्रेणैव **हृदयबन्धनभेद्यपि** हृदयस्य मनस बन्धन लोभमोहादिषडरिपो पाश तस्य भेदी छेत्ता । भवबन्धनान्मोचयिता इत्यर्थ । अपि एवभूतोपि । **रसलोभधृतोदरबन्धन** रसस्य नवनीतादे लोभेन काम्यया धृतम् उदरबन्धन येन स । स श्रीकृष्ण । **उदरमन्तरम्** उदर जठरम् अन्तरम् ईषद्भेदम् । अथ च उदर जठरम् अन्तर मध्यम् । अर्थात् रज्वा उदरमध्यम् अन्तर्गत विदधत् कुर्वन् सन् धारयन् वा । **आ उभयभाक्त्वमिति श्रुतिम् अनुससार किल** आङ् अभिव्याप्तौ । उभय भजते इति उभयभाक् ण्वि प्रत्यय । तस्य भाव उभयभाक्त्वम् । अभिव्यापकत्वेन 'भक्तजनस्य हृदयबन्धनभेदी तथा सगुणरूपेण निजस्यापि धृतबन्धन' इति उभय भवति अर्थात् निर्गुणसगुणरूपद्वय धारयतीत्याकारिका **श्रुति** वेदवाक्य निश्चयेनानुसृतवान् ।

यो हरिर्भक्ताना ध्यानमात्रेण हि भवबन्धनान्मोचयति सोऽत्र नवनीतादिरस लोभात् मात्रा रज्जुबन्धनेनोदर सचिह्नमन्तर्गत कुर्वन् स्वयमेव बन्धे गत । अतोऽनया लीलयाऽसौ बन्धेगतोपि बन्धनभेदीत्याकारकमुभयरूपत्व गच्छतीति स्पष्ट प्रदर्शितवान् इतिभाव । द्रुतविलबित वृत्ताम् ।।२१।।

**शुष्क सजात्योर्बतचिन्तयैव लग्न विमोक्षार्थमिवेश पृष्ठे ।।**
**स्वीकुर्वतो सद्यमलार्ज्जुनाख्या बभूव मध्यस्थमुलूखल तत् ।।२२।**

**अन्वय** —सजात्यो सद्यमलार्जुनाख्या स्वीकुर्वतो बत चितयैव शुष्क तत् उलूखल ईशपृष्ठे विमोक्षार्थ लग्नम् इव मध्यस्थ बभूव ॥

**व्याख्या—शुष्कमिति** ॥ **सजात्यो** समाना जातिर्ययोस्तौ सजाती तयो । काष्ठजातित्व दधानयो **सद्यमलार्जुनाख्या** सती यमलश्च अर्जुनश्च आख्या सद्यमलार्जुनाख्या ता **स्वीकुर्वतो** धारयतोर्वृक्षयो । **बत** इति खेदे अनुकम्पाया वा । अनयोर्मुनिशापान्मुक्ति कथ स्यादिति **चिन्तयैव शुष्क** नीरस **तदुलूखलम् ईशपृष्ठे** परमेश्वरस्य तनोश्चरमभागे । 'पृष्ठ तु चरम तनो ' इत्यमर । **विमोक्षार्थ** तयो काष्ठयोनित्वनाशार्थ । **लग्नम् इव** सतत प्रेरणार्थ गच्छदिव । **मध्यस्थ बभूव** मध्ये तिष्ठतीति मध्यस्थ 'सुपिस्थ इति क प्रत्यय ' तयोर्वृक्षयोर्मध्यमध्यतिष्ठत् ॥

अत्र स्वजात्युपकारार्थ सततचिंतया शुष्कमुलूखल भगवन्त तयोरुद्धाराय प्रवर्तमान तत्पृष्ठे लग्न स्वयमेव तयोर्मध्ये अतिष्ठत्, येन उद्धाराद्विनाऽन्योमाग एव नावशिष्यते इति उत्प्रेक्षते कवि ॥ उपजातिवृत्त ॥२२॥

**सोढु विलबमसमर्थमिव प्रसादे तिर्यक्पतच्चरणपङ्कजयोरुपान्ते ॥**
**सगृह्यमानमिव तिष्ठदुपाचकर्ष यत्सश्रयाप्तदधिदुग्धघृतस्तदीश ॥२३॥**

**अन्वय** —प्रसादे विलब सोढुम् असमर्थमिव चरणपङ्कजयो उपान्ते तिर्यक्पतत् सगृह्यमान मिव तिष्ठत् यत्सश्रयाप्तदधिदुग्धघृत ईश तत् उपाचकर्ष ॥

**व्याख्या—सोढुमिति** । **प्रसादे** अनुग्रहे । **विलब सोढुमसमर्थमिव**—कालापहरणसहनायासमर्थमिव, तद्धेतोर्भगवत **श्चरणपकजयोरुपाते** समीपे **तिर्यक्पतत्** पदकमलयोर्नतमित्यर्थ । तथा **सगृह्यमाणमिव** सम्यक् गृहीतमिव यथाऽधमर्णस्य ऋणग्राहकस्य द्वारि उत्तमर्ण कुसीदक कालातीते ऋणप्राप्त्यर्थ कालापहरणमसहमान साग्रह तिष्ठति तद्वत् तत्रतिष्ठत् । सगृह्यमाणमिति 'णेर्विभाषा' इत्येनेन नस्य णो वास्यात् । **यत्सश्रयात्तदधिदुग्धघृत** यत् सश्रयात् आश्रयात् 'द्वितीया श्रितातीतपतित ' इत्यनेन द्वितीया । चौर्यकर्मणि सहायकत्वात् आप्तानि दधिदुग्धघृतानि येन स । **ईश** श्रीकृष्ण । **तत्** उलूखल **उपाचकर्ष** सुदृढमकार्षीत् । तदूखलाश्रयत्वेन चौर्यकर्मणि प्राप्तदधिदुग्धघृतस्य प्रभो चरणोपाते 'सत्याग्रह' कर्तुमिव तिर्यक् पतितम् अनुग्रहे विलब सोढुमशक्तम् उलूखल स भगवान् श्रीकृष्ण, सुदृढमकार्षीदितिभाव, ॥ वसततिलका वृत्तम् ॥२३॥

**विवेकहीन बहुधान्यखण्डने रत स्वरध्रेपि दृढानुबधभाक् ॥**
**गुणैर्जघन्यैर्जगदीशसश्रयादुलूखल स्वर्नयति स्म भूरुहौ ॥२४॥**

**अन्वय —**विवेकहीन बहुधान्यखण्डने रत स्वरध्रेपि दृढानुबधभाक्। (एतै ) जघन्यै गुणै अपि जगदीशसश्रयात् तत् उलूखल भूरुहौ स्वर्नयति स्म ॥

**व्याख्या—विवकहीनमिति । विवेकहीन** सदसत् ज्ञातु या बुद्धि सा एव विवेकस्तेन हीन रहित मूढमित्यर्थ । **बहुधान्यखडने रत** भूरिधान्यकुट्टने तत्पर। खलपक्षे बहुधा अ यखडने अन्यविनाशने तत्पर। **स्वरध्रेपि दृढानुबधभाक्** स्वरध्रे स्वछिद्रे। खलपक्षे निज दोषे। दृढानुबधभाक्-दृढ गाढम् अनुबध भजते तत्। 'भजोण्वि' इत्यनेन ण्वि । भाक्। अनुबधो नाम प्रकृतस्यानुवर्तन, दोष गुणमेव मन्यमानम्। 'दोषोत्पादेनुबध स्यात्प्रकृत्यादिविनश्वरे। मुख्यानुयायिनिशिशौ प्रकृतस्यानु वर्तने' इत्यमर । **एतैर्जघन्यैर्गुणैरपि** हीनगुणैर्युतमपि। **जगदीशसश्रयात्** श्रीकृष्णस्य कृपालाभात् **तत् उलूखल भूरुहौ** वृक्षौ **स्वर्नयति स्म** स्वर्ग निनाय ॥

सदसत् विवेचनबुद्धिरहित प्रायशोऽन्यविनाशने तत्पर स्वदोष गुणमेव मन्यमान खलपुरुषोपि जगदीशसश्रयात् भगवत परमात्मन कृपालाभो यदि तस्य जायेत तदा स एतादृशैर्नीचगुणैर्युक्तोपि ससारसागरस्य पार गच्छति गमयति च। यथा प्रकृतविषये सदसत् बुद्धिरहित बहुधान्यकुट्टनशील स्वरध्रे छिद्रे सुखे वा गाढ प्रीतिकरमुलूखल परमेश्वराश्रयत्वलाभादेव वृक्षौ स्वर्ग प्रेषितवत् इत्यर्थ ॥ श्लेषससृष्ट उदात्तालकार ॥ वशस्थवृत्तम् जतौतु वशस्थ मुदीरित जरौ इतिलक्षणात् ॥२४॥

**उपकृत यमलार्ज्जुनयोर्ध्रुव सिततनूजनुषैवशोदया ॥**
**विदितबन्धनपीड इवैष तौ मुनिविनिग्रहतो यदमूमुचत् ॥२५॥**

**अन्व —**सिततनूजनुषा यशोदया यमलार्जुनयो ध्रुवम् उपकृतम् एव, यत् विदितबधनपीड इव एष मुनिविनिग्रहत तौ अमूमुचत् ॥

**व्याख्या—उपकृतमिति ॥ सिततनूजनुषा** सिता शोभना तनू देह सिततनू सिततनू एव जनुर्जन्म यस्या सा। तया। जन्मत एव **गौराङ्गी या यशोदा** तया नन्दपत्न्या। **यमलार्जुनयो**र्धनदपुत्रयो**र्ध्रुवम् उपकृत** निस्सशयमुपकार एव कृत । **यत् विदितबधनपीड** बन्धनस्य पीडा दुख बन्धनपीडा विदिता बन्धनपीडा येन स । विदितबन्धनपीड बन्धनेन यद्दु'खभवति तज्जानान' समदु ख इत्यर्थ.

स इव **एष** श्रीकृष्ण । **मुनिविनिग्रहतो** नारदमुनेश्शापात् । मुनेर्विनिग्रहो निग्राहोऽभिशापस्तस्मात् तसि । **तौ** यमलार्जुनौ । **अमूमुचत्** सत्वरमोचयामास ॥ मातू रज्वा बधनेन बधनस्य पीडा जानान श्रीकृष्णस्तौ धनदपुत्रौ शापबधनान्मुक्तौ कृतवान् अतो मात्रैव तौ उपकृतौ, अन्यथा श्रीकृष्णबधनाभावे तयोर्मुक्तिरपि असभवा जाता इति भाव ॥ द्रुतविलम्बित वृत्तम् ॥ द्रुतविलम्बितमाहनभौभरौ ॥२५॥

**कुर्वन्धनेशतनयौ द्रुमजन्मभाजौ**
**श्रीमान्स्वय स तरसोत्कलिताङ्घ्रिबधौ**
**पित्रोर्मुख मुहुरुपेक्षितपादबध**
**प्रादीदृशत्किलकलौ समपक्षपातम्** ॥२६॥

**अन्वय** --द्रुमजन्मभाजौ धनेशतनयौ तरसा उत्कलिताङ्घ्रिबधौ कुर्वन् श्रीमान् स्वय उपेक्षितपादबध स कलौ पित्रो समपक्षपात मुख मुहु प्रादीदृशत् किल ॥

**व्याख्या**—**कुर्वन्निति** । **द्रुमजन्मभाजौ** द्रुमस्य वृक्षस्य जन्म भजत इति द्रुमजन्मभाजौ । तौ । वृक्षरूपौ । **धनेशतनयौ** कुबेरपुत्रौ । **तरसा** झटिति **उत्कलिताङ्घ्रिबधौ कुर्वन्** उत्कलित उद्वृतोऽङ्घ्रिबधो ययोस्तौ उत्कलिताङ्घ्रिबधौ, तौ । निजचरणबधनात् नमनात् इत्यर्थ, तौ मुक्तौ कुर्वन् । **श्रीमान् स्वयम् उपेक्षित पादबध** उपेक्षितो दुर्लक्षित पादबधो येन स । निजपादबधनमुपेक्षमाण **स** श्रीकृष्ण । **कलौ** कलहे तयो पित्रो कलहमध्ये, **पित्रोर्**यशोदा नन्दयोर्मध्ये । **समपक्षपातम्** सम पक्षपातो यस्मिन् तत् । **मुख मुहु प्रादीदृशत्** युवयोर्मध्ये पक्षपात क करिष्यतीति ज्ञातुमेव तयोर्मुख पुन पुनरपश्यत् । दृशिर् प्रेक्षणे इत्यस्मात् णिजन्तात्, लुङिरूपम् । दृष्टु पुन पुन ऐच्छत प्रादीदृशत् । वसन्ततिलकावृत्तम् ॥२६॥

**योऽत्रादृत परविमोचकमेन मद्य**
**श्वोह कियान्ममविमोचयिता पितेति** ॥
**श्रीशेन सकथयता विधृत स्वकट्या**
**नोलूखल बिरुदमेव वय प्रतीम** ॥२७॥

**अन्वय**—य अत्र पिता इति आदृत अद्य मम विमोचयिता (स एव) श्व **एन** परविमोचकम् विमोचयिता (अत) अह कियान् । इति सकथयता श्रीशेन स्वकट्याम् उलूखल विधृत (कि तत्) वय न प्रतीम । वय बिरुदमेव प्रतीम ॥

**व्याख्या—य नन्द अत्र** अस्मिन् कृष्णस्य उलूखलबन्धनविषये। **पिताइति आदृत** आदरणीय **अद्य मम** मे कृष्णस्य **विमोचयिता** बन्धनान्मुक्तिदाता आसीत्। मोचयिता इति तृन्नन्तस्यरूपम्। स एव नन्द **श्व** परेद्यु एन **परविमोचक** परयो यमलार्जुनयो विमोचक मुक्तिदाता तम्। अर्थात् उलूखल **विमोचयिता** मोचयिष्यति बधनान्मुक्ति दास्यति। अत्र मोचयिता इति लुट् लकार। **अत अह कियान्** तत्राह न कोपीत्यर्थ। नात्रमम चिन्ताविषयो वर्तते इत्यर्थ। **इति सकथयता** इत्याभिप्राय सम्यक् प्रदर्शयता **श्रीशेन** श्रीकृष्णेन **स्वकट्या-मुलूखल विधृत** किं तत् **वय न प्रतीम** जानीम **किन्तु बिरुदमेव** वय तु तस्य यशोगानमेव विद्म। कियान् इति 'किमिदम्भ्या वोघ' इत्यनेन 'वतुप'। वस्य च घ =इय। 'इद किमोरीश्की' इत्यनेनक्मि की 'यस्येतिच' इत्यनेन इकारलोप। 'अत्वसन्तस्याचाधातो' इति उपधादीर्घ। 'उगिदचा सर्वनाम स्थानेधातो' इति नुमागम। 'सयोगान्तस्य लोप' इति तकारस्य लोप। 'हल्ङ्याब्भ्यो' इति सुलोप। अस्य श्लोकस्यान्यतरेणाप्य वयार्थौ—

**अन्वय**—य पिता इति आदृत सोऽद्य मम विमोचयिता। (अत) श्व अह कियान् इति सकथयता श्रीशेन उलूखल स्वकटचा नो विधृत (किन्तु) **एन** परविमोचकमिति बिरुदमेव विधृतम्। वय प्रतीम ॥

**व्याख्या—य** नन्द **पिता** जनक इति **आदृत** स्वीकृत **सोऽद्य मम विमोचयिता** अस्मादुलूखलबन्धनान्मुक्तिदाता आसीत्। **श्व अह कियान्** अत इत्यैव कारणात् परेद्यु मम किं वैशिष्ट्य महात्म्य वा वर्तिष्यते। **इति सकथयता** इत्याभिप्राय प्रदर्शयता **श्रीशेन** श्रीकृष्णेन **उलूखल स्वकट्या** निजकट्युपरि **नो विधृत** धारण न कृतम्। **किन्तु एन परविमोचकमिति बिरुद** यश एव विधृतम् इति **वय प्रतीम** जानीम। असौ हरि भवबन्धनाद्भक्तविमोचक इति अस्य यश एव वय जानीम नत्वन्यत् इतिभाव ॥ वसततिलका वृत्तम् ॥ उत्प्रेक्षालकार ॥२७॥

**लब्ध प्रसूजनकभेदजुषाच्युतेन**
**त्वेका बबध यदमु विमुमोच चैक ॥**
**कर्मच्छलात्प्रसितमत्र नुतेन योमा**
**मुक्ति नयेद्धि जननी जनक स एव ॥२८॥**

**अन्वय** --प्रसूजनकभेदजुषा तेन अच्युतेन लब्धम् । यत् एका तु अमु बबन्ध एक च विमुमोच । अत्र नु कर्मच्छलात् प्रसित मा यो मुक्ति नयेत् स एव जननी स एव जनक हि । अथ च । य अत्र कर्मच्छलात् प्रसित मा नुतेन मुक्ति नयेत् स एव जननी जनक हि ।।

**व्याख्या--लब्धमिति । प्रसूजनकभेदजुषा** जुष परितर्कणे जोषयतीति जुट् इति क्विप् । प्रसूजनकयो पित्रोर्भेद भिन्नत्व जोषयति तर्कयतीति प्रसूजनक भेदजुट् तेन । माता पित्रोर्मध्ये भेद पश्यता । **तेनाऽच्युतेन** श्रीकृष्णेन **लब्ध** ज्ञातम् । किं लब्ध ? **यत् एका** जननी माता **अमु** कृष्ण **बबध च एकोऽ**न्य पिता अमु **विमुमोच** बधनान्मुक्त कृतवान् । **अत्र नु** इह जगति, **कर्मच्छलात्** कर्मोपसर्गात् कर्मफलभोग्यत्वेन **प्रसितमासक्त मा कृष्ण यो मुक्तिं नयेद्** बधनाद् विमोचयेत् **स एव मे जननी स एव मे जनको हि** ॥ अथ च कवे स्वपक्षे योऽत्राऽस्मिन् जगति । कर्मच्छलात् प्रसित मा मम कर्मानुषगादासक्त मा नुतेन स्तवनेन प्रार्थनेन मुक्तिं नयेत्, अस्माद् भवपाशान्मा विमोचयेत् स एव मम जननी जनकश्च । हि निश्चयेन इति ॥ वसततिलकावृत्तम् ॥२८॥

**भ्रातृभि किल विभज्य गृह्यते पैतृक धनमिद तु साप्रतम् ॥**
**स्वीकृतेऽनुजनुषा ह्युलूखले सजुजोष मुसल करेऽग्रज ॥२९॥**

**अन्वय** —पैतृक धन विभज्य भ्रातृभि किल गृह्यते, हि, इद तु साप्रतम् अनुजनुषा उलूखले स्वीकृते, अग्रज करे मुसल सजुजोष ॥

**व्याख्या—भ्रातृभिरिति ॥ पैतृकम्** पितुरागत पैतृकम् । **धन** वित्तम् । **विभज्य** विभाग कृत्वा । **भ्रातृभि किल** निश्चयेन **गृह्यते** । हि अस्मात् कारणात् । **इदं तु साप्रतम्** समीचीनमेवाऽत्र रामकृष्णयोर्विषयेतु । **अनुजनुषा** अनु पश्चात् जनुर्जन्म यस्य सोऽनुजनुस्तेन । बलरामस्य पश्चात् जन्म यस्य तेन कनीयसा भ्रात्रा श्रीकृष्णेन । **उलूखले स्वीकृते** गृहीते सति । **अग्रजो** ज्येष्ठो बलराम । **करे मुसल सजुजोष** हस्ते मुसल सहर्ष गृहीतवान् । जुष परितर्पणे परस्मैदी परितर्पण परितृप्तिक्रिया । रथोद्धतावृत्तम् । रान्नराविहरथोद्धतालगौ ॥ 'अर्थान्तरन्यासालकार' ॥२९॥

**वैकुण्ठादवतीर्य तूर्णमिह सद्वृन्दावन कुर्वति**
**ब्राह्मीं वाचमनुक्षण प्रपठिता वैयग्रहेतोरिव ॥**

**श्रीमान् विस्मृतवत् कियन्तमवधिं भिन्नार्थयँल्लीलया**
**श्रीकृष्णः स्मृतवद्दुरात्महननात्पूर्वाययन्नप्यभात् ॥३०॥**

**अन्वयः**—'वैकुण्ठात् इह अवतीर्य तूर्णं सद्वृन्दावनं कुरु' इति वैयग्रहेतोः इव अनुक्षणं प्रपठितां ब्राह्मीं वाचं श्रीमान् कियन्तमवधिं लीलया विस्मृतवत् भिन्नार्थयन् श्रीकृष्णः दुरात्महननात् स्मृतवत् पूर्वाययन् अपि अभात् ॥

**व्याख्या**— **वैकुण्ठादिति** ॥ **वैकुण्ठात्** निजधाम्नः । **इहाऽवतीर्य** अस्मिन् जगति आगत्य । **तूर्णं** सत्वरं **सद्वृन्दावनं कुरु** वृन्दावनं गोकुलं सत्वरमविलम्बेन सर्वथा शोभनं कुरु । **इति** इत्थमादेशानुपूर्वीं ब्रह्मणः कथितां वाचं गिरं । **वैयग्रहेतो-रिव** । व्यग्रमेव वैयग्रं अण् प्रत्ययः । किन्तु 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्या-मैच्' । इति सूत्रेण आदिवृद्धिमनादृत्य ऐच् प्रत्ययः । तस्य हेतोः तदेवकारणादिव व्यासक्तेन इव इत्यर्थः । 'व्यग्रोव्यासक्त आकुले' इत्यमः । **अनुक्षणं** प्रतिक्षणम् । **प्रपठितां** प्रकर्षेण पठितां सदा मनसि भाविताम् । तां **ब्राह्मींवाचं** **श्रीमान् कियन्तमवधिम्** कियत् दिनपर्यन्तम् । **लीलया विस्मृतवत्** (अव्ययम्) क्रीडासक्तया विस्मृत्य इव । **भिन्नार्थयन्** अन्यप्रकारेण अर्थभेदं कुर्वन् । अर्थात् वृन्दावनं अलं कुर्वन् । स **श्रीकृष्णो दुरात्महननात् स्मृतवत् पूर्वाययन् अभात्** दुष्टसंहारादनंतरं तां वाचं संस्मृत्य इव पूर्वाययन् पुनः पुनः पर्यालोडनं कुर्वन् शुशुभे । 'अयगतौ' अयते णिजतात् आत्मानं प्रेरयति आययति । पूर्ववत् आययति इति पूर्वाययन् । शत्रतम् । पुनः पुनर्मनसि संस्मरन् पूर्ववदाचरन्नित्यर्थः ॥ शार्दूलविक्री-डितम् ॥३०॥

**मायारूपेण यस्मिन् प्रविशति विपिने वत्सवृन्दं प्रहीणं**
**धैर्येण त्रासशीलं भवति सकपटाश्चर्यदम्भेन वध्वः ॥**
**स्वं स्वं वत्सं सुराणामपिहि करतलेनामृशन्ति स्म भीता-**
**स्तादृग्वत्सासुरस्य श्रितसुहृदिह नाशेषयन्नामतोऽन्यत् ॥३१॥**

**अन्वयः**—विपिने सकपटाश्चर्यदम्भेन मायारूपेण यस्मिन् प्रवि-शति, धैर्येण प्रहीणं त्रासशीलं वत्सवृन्दं भवति । सुराणामपि वध्वः भीताः स्वं स्वं वत्सं करतलेन आमृशन्ति स्म हि । इह श्रितसुहृत् तादृग्वात्सासुरस्य नामतः अन्यत् नाशेषयत्

**व्याख्या—मायारूपेणेति ॥ विपिने** वृन्दावनारण्ये । **सकपटाश्चर्यदम्भेन** कपटेन कैतवेन सहित सकपट तदेवाश्चर्य तस्य दम्भेन व्याजेन । आश्चर्यकारक कपटव्याजेन । **मायारूपेण** गोवत्सस्य कपटरूपेण इति भाव । **यस्मिन्** दैत्ये वत्सासुरे **प्रविशति सति** गोवत्ससमूहे प्रवेश कृतवति सति । **धैर्येण प्रहीणम्** । ओहाक् त्यागे इत्यस्मात् निष्ठा क्त । 'ओदितश्च' इत्येनन निष्ठतश्च न । 'घुमास्थागापा' इत्यादिना आतइत् स्यात् । हीनम् । 'कृत्यच' इत्यनेन नस्य ण । इति प्रहीणम् । विगलितधैर्यम् अतएव **त्रासशील** त्रस्त **वत्सवृन्द** गोवत्ससमूह **भवति** । अस्यासुरस्य कपटेन गोवत्ससमूहप्रवेशात् वत्सवृन्द त्रस्त विगलितधैर्य भवतिस्म इत्यर्थ । अत **सुराणामपि वध्व** देवाङ्गना अपि **भीता** भीतिग्रस्ता । अपीत्यनेन यत्र देवाङ्गना अपि तस्यासुरस्य कपटप्रबन्धेन भीतिग्रस्तास्तत्र का कथा मानुषीणामिति भाव । **स्व स्वं वत्स** निज निज शिशुम् उरोपि 'उरोवत्सच वक्षश्च' इत्यमर **करतलेनामृशन्ति स्म** स्पृशन्ति स्म । शिशूना गोपनार्थमिति भाव । पक्षे निज हृदय स्वास्थ्य दातुमिति भाव । **हि** निश्चयेन । **इह** एव भूते सति । **श्रित सुहृत्** श्रितमाश्रित सुहृद् येन स । भक्तपक्षपाती श्रीकृष्ण । **तादृग्वत्सासुरस्य** तादृश. वर्तमानस्य वत्सासुर एतन्नामको दैत्य तस्य । **नामतोन्यत्** अभिधानाद्भिन्न **नाशेषयत्** नावशेषितवान् । अर्थात् तमसुर नामशेष कथाशेष कृतवान् । तमहन्नित्यर्थ ॥ स्रग्धरावृत्तम् ॥३१॥

**लोकेनादरमात्मनो विदधता नैकान्तिकत्वार्पणात्**
**सत्वेनैव बहिष्कृतेन तमसा शौक्ल्येन सवेष्टित**
**दैतेयोऽपि बक पिबन्नपि मुखादाच्छर्दत्तमेव द्रुत**
**शुद्धात्मापि हृदि श्रयन्नपि दृढ प्राप्नोति कालेन यम् ॥३२॥**

**अन्वय**—आत्मन ऐकान्तिकत्वार्पणात् लोकेन आदर न विदधता, तमसा बहिष्कृतेन सत्वेन इव शौक्ल्येन सवेष्टित दैतेय त पिबन्नपि मुखात् द्रुतम् आच्छर्दत् । शुद्धात्मापि हृदि दृढ श्रयन्नपि य कालेन प्राप्नोति ॥

**व्याख्या—लोकेनेति ॥ आत्मन' ऐकांतिकत्वार्पणात्** एकान्त शीलम् इति ऐकातिकम् 'शीलम्' इत्यनेन ठञ् । तस्य भाव ऐकान्तिकत्वम् । ऐकान्तिकत्वम् अर्पणम् तस्मात् । एकान्तम् तीव्रम् अत्यर्थम् अतिशय वा 'तीव्रैकान्तनितान्तानि' इत्यमर । ऐकातिकत्वार्पणात्—आत्मन. सर्वस्वदानात् । **लोकेन** जगता इहलोके

जगति इत्यर्थ । **आदर न विदधता** अनादर भजता । **तमसा** तमोगुणेन । **वहिष्कृतेन सत्वेन इव** बहि प्रक्षिप्तेन सत्वगुणेन इव **शौक्ल्येन** शुभ्रवर्णेन **सवेष्टित** आवृतो **दैतेयो** दितिभवो दैत्यो बकासुर । **त** श्रीकृष्ण **पिबन्नपि** स्वोदरस्थ कुर्वन्नपि **मुखात् द्रुत** शीघ्रमेव **आर्च्छत्** उदगिरत् । ऋ गति प्रापणयो । पाघ्रेति ऋच्छादेश । य श्रीकृष्ण **शुद्धात्मापि** शुद्धो यमनियमादिभिरष्टाङ्गै परिष्कृत आत्मा येन स । एतादृश पूतात्मा पुरुषोऽपि सभावनाया **हृदि** चित्ते **दृढ** गाढ **श्रयन्नपि** सेवमानोऽपि । **कालेन** अवधिमन्तरेण **प्राप्नोति** लभते ॥

अत्र कविर्बकस्यात्यन्तधवलत्वे उत्प्रेक्षते । अय बकोत्यन्तधवल कथ जात । एवमनुलक्ष्यते यत् गुणाधिक्येन त्रिविधा सृष्टि । राजसी तामसी एव सात्विकीति । अस्य बकस्य तमोगुणप्रधानत्वात् तेन तमसा सत्वगुणभागो बकस्य शरीराद्बहिर्निष्कासितस्तत्स्थान च स्वयमेव पूर्णतया गृहीतम् । निष्कासित सत्वगुणो बहिरागत्य त बक स्वधवलत्वात् गौरवर्णेनावृत्य स्थित । अतोविषकुम्भ पयोमुखइवाऽय बकोऽन्त कुटिलो बहिर्निर्मल इवालक्ष्यतेति भाव । पूतात्मान पुरुषा अस्य श्रीकृष्णस्य स्वचित्ते गाढ चितन कुर्वन्तोऽपि न सद्यस्त प्राप्नुवन्ति अपि तु कालात्ययेन । अतो मलीमसचेता स बकस्त सौकर्येण प्राप्यापि त चित्ते स्थापयितु समथा नाभूदिति स्पष्टार्थ । उत्प्रेक्षालकार । शार्दूलविक्रीडित वृत्तम् ॥३२॥

**श्रीदेव्या प्रार्थितोऽपि श्रवसि निरुपम पद्मराग न गृध्यन्**
**प्रायो रायो न रन्तु बत हृदि विलसत्पद्मराग बभार ॥**
**सोऽय श्रीनन्दसूनू रचयितुमचिनोद्देहभूषाविशेषान्**
**गुञ्जापुञ्जान्निकुञ्जाभिनवरतिपरिक्रान्तमुञ्जाटवीक ॥३३॥**

**अन्वय**—श्रीदेव्या प्रार्थितोपि प्राय राय न रन्तु श्रवसि निरुपम पद्मराग न गृध्यन् हृदि विलसत्पद्मराग बभार । बत ! स अय नन्दसूनु निकुजाभिनवरतिपरिक्रातमुजाटवीक देहभूषाविशेषान् रचयितु गुजापुजान् अचिनोत् ॥

**व्याख्या—श्रीदेव्येति ॥ श्रीदेव्या** लक्ष्म्या । **प्रार्थितोपि** आभूषणमलकाराय कृतानुनयोऽपि । **प्राय** स्वभावत । **रायो न रन्तु**—य सपत्तौ रममाणाय नेच्छन् । **श्रवसि निरुपम पद्मराग न गृध्यन्**—अद्वितीयमणिकुण्डलादि कर्णभूषण श्रवसि धारयितु न गृध्यन् नाभिकाक्षन् । 'गृधु अभिकाङ्क्षायाम्' । शत्रतम् गृध्यन् । **हृदि विलसत् पद्मराग बभार** केवल हृदये सुशोभित श्रीवत्साक दधार । अन्याभूषणानि नाभ्यकाक्षीदित्यर्थ । **बत** ! पश्य इदमाश्चर्य यत् । **सोऽय श्रीनन्दसूनु** स एव

वैकुण्ठवासी श्रीकृष्ण । **निकुजाभिनवरतिपरिक्रान्तमुजाटवीक** - निकुञ्जेषु लतामडपेषु अभिनवा नित्यैवनवनवीना या रति क्रीडा तया परिक्रान्ता आक्राता मुजाटवी मुजादितृणविशेषाणा वन यन स । बहुव्रीह्यन्तेकप् प्रत्यय । एतादृशोऽसौ श्रीकृष्णोऽत्र । **देहभूषाविशेषान् रचयितु** विशेषेणस्वतनु भूषयितु । **गुजापुजानचिनोत्**—गुजाया कृष्णलाया पुञ्जान् स्तबकान् अचैषीत् ।। नदसूनूरचयितुमित्यत्र 'रोरि' इत्यनेन रेफस्य रलोप । तत 'ढ्रलोपेपूर्वस्यदीर्घोऽण इति उकारस्य दीर्घ ।। स्रग्धरावृत्तम् ।।३३।।

**तमापनाशार्थमघो मघोनो रिपुर्बलेनाप्यलघो स घोर ।।**
**अघोच्चय यस्य हि नामघोषस्तृणीकरोति ज्वलनायमान ।।३४।।**

**अन्वय**---अलघो मघोन रिपु स घोर अघ त बलेनापि नाशार्थम् आप । हि यस्य नामघोष ज्वलनायमान अघोच्चय तृणीकरोति ।।

व्याख्या—**तमिति** ।। **अलघो** न लघु अलघु तस्य । बलवत । **मघोन** इन्द्रस्य **रिपु** शत्रु । **स घोरो** भयकर । **अघ** अघासुर । **त** श्रीकृष्ण । **बलेनापि** ओजसापि । **नाशार्थम् आप** हन्तु जग्राह । **हि** निश्चयेन । **यस्य** श्रीकृष्णस्य **नामघोषो** नामसकीर्तनशब्दो **ज्वलनायमानो** ज्वलनमिव आचरति ज्वलनायते इति क्यङ् तस्मात् शानच् ज्वलनायमान । अग्निवत् दाह्यमानो दाहक इत्यर्थ । **अघोच्चय** भूरिपापराशिं तृणीकरोति । च्वि प्रत्यय । तृणवत् दहते । यस्य नामसकीर्तनशब्दे एतादृक् प्रभावो वर्तते । यत् स शब्द पापसमूहान् तृणवत् क्षणात् भस्मी करोति । त नामस्वामिन स अघासुरो हन्तु जग्राह । अर्थात् आत्मविनाशार्थमेव तेन कृष्णो ग्रस्त इति भाव ।। यमकानुप्रासालकार । उपेन्द्रवज्रा वृत्तम् । उपेन्द्र वज्रा प्रथमे लघौ सा ज त ज ग ग इति ।।३४।।

**गूढ चेतसि वक्रिमाणमनिश गृह्णन्नय धूर्तराट्**
**सेहे नो बहिरार्जवाद्धिघटक हस्ताङ्घ्रिकर्ण ध्रुवम् ।।**
**किवा श्रीहरये कृपाजलधये दास्यन्नसूनाददे–**
**प्रागेवामुमपाणिपादजवन श्रुत्युक्तरूपोदयम् ।। ३५।।**

**अन्वय**—चेतसि अनिश वक्रिमाण गूढ गृह्णन् अय धूर्तराट् बहि आर्जवात् हि हस्ताङ्घ्रिकर्ण घटक ध्रुव न सेहे । किवा श्रीहरये कृपाजलधये असून दास्यन् अमु अपाणिपादजवन श्रुत्युक्तरूपोदय प्रागेव आददे ।

**व्याख्या—गूढमिति ॥ चेतसि** अन्तर्मनसि । **अनिश** सतत । **वक्रिमाण गूढ गृह्णन्** जिह्मगत्वान्मनसि सदा गुप्तरूपेण कौटिल्य धारयन् । **अय धूर्तराट्** राजते इति राट् इति क्विप् । असौ वचक अघासुर । **बहिरार्जवात्** बाह्याङ्गेन दण्डवत् सरलत्वात् । हि निश्चयेन । **हस्ताग्निकर्ण** हस्तौ च अग्नी च कर्णौ च हस्ताग्निकर्णम् 'प्राणितूर्यसेनाङ्गानाम्' इत्यनेन एकवत् समास । एतेषाम् अवयवाना **घटक** निर्माण हस्तपादकर्णरूप दास्यन्त, स्वीकार **ध्रुव न सेहे** खलु न सहते स्म । एतेषाम-वयवानामस्तित्व न ममर्ष । **किवा** इदमपि सभवति । **श्रीहरये कृपाजलधये** कृपासागराय श्रीकृष्णाय । **असून् दास्यन्** स्वप्राणान् दास्यमान । **अमुम् अपाणिपादजवनम्** इद हस्तपाद जवनैर्वेगै रहित **श्रुत्युक्तरूपोदय** श्रुत्या वेदेन उक्त यत् रूप श्रुत्युक्तरूप तस्य उदय तम् । **प्रागेव आददे** । आम्नायेन यादृश निर्गुण निराकार स्वरूप कथित तादृश रूप पूर्वमेव स्वीकृतवान् इत्यर्थ ॥

कवि सर्पस्य पाणिपादकर्णराहित्ये गात्रे उत्प्रेक्षते । सोऽघासुर वेदोक्त पाणिपादजवनरूपोपलब्ध्यर्थ, प्रागेव मरणस्यपूर्वमेव, हस्तचरणकर्णाङ्गाना स्वीकार न कृतवान् । यतो दास्यमानप्राण स अघासुर मरणपूर्वमेव पाणिपादजवनरहित रूप दधारेति भाव ॥ उत्प्रेक्षालकार । शार्दूलविक्रीडत वृत्तम् ॥३५॥

**आकाङ्क्षन्नविभेदतो भगवतोऽवस्थानमेवात्मना**
**स्वीकुर्वन्व्रजपुण्यदेशवसति भूमौ शयानश्चिरम् ॥**
**एको विग्रहमात्रसग्रहपरो वाताशनो निश्चलो**
**गोविन्दैकमना स नाकिभयकृद्योगीव भोगी बभौ ॥३६॥**

**अन्वय—**भगवत अविभेदत एव अवस्थान आकाक्षन्, आत्मना व्रजपुण्यदेशवसति स्वीकुर्वन् । चिर भूमौ शयान, एक, विग्रहमात्रसग्रहपर, वाताशन निश्चल गोविन्दैकमना नाकिभय-कृत् स भोगी योगी इव बभौ ॥

**व्याख्या—आकाङ्क्षन्निति ॥** भगवतोऽविभेदत भेदरहितत्वादेव **अवस्थान** स्थितिम् **आकाक्षन्** आत्मन परमेश्वरादभिन्नस्थितिमेवेच्छन् । **आत्मना** स्वेच्छयैव । **व्रजपुण्यदेशवसति** व्रज एव पुण्यदेश तस्मिन् वसति निवास **स्वीकुर्वन्** । **चिर भूमौ शयान** तस्यामेव व्रजभूमौ चिरकाल तिष्ठन्, सर्पत्वात् । **एक** एकाकी नि सग । **विग्रहमात्रसग्रहपर** विग्रह एव विग्रहमात्र शरीरमात्र-मेव सग्रह सचय तस्मिन् पर रत । केवलशरीरमात्रेणैवावस्थितो निष्काम इत्यर्थ । 'शरीर वर्ष्म विग्रह' इत्यमर । **वाताशनो** वायुभक्षक । **निश्चलो** जडवत्

पतित । अथवा एकाग्रचित्त । **गोविन्दैकमना** गोविन्दे एक मनो यस्य स । गोविन्दनामजपतत्पर । **नाकिभयकृत्**–नाक स्वर्गोऽस्ति यस्य स नाकी इन्द्र । भय करोतीति भयकृत् । इति क्विप् । नाकिन इन्द्रस्य भयकृत् स नाकिभयकृत् स्वतपसा इन्द्र प्रति भयोत्पादन कुर्वन्नित्यर्थ । एतादृश **स भोगी** सर्परूपोऽघासुर 'उरग पन्नगो भोगी जिह्मग पवनाशन इत्यमर ' **योगीव बभौ** तपस्वीव शुशुभे ॥

सर्पमुद्दिश्य अन्योत्प्रेक्षा । यथा योगी पुरुषो भगवत्साहचर्यं त्यक्तु नेच्छति, अत तस्य प्रिये देशे निवास करोति, व्रतनियमस्वाध्यायादीनाचरति, सर्वसगपरित्यक्त सग्रहममुर्वाणोव[illegible] रहित सदा तमवपरमात्मान ध्यायस्तिष्ठति । एवमेव देवाना भयदाता सोऽघासुर परमेश्वराद्दूर ग तुमसहमानो बहुकालादारभ्य व्रजभूमौ निवसन्, तपस्यन्, नि सग, असग्रहो, वायुभक्षक, क्रियारहित, सतत भगवच्चिन्तने रत शुशुभे ॥

उत्प्रेक्षालकार । शार्दूलविक्रीडित वृत्तम् ॥३६॥

**द्वित्रैरभ पृषत्कैरिव मुखकलितैर्नामवर्णैस्तदीयै–**
**र्लोके तूर्ण कृतार्थीभवितुमुचितता बिभ्रतोदभ्रबुद्धे ॥**
**व्यात्तास्ये चातकस्यास्य घन इव घनश्याममूर्त्ति प्रविष्ट**
**प्राणाना रोधकोऽभूच्छुभकृदपि सतान्नात्रकिंचिद्विचित्रम् ॥३७॥**

**अन्वय** —लोके तूर्ण कृतार्थीभवितु उचितता बिभ्रत अदभ्रबुद्धे आस्ये, चातकस्य व्यात्तास्ये द्वित्रैरभ पृषत्कै इव तदीयै नामवर्णै मुखकलितै घन इव प्रविष्ट घनश्याममूर्त्ति सता शुभकृदपि, अस्य दभ्रबुद्धे व्यात्तास्ये प्रविष्ट घनश्याममूर्त्ति प्राणाना रोधकोऽभूत् । अत्र किंचिदपि विचित्र न ॥

**व्याख्या —द्वित्रैरिति** । **लोके** इहास्मिन् जगति । **तूर्ण** सत्वर । **कृतार्थी-भवितु** । अभूततद्भावे च्वि । कृतकृत्यो भवितु । **उचितता बिभ्रतो** योग्यता धारयत । **अदभ्रबुद्धेर्**विशालबुद्धे पडितस्य आस्ये मुखे । **चातकस्य व्यात्तास्ये** प्रसृते मुखे । **द्वित्रैरभ पृषत्कैरिव** द्वौ वा त्रयो वा द्वित्रा तैर्द्वित्रै । स्वल्पजलबिंदुभिरिव **तदीयैर्नामवर्णै** तस्य प्रभो 'राम कृष्ण इति ' नामाक्षरै । **मुखकलितै-**र्मुखेन घोषितैश्चेत् तर्हि **घन इव** यथा चातकस्य मुखे प्रविष्टो मेघ चातकस्य प्राणाना शुभकृत् प्राणरक्षकस्तद्वत् **स घनश्याममूर्ति** घनो मेघ इव श्यामा मूर्तिर्यस्य स । श्रीकृष्ण **सता आस्ये** नामघोषणेनैव प्रविष्ट प्रवेश कृत सज्जनाना शुभकृदपि सर्व-प्रकारेण रक्षकोऽपि स्यात् । किंतु **अस्य दभ्रबुद्धेर्**मदबुद्धेरघासुरसर्पस्य **व्यात्तास्ये**

प्रसृते मुखे स्वय सकलशरीरेण **प्रविष्टोपि घनश्याममूर्त्ति तस्य प्राणाना रोधकोऽभूत्** श्वासनिरोधेनेन मारकोऽभूत्, अत्र किञ्चिदपि विचित्रम् आश्चर्य न । दुष्टसहारक स्वभावादिति भाव ।। उपमालकार स्रग्धरावृत्तम् ।।३७।।

**चित्र नैवात्र यद्देव प्रादादस्मै निजा गतिम् ।।**
**परेतस्याऽपि यस्याऽसौ चिक्रीड हृदये चिरम् ।।३८।।**

**अन्वय**---देव अस्मै निजा गति प्रादात्, अत्र चित्र न एव, अस्य परेतस्य अपि हृदये असौ चिर चिक्रीड ।।

**व्याख्या—चित्रमिति** ।। **देव** श्रीकृष्ण । **अस्मै** अघासुराय। **निजा गति** निजधाम वैकुण्ठम्। **प्रादात्** ददौ। **अत्र चित्र नैव** नाश्चर्यमिदम्। किं कारणम् ? **अस्याऽ**घासुरस्य । **परेतस्याऽपि** मृतस्यापि, यद्यापि स मृत तथापि तस्य **हृदयेऽसौ** श्रीकृष्ण । **चिर चिक्रीड** बहुकाल रेमे ।। उदात्तालकार ।। अनुष्टुप् छन्द ।।३८।।

**सन्मण्डलाकारमथो ददद्भि साक सुहृद्भिर्वनभोजन स**
**विधास्यमानाद्भुतरासलीलाभाष्यस्य सूत्रायितमाचचार ।।३९।।**

**अन्वय**---अथो सन्मण्डलाकार वनभोजन ददद्भि सुहृद्भि साक स विधास्यमानाद्भुतरासलीलाभाष्यस्य सूत्रायितम् आचचार ।।

**व्याख्या—सन्मण्डलेति** ।। **अथो** अनतरम्। **सन्मण्डलाकार** सत् प्रशस्त मण्डल परिधिरिव आकार आकृतिर्यस्य तत् सन्मडलाकारम्। तत्। **वन भोजन** वने भोजन वनभोजन तत्। **ददद्भि** प्रयच्छद्भि **सुहृद्भि साक** मित्रै गोपै सह। **स** श्रीकृष्ण । **विधास्यमानाद्भुतरासलीलाभाष्यस्य** विधास्यमाना करिष्यमाणा या अद्भुता विचित्रा रासलीला नृत्यक्रीडा तस्या भाष्य विस्तर तस्य । **सूत्रायित** सूत्र नाम 'अल्पाक्षरमसदिग्ध सारवत् विश्वतो मुखम्। अस्तोभ मनवद्य च सूत्र सूत्रविदो विदु'। इत्यस्मात् सूत्रमिव आचरति सूत्रायते इति, 'क्यङ्' तस्मात् निष्ठा क्त सूत्रायित त सूत्रायितम्। सूत्रमिव नियमेनाबद्धम् आचचार चेष्टामकरोत् ।। वनभोजनाय मण्डलाकृतिरूपेण तिष्ठद्भि सुहृद्भिर्गोपै सह आरप्स्यमानाद्भुतरासक्रीडाया सूत्ररूपनियमान् स श्रीकृष्ण. कथितवान् इति भाव ।। उपजातिवृत्तम् ।।३९।।

**उर्ध्वं स्वप्रतिबन्धकाघदलनात्प्राप्तौचितीका इव**
**श्रीवत्साङकितवत्सवत्सलहरेर्वत्सा वयस्या अपि ॥**
**नीतास्ते द्रुहिणेन सत्यभुवन तद्वैभवे नि स्पृहा**
**कृष्णप्रेम्णि तु सस्पृहा नु सुषुपुस्तस्यैवमायाशये ॥४०॥**

**अन्वय**—स्वप्रतिबन्धकाघदलनात् ऊर्ध्व प्राप्तौचितीका इव श्रीवत्साङकितवत्सवत्सलहरे वत्सा वयस्या अपि द्रुहिणेन सत्य-भुवन नीता । तद्वैभवे ते नि स्पृहा । कृष्णप्रेम्णि तु सस्पृहा नु ? तस्यैव मायाशये सुषुपु ॥

**व्याख्या**—ऊर्ध्वमिति ॥ **स्वप्रतिबन्धकाघदलनात्** स्वस्य प्रतिबन्धक रोधक, स्वर्गप्रवेशाय ब धरूपो द्वाररक्षक स एव अघ अघासुर, पक्षे तद्रूप पाप, तस्य दलनात् विनाशात् । **प्राप्तौचितीका इव** उचितस्य भाव औचितम् । भावे अण् । अण्णन्तत्वात् ङीप् स्त्रियाम् औचिती । प्राप्ता औचित्य औचित्यानि योग्यत्वानि यैस्ते प्राप्तौचितीका । 'शेषाद्विभाषा' इत्यनेन बहुव्रीह्यन्ते कप् प्रत्यय । अघनाशनेन सत्यभुवनगमनाय योग्यत्व प्राप्ता इव । **श्रीवत्साङ्कितवत्सवत्सलहरे** श्रीवत्सेन लाञ्छनेन अङ्कित चिह्नित श्रीवत्साङ्कित । वत्सेषु गोवत्सेषु भक्तजनेषु च वत्सल दयार्द्र वत्सवत्सल स एव हरि श्रीकृष्ण तस्य । वत्सल इति 'वत्सासाभ्या कामबले' इति सूत्रेण ल्चच् प्रत्यय । **वत्सा** गोवत्सा **वयस्या** सखायोपि **द्रुहिणेन** ब्रह्मणा **सत्यभुवन** सत्यलोक, ब्रह्मण निजधाम **नीता** । **तद्वैभवे** तस्य ब्रह्मण वैभवे ऐश्वर्ये **नि स्पृहा** । पर च **ते** वत्स वयस्या सत्यभुवनस्य ऐश्वर्य नैच्छन् इत्यर्थ । **कृष्णप्रेम्णि तु** किन्तु कृष्णस्य प्रेमभावे **सस्पृहा** स्पृहयालव । अर्थात् कृष्णस्य प्रेमभावमैच्छन् । **नु** वितर्के किमिति न ? अस्तीत्यर्थ । **तस्यैव मायाशये** अत तस्य ब्रह्मण एव मायाया आश्रये अर्थात् मायानिकेतने **सुषुपु** निद्रितवन्त । कृष्णप्रेमसम्मुखे ब्रह्मवैभवमनादृत्य मत्यलोकैश्वर्ये क्रीडनमस्वीकृत्य शयन स्वीकृतवन्त इति भाव ॥ उत्प्रेक्षालकार । शार्दूलविक्रीडित वृत्तम् ॥४०॥

**पीयूषादरपश्यतोहरगुण गीर्वाणचेतोहर**
**स्वस्यापीह सुदुर्लभायितमिव स्नेहेन दध्योदनम्**
**गोपा यम्प्रददत्यदक्षिणकरे सबद्धमुष्टिर्बभौ**
**वत्सान्वेषणकृत्स यज्ञततिभि कुक्षिभरि श्रीहरि ॥४१॥**

**अन्वय** —–पीयूषादरपश्यतोहरगुण गीर्वाणचेतोहरम् इह स्वस्यापि स्नेहेन सुदुर्लभायितमिव य दध्योदन गोपा अदक्षिणकरे प्रददति। त गृहीत्वा इति शेप । स यज्ञततिभि कुक्षिभरि सबद्धमुष्टि श्रीहरि वत्सान्वेषणकृत् बभौ ॥

**व्याख्या —पीयूषमिति ॥ पीयूषादरपश्यतोहरगुणम्** पश्यत हर पश्यतोहर. । 'षष्ठी चानादरे' इति सूत्रेण पष्ठी। तथा 'वाग्दिक्पश्यद्भ्यो युक्ति दण्डहरेषु' इति वार्तिकेन अलुक्समास । पश्यन्तमनादृत्य हरतीत्यर्थ, सुवर्णकार चोरश्च। पीयूषस्य अमृतस्य आदर पूज्यभाव । पीयूषादरस्य पश्यतोहर चोर तस्य गुण चौर्यानुकूल्यवृत्तिरस्ति यस्मिन् स तम्। अमृतादरापहरणगुणभाजम्। अमृतमिव विलोभनीयत्वात् चौर्यानुकूल्यम् इत्यर्थ । **गीर्वाणचेतोहरम्** – गीर्वाणाना सुराणा चेतोहर मनोहरम् अमृतसदृशप्राशिताद्वितीयवस्तूना देवानामपि चेतोहरम्। पुन इह अस्मिन् व्रजभूमौ। **स्वस्यापि** स्वत श्रीकृष्णस्यापि **स्नेहेन** प्रेम्णा भावितेन। **सुदुर्लभायितमिव** अलभ्यमिव। **य** दध्योदन दधिभक्त। **गोपा अदक्षिणकरे** वामकरे **प्रददति** ददुरित्यर्थ । आशसाया लट्। **त** दध्योदन गृहीत्वा इति शेप 'भिसा स्त्रीभक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिवि' इत्यमर । **स** श्रीकृष्ण **यज्ञततिभि, कुक्षिभरि** यज्ञाना ततय श्रेणय तानिर्यज्ञम्नूहै यज्ञियहविषान्नेन इत्यर्थ । कुक्षि जठर बिभर्तीति कुक्षिभरि 'फलेग्रहिरात्मम्भरिश्च' इत्यनेन भृञ इन् प्रत्यय तथा 'सज्ञाया भृतृवृजिधारिसहितपिदम' इत्यनेन खच्। खचिमुम्। यो हरिर्यज्ञहविषान्नेन सतर्प्यते स इह दध्योदनेन **सबद्धमुष्टि** सबद्धो मुष्टिर्यस्य स । दध्योदनेन बद्धमुष्टि । **वत्सान्वेषणकृत्** वत्साना गोवत्सानाम् अन्वेषण गवेषण करोतीति वत्सान्वेषणकृत् इति क्विप् प्रत्यय । गोवत्सान् मार्गयितु परिभ्रमन् बभौ शुशुभे ॥ शार्दूलविक्रीडत वृत्तम् ॥४१॥

**कथचिदपि देवता वनगता मदीयानसून्–**
**त्सवत्ससुहृदो हृदो बहिरवच्युतान् कानने ॥**
**प्रदद्युरितिभावयञ्छ्रितदयाब्धिरासा मुदे**
**करे बलिमिवावहन्त्स विचिकाय दध्योदनम् ॥४२॥**

**अन्वय** —–' वनगता देवता मदीयान् हृद बहिरवच्युतान्' असूनिव कानने कथचिदपि अवच्युतान् सवत्ससुहृद प्रदद्यु ' इति भावयन् स श्रितदयाब्धि आसा मुदे करे बलिमिव आवहन् दध्योदन विचिकाय ॥

**व्याख्या—कथचिदिति ॥ वनगता देवता** कानने स्थितदेवता वनदेवता इत्यर्थ । **मदीयान्** मम इमे मदीया तान् । 'त्यदादीनिच' इत्यनेन वृद्धसज्ञा । वृद्धाच्छ । मत्सबधिन, **हृदो बहिरवच्युतान्** हृदयाद्बहिर्निर्गतान**सूनिव** प्राणानिव । **कानने कथचिदप्यवच्युतान्** अरण्ये येनकेनापि कारणेन मार्ग-भ्रष्टान् । **सवत्ससुहृदो** गोवत्सान् गोपालाश्च **प्रदद्यु** पुनरपि यच्छेयु । **इति भावयन्** इति कल्पयन् । **स श्रितदयाब्धि** श्रिताना आश्रिताना दयाब्धि । स श्रीकृष्ण स्वयमेव दयासागरोऽपि । **आसा** वनदेवताना **मुदे** तोषाय, तासा दया प्राप्तुमित्यर्थ । **करे बलिमिव आवहन्** हस्तोपरि उपहारमिव धारयन् । **दध्योदन विचिकाय** दधिभक्त प्राक्षिपत् । चिञ् चयने । 'विभाषा च' इत्यनेन सनि लिटि च कुत्व वास्यात् चिकाय, चिचाय इति ।

मम प्राणानिव प्रियान् कानने मार्गभ्रष्टान् गोवत्सान् गोपालाश्च एता वनदेवता पुनरपि मह्य यच्छेयुरित्याशया स दयासागर तासा तोषाय बलिमिव दध्योदन ददौ इत्यर्थ ॥ पृथ्वीछद जसौ जसयला वसु ग्रहयतिश्च पृथ्वी गुरु ॥४२॥

**अनूढप्रारब्धादरमजननीगर्भविकल**
**बतानन्यक्षिप्तौदनकवलसरुद्धलपनम्** ॥
**अनात्मीयाभिख्याक्षरविवरणक्लेशविवश**
**सुहृद्वृन्द देव सपरिकरमन्यादृगसृजत्** ॥४३॥

**अन्वय**—अनूढप्रारब्धादरम् अजननीगर्भविकलम् अनन्यक्षिप्तौदनकवलसरुद्धलपनम् अनात्मीयाभिख्याक्षरविवरणक्लेशविवशम् सपरिकर अन्यादृक् सुहृद्वृन्द देव असृजत बत ॥

**व्याख्या—अनूढेति ॥** ब्रह्मणा स्वसुहृद्वत्सान् पिहितान् दृष्ट्वा तस्य विधेर्मान भगाय य सुहृत्परिवार प्रभुरसृजत् त वर्णयति ॥ **अनूढप्रारब्धादरम्** ऊढ विधृत प्रारब्ध दैव तस्य आदर स्वीकारो मान्यता वा स ऊढप्रारब्धादर । नञ् समासेन अनूढ प्रारब्धादर तम् । विना दैवेन जनितम् । यस्य जननहेतोर्दैव कारण न इत्यर्थ । **अजननीगर्भविकल** जननीगर्भात् विकलम् दु खितम् । नञ् समासेन अजननी गर्भविकल तत् । जननीगर्भगतोद्भूतक्लेशरहितम् । **अनन्यक्षिप्तौदनकवलसरुद्ध-लपन** न अन्य अनन्य, स्वयमेव कृष्ण तेन क्षिप्त दत्त ओदनकवल तेन सरुद्ध ससृष्ट लपन मुख यत्र तत् तत् । स्वय श्रीकृष्णेनैवदत्तमन्न, कृष्णरूपिसुहृद्वृन्दम् । पुन । **अनात्मीयाभिख्याक्षरविवरणक्लेशविवशम्**- आत्मीयाना बाधवानाम् अभिख्या नाम वार्ता तस्या क्षरो नाश. तस्य विवरणाद् विवेचनात् क्लेश. तेन विवशो

विकल यत्र तत्। नञ् समासेन अनात्मीयाभिख्याक्षरविवरणक्लेशविवग तत्। आत्मीयाना नाशवृत्तताज्जनितक्लेशरहितम्। एतादृक् **अन्यादृक्** असाधारण लोकोत्तरीय **सपरिकर सुहृद्वृन्दम्** गोवत्सै सहित ससखिपरिवार। **देव** श्रीकृष्ण **असृजत्** जनयामास ॥ बत आश्चर्यमिदम्।

शिखरिणीवृत्तम् रसैरुद्रैश्छिन्नायमनसभलाग शिखरिणी। परिकरालकार साभिप्रायविशेषणत्वात् ॥४३॥

**धृष्टो वत्सास्तिरोधात् पितुरिति किमिद चित्रमन्यद्विचित्र**
**यद्वै स्वस्यापि धाताऽपिदधदुत गवामष्टक स्पष्टकपम् ॥**
**भीत्युत्थ वृद्धभावान्निपुणमितरथा दर्शयन्दृष्टरूप**
**दण्ड्योऽस्मीत्येव दण्डाकृतिनुतिकरणात्सूचयन्कृष्णमस्तौत् ॥४४॥**

**अन्वय**—धृष्ट धाता पितु वत्सान् तिरोधात् इति किमिद चित्रम्। उत अन्यत् विचित्र, यत् स्वस्यापि गवामष्टकम् अपिदधत् वै। भीत्युत्थ स्पष्टकपम् इतरथा वृद्धभावात् निपुण दर्शयन् दण्डाकृतिनुतिकरणात् दण्ड्योऽस्मि इत्येव सूचयन् दृष्टरूप कृष्णम अस्तौत् ॥

**व्याख्या—धृष्टेति ॥ धृष्टो धाता** अविवेकी ब्रह्मा पितुर्विष्णो श्रीकृष्णस्य **वत्सान्** गोवत्सान् **तिरोधात्** तिर अधात् तिरश्चकार **इति किमिदं चित्रम्** इत्यहो आश्चर्यम्। **उत अन्यत् विचित्र** न केवलमिद अन्यत् अपरन्तु इदमाश्चर्य, **यत् स्वस्यापि गवामष्टकमपिदधत् वै** निजाष्टनेत्राणा निमीलन कृत्वा खलु पिहितेक्षणो बभूव। ब्रह्मणश्चतुर्मुखत्वादष्टनेत्रत्वम्। **भीत्युत्थ स्पष्टकप** भीतिजनित निजशरीरस्य स्पष्ट वेपथुम्। **इतरथा** । प्रकारवचने थाल्। अय कम्प प्रकारान्तरेणैव। **वृद्धभावान्निपुण दर्शयन्** वृद्धत्वात् निपुण चातुर्येण यथा स्यात् तथा दर्शयन्। अय कम्पो भीत्या न जनित किन्तु वृद्धत्वात् स्वाभाविक इति दर्शयन् इत्यर्थ। **दण्डाकृतिनुतिकरणात्** भूमौ दण्डवत् प्रणिपातात्। **दण्ड्योऽस्मीत्येव सूचयन्** अहमपराधी तस्मात् दण्ड्य शासन भोक्तु योग्य इति सूचयन्। **दृष्टरूप कृष्णमस्तौत्** दर्शनीयरूपस्य कृष्णस्य स्तुति चकार ॥

पितामहो ब्रह्मा पितु श्रीकृष्णस्य गोवत्सतिरोधानकर्मणि स्वयमष्टनेत्रोऽप्यविवेकेनाध इवाचचार, अपि तु आर्द्रमन्तु सन् स्वशरीरकम्प भीत्या न जनित किन्तु स्थविरत्वात् स्वाभाविक इति ससूचयन् तस्य दर्शनीयस्य स्तुति चकार इति भाव ॥ स्रग्धरावृत्तम् ॥४४॥

**वेधावेधादिव बत जगत्सर्जनाधे परागा-**
**न्मन्ये सर्वाप्यसुपरिहराधिक्रियाधिक्क्रियैव ॥**
**मेधा मेधावति न तु ततोऽन्यत्र यत्तादृशीम-**
**प्याराच्छोभा निजगुरुहृदि त्यक्तवान्व्यक्तवासाम् ॥४५॥**

**अन्वय**—वेधा जगत्सर्जनाधे वेधात् परा अगात् इव । सर्वापि असुपरिहरा अधिक्रिया आधिक्रियैव (तस्मात्) धिक्क्रियैव मन्ये । यत् तादृशी व्यक्तवासा शोभा निजगुरुहृदि आरात् त्यक्तवान् । तत तु अन्यत्र मे मेधा न धावति

**व्याख्या—वेधा इति ॥ वेधा** ब्रह्मा **जगत्सर्जनाधे** जगत सर्जन तस्य आधिर्मानसीव्यथा तस्य जगत्सर्जनाधे । जगदुत्पत्तिचिन्ताया । **वेधात्** बधनात् । **परा अगात्** पारमगच्छत् इव । मुक्त इव दृश्यते । ब्रह्मा जगदुत्पत्तिबधनादात्मान मुक्त कृतवान्निव दृश्यते इति भाव । कि कारणम् ? **सर्वाप्यसुपरिहराऽधिक्रिया** सर्वमपि प्राणहरणविधिलेखनाधिकाररूप कर्म । **आधिक्रियैव** तापदायकैव तस्मात् **धिक्क्रियैव** अत धिक्कर्तु योग्या एव मन्ये । **यत् तादृशीं व्यक्तवासा शोभा** व्यक्त स्फुटो वासो निवासो यस्या सा ताम् । यस्मात् कारणात् स ब्रह्मा तादृ गधिकारोऽथ स्ववसते शोभन स्थानम् । **निजगुरुहृदि आरात् त्यक्तवान्-** निजगुरो श्रीकृष्णस्य हृदये आरात् दूरत एव तत्याज, तस्मै श्रीकृष्णायैव दत्तवान् । तेन दत्तम् अधिकारपद तस्मै समर्पितवान् इत्यर्थ । **तत तु मे मेधा अन्यत्र न धावति** इत्यस्मात् मे बुद्धिरन्यत्र न गच्छति । ब्रह्मण इदृक् वर्तनस्यान्यत्कारण न दृश्यते इति भाव ॥

उत्प्रेक्षालङ्कार ।

अथवा अन्यतरेणापि अस्य श्लोकस्यार्थ —

**अन्वय**—'तत निजगुरुहृदि व्यक्तवासा शोभा त्यक्तवान्' (एतादृक्) वेधा जगत्सर्जनाधे परागात् वेधात् इव । यत् सर्वापि असुपरिहरा अधिक्रिया आधिक्रिया धिक्क्रियैव मन्ये । मेधावति अपि मेधा तादृशी शोभाम् अन्यत्र तु न आ अरात् ॥

**व्याख्या—तत निजगुरुहृदि** निजगुरोर्विष्णो श्रीकृष्णस्य हृदि हृदये । **व्यक्तवासा** व्यक्त प्रव्यक्तो वासो वसतिर्यस्या सा ताम् । **शोभा त्यक्तवान् वेधा** स्वपितुर्हृदये ब्रह्मणो या प्रव्यक्ता स्पष्टा वसति, तस्या या शोभा ता त्यक्तवान्

एतादृक् वेधा ब्रह्मा। **जगत्सर्जनाधेः** जगतः सृष्टेः सर्जनम् उत्पत्तिः तस्य आधि-र्मानसीव्यथा तस्य। जगदुत्पत्ति चिन्तायाः। **परागात् वेधात् इव** परागात् उपरागात् वेधात् ग्रहणादिव। चिंताग्रहणग्रस्तो दृश्यते इत्यर्थः। कथम्? यत् **सर्वा अपि असुपरिहरा अधिक्रिया** यत् तस्य सर्वेषामुत्पन्नानां ललाटलेखनक्रिया **आधिक्रिया एव** तापदायक एव तस्मात्। **धिक्क्रियैव** अयोग्यत्वात्। **मेधावति अपि** मेधा कुशाग्रबुद्धिरस्ति यस्य स मेधावान् तस्मिन् मेधावति ब्रह्मणि, कुशाग्रबुद्धेर्ब्रह्मणः। निर्धारणे सप्तमी। अर्थात् मेधावतो ब्रह्मणो मेधा, तस्य धारणावती तीक्ष्णा बुद्धिः। **तादृशीं शोभामन्यत्र तु न आ अरात्** गोवत्सपरिहारकर्मणि यादृशीं शोभां व्यतनोत्। तस्य कुशाग्रबुद्धिर्यया रीत्या प्रकटिताभूत्, तादृशीं शोभाम् अन्यत्र न आअरात् न शुशुभे। तस्य बुद्धेर्व्यापारः तादृक्प्रकारेण अन्यत्रकर्मणि प्रकटितो नाभूदित्यर्थः। मन्ये इति उत्प्रेक्षते कविः। उत्प्रेक्षालंकारः। मंदाक्रान्ता वृत्तम्। मंदाक्रान्ताजलधिषडगैर्मभौनतौतात् गुरुचेत् इति॥ रा दाने। आङ् अभिव्याप्तौ॥४५॥

**सत्यादापतितः सुदृष्टमहिमा सत्यान्त्सवत्सान्त्सखीन्**
**पत्या संगमयंश्छ्रियः पुनरसावत्यादरेणात्मभूः॥**
**गत्या तस्य पवित्रितां व्रजभुवं रत्यास्पदं वर्णयन्**
**प्रत्याप्तः प्रकृतिं ददावथ निजोद्धत्याय पाथोञ्जलिम्॥४६॥**

**अन्वयः**—अथ सत्यादापतितः सुदृष्टमहिमा असौ आत्मभूः सत्यान् सवत्सान् सखीन् पुनः अत्यादरेण श्रियः पत्या संगमयन्। तस्य गत्या पवित्रितां व्रजभुवं रत्यास्पदं वर्णयन्। प्रकृतिम् आप्तः निजौद्धत्याय पाथोंजलिं ददौ

**व्याख्या—सत्यादिति**॥ **अथ** तदनन्तरम्। **सत्यादापतितः** सत्यात् सत्यलोकात् आपतितः आगतः। आपतित इत्यनेन किमपि कुटिलं कर्म कर्तुमनाहूतः खल इव सहसैवागत इति भावः। अथवा सत्यात् सत्यमार्गाद् भ्रष्टः। **सुदृष्टमहिमा** सुष्ठु दृष्टो महिमा भगवत्प्रभावो येन सः। सृष्टं सुहृद्वृन्दं दृष्टवान् इत्यर्थः। **असौ आत्मभूर्ब्रह्मा**। **सत्यान्** यान् पुरा पिहितान् तानेव **सवत्सान् सखीन्**-गोवत्स-सहितान् वयस्यान्। **पुनरत्यादरेण श्रियो** लक्ष्म्याः **पत्या** श्रीकृष्णेन सह **संगमयन्**। गम्लृ गतौ इति णिजन्तात् शतृ प्रत्ययः। पुनः संमेलयन्। **तस्य** हरे**र्गत्या** आवागमनेन। **पवित्रितां** पावित्र्यं नीतां, पूताम्। **व्रजभुवं** व्रजभूप्रदेशम्। तथा **रत्यास्पदं** रत्याः रतिक्रीडाया आस्पदम्। 'आस्पदं प्रतिष्ठायाम्' इत्यनेन सुट्। रतिक्रीडास्थानम्। **वर्णयन्** गायन्। **प्रकृतिमाप्तः** कुटिलत्वं त्यक्त्वा स्वस्वरूपं

स्वस्वभाव प्राप्त । **निजौद्धत्याय** स्वदुर्वर्त्तनाय **पाथोजलि** तोयाञ्जलि **ददौ** । दुर्वर्त्तन त्यक्तवानित्यर्थ । लाटानुप्रास ॥ शार्दूलविक्रीडित वृत्तम् ॥४६॥

**निकुञ्जपुञ्जगुञ्जदुन्मदालिभि स्वनायक-**
**भ्रमादिवाधिवेष्टित स बर्हिबर्हशेखर ॥**
**सुहृद्वृतो यथा वने ननन्द नन्दनन्दन-**
**स्तथाप्रभुर्न स्व पदे न पञ्चचामरोऽपि वा ॥४७॥**

**अन्वय** —स्वनायकभ्रमात् इव निकुञ्जपुञ्जगुञ्जदुन्मदालिभि अधिवेष्टित स बर्हिबर्हशेखर सुहृद्वृत नन्दनन्दन यथा वने ननन्द तथा प्रभु स्व पदे न । वा पञ्चचामरोऽपि न ॥

**व्याख्या—निकुञ्जेति ॥ स्वनायकभ्रमादिव** स्वनायकस्य निजस्वामिनो भ्रमरस्य भ्रमादिव । भ्रमर इव कृष्णवर्ण श्रीकृष्ण स्वनेता भ्रमरोऽस्तीति सभ्रमा दित्यर्थ । निकुञ्जाना लतामण्डपाना पुञ्जेषु पुष्पगुच्छेषु गुञ्जन्तो ये उन्मदा अलय तै **निकुञ्जपुञ्जगुञ्जदुन्मदालिभि** । एतादृशैर्भ्रमरै । **अधिवेष्टित** परिवृत । **स बर्हिबर्हशेखर** बर्हिण मयूरस्य बर्हं पिच्छ शेखरोऽलङ्कारो यस्य स । धृतमयूर-पिच्छशेखर **सुहृद्वृत** गोपबालै परिवेष्टित । **नन्दनन्दन** नन्दसूनु श्रीकृष्णो **यथा वने ननन्द** अत्र व्रजवने मुमुदे । तथा स प्रभु स्व पदे स्व (अव्यय) स्वर्गे इत्यर्थ । वैकुण्ठेपि **न ननन्द** । **वा** अथवा **पञ्चचामरोऽपि न** पञ्च चामरा यस्य स । पञ्चचामरैर्वीजितोपि, छत्रव्यजनचमर्यादिस्वैश्वर्यद्योतक सम्राडपि, स्वस्थाने स्वराज्येऽपि न शुशुभे ॥ [illegible] ॥ पञ्चचामर वृत्तम् । जरौजरौ जगाविद वदन्ति पञ्चचामरम् इति ॥४७॥

**भाग्योत्कर्षाय लक्षद्वितयमपि गवामेककाल द्विजेभ्य**
**सूनोर्गोचारणाद्य प्रथममथपुनर्दत्तवान् स्वर्णधेनू ॥**
**नन्दस्यामुष्य गेहे विततवितरणे मूर्तिभाजा त्वमूषा**
**कृष्णप्रेमैव बीज समजनि विगलत्सीम दानेप्यदाने ॥४८॥**

**अन्वय** —य सूनो गोचारणात् प्रथम भाग्योत्कर्षाय एककाल गवा लक्षद्वितयमपि द्विजेभ्य दत्तवान् । अथ पुन स्वर्णधेनू दत्तवान् । अमुष्य नन्दस्य गेहे विततवितरणे दाने अमूषाम् अदानेपि मूर्तिभाजा दाने तु विगलत्सीम कृष्णप्रेम एव बीज समजनि ॥

**व्याख्या—भाग्योत्कर्षायेति ॥ य नन्द सूनोर्गोचारणात् प्रथम** श्रीकृष्णस्य गोचारणसमयात् पूर्वम् अर्थात् कृष्णजन्ममहोत्सवे **भाग्योत्कर्षाय** पुत्र भाग्योदयाय **एककालम्** एकसमयेनैव **गवा** धेनूना **लक्षद्वितयमपि** 'सख्याया अवयवे तयप्' इत्यनेन तयप् प्रत्यय । द्वौ अवयवौ अस्य द्वितयम् । लक्षस्य नियुतस्य द्वितय द्वय लक्षद्वितयमपि **द्विजेभ्य दत्तवान्** । धेनूना नियुते ब्राह्मणेभ्य प्रादात् । **अथ पुन** श्रीकृष्णस्य गोचारणसमये पुनरपि **स्वर्णधेनू दत्तवान्** हाटकनिर्मितप्रतिकृतिधेनू प्रादात् । **अमुष्य नदस्य गेहे विततवितरणे दाने** वितत विस्तृत प्रचुरमित्यर्थ वितरण दान तस्मिन् । अस्य नन्दस्य गृहे यत् प्रचुरदानम-भूत् तस्मिन् दाने **अमूषा** धेनूनाम् **अदानेऽपि मूर्तिभाजा तु दाने**-अदानेपि इत्यनेन अस्य नन्दस्य गृहे कृष्णस्य गोचारणसमये प्रत्यक्ष जीवन्तीना धनूना दान नाभूत्, किन्तु अमूषा मूर्तिभाजा मूर्त्ती प्रतिमामयी भजन्ते ता मूर्तिभाज 'ण्वि' प्रत्यय । तासाम् । एतासा स्वर्णधेनूना दाने तु **विगलत्सीम** विगल ती च्युता सीमा मर्यादा यस्य तत् विगलत्सीम, अमर्याद **कृष्णप्रेम एव बीज** कारण **समजनि** जातम् । समजनि इति 'दीपजनबुध इत्यदिना' कर्तरि चिण् ॥

अस्य नन्दस्य गृहे यत् भूरि गोप्रदानमभूत् तद्दानस्य कारण पूर्वत्र तु कृष्ण विषय प्रेम तदनतर कृष्णकर्तृक प्रेम इति अमर्याद कृष्णप्रेम, यत् दान स्वाभ्युदयहेतुक तदपि तासा धेनूना दान न सेहे । अत जीवन्तीना धेनूना दान अकृत्वा स्वणधेनू एव दत्तवान् इति भाव ॥ स्रग्धरा छन्द ॥ काव्यलिगम् ॥४८॥

**शैक्या वा कान्दुका वा सह सुहृदसुभि कि च मौष्टाम्बरा या**
**क्रीडाऽभूद्यत्र काले क्व च न किल बलश्रीशयो काननेषु ॥**
**स्वर्गस्त्रीपुसकाना विवशितमनसामप्यनङ्गोग्रबाणै**
**सपूर्णा तत्र नाभूत्तदुपसृतियुजा कौसुमा पाल्लवा वा ॥४९॥**

**अन्वय**—यत्र काननेषु सुहृदसुभि सह बलश्रीशयो या शैक्या, वा कान्दुका, मौष्टा वा आम्बरा, कौसुमा वा पाल्लवा, क्रीडा सपूर्णा अभूत् । सा क्व च न किल काले । कि च । तदुपसृतियुजाम् अनङ्गो-ग्रबाणै विवशितमनसा स्वर्गस्त्रीपुसकानाम् अपि कौसुमा पाल्लवा वा क्रीडा तत्र सपूर्णा नाभूत् ॥

**व्याख्या—शैक्येति । यत्र काननेषु** इहात्र वृदावनारण्येषु । **सुहृदसुभि सह** सुहृद एव असव प्राणा तै, प्राणप्रियैर्गोपै सह । **बलश्रीशयो** रामकृष्णयो **र्या, शैक्या** शिक्य प्रहरणम् अस्या क्रीडाया शैक्या, दोलान्दोलनेन या क्रीडा सा ।

**वा कान्दुका** कन्दुक प्रहरणम् अस्या क्रीडाया कान्दुका। **मौष्टा** मुष्टि प्रहरणम् अस्या क्रीडाया मौष्टा, मुष्टिप्रहारेण क्रीडा। तथैव **आम्बरा,** अम्बरे अवकाशे उत्कूर्दनेन या क्रीडा। तथैव **कौसुमा** कुसुमै पुष्पैर्या क्रीडा। **वा पाल्लवा** पल्लवै र्लतापत्रैर्या क्रीडा। अत्र सर्वत्र 'तदस्या प्रहरणमिति क्रीडाया ण'। इत्यनेन 'ण' प्रत्यय स्त्रियाम् टाप्। एतादृशी या काऽपि क्रीडा रामकृष्णयोर्मित्रैर्गोपालै सह अत्र सपूर्णा अभूत्। सा क्व च न किल काले—तादृशी क्रीडा कस्मिन्नपि समये कस्यापि कस्मिन्नपि स्थाने नाभूत्। **किं च** न केवलमिदम् अपितु। **तदुपसृति-युजा** तस्य परमात्मन उपसृति सानिध्य ता युजन्तीति तदुपसृतियुज तेषाम्। तस्य परमात्मन सानिध्य प्राप्तानाम्। **अनङ्गोग्रबाणैर्विवशितमनसा** कदर्पशरैरुन्मत्तता गतानाम्। **स्वर्गस्त्रीपुसकाना** स्वर्गस्थस्त्रीपुरुषाणामपि, नाकाधिष्ठितदेवीदेवानामित्यर्थ। **कौसुमा पाल्लवा वा क्रीडा तत्र सपूर्णा नाभूत्।** तत्र स्वर्गलोके देवानामपि क्रीडा सर्वतया परिपूर्णा नाभूत् यथा प्रभो क्रीडात्राभूदित्यर्थ। स्रग्धरावृत्तम् ॥४९॥

**दौष्कर्म्यात्प्रविशन्तमुन्मदमधोभूत तदन्ध तम**
**स्वर्गायेव हठान्महीरुहततेरूर्ध्व क्षिपन्धेनुकम् ॥**
**तालाङ्को हितदर्शनो निपततान्तद्वर्ष्मभाराद्ध्वनि**
**तालाना पुनरुक्तयन्त्स वयसा सत्पाणितालैर्बभौ ॥५०॥**

**अन्वय**—दौष्कर्म्यात् प्रविशन्त, उन्मद अधोभूतम् अन्ध तम तत् धेनुकम्, हठात् स्वर्गाय इव महीरुहतते ऊर्ध्व क्षिपन्, तद्वर्ष्म-भारात् निपतता तालाना ध्वनि, वयसा सत्पाणितालै पुनरुक्तयन्, स हितदर्शन तालाङ्क बभौ ॥

**व्याख्या—दौष्कर्म्यादिति॥ दौष्कर्म्यात्प्रविशन्तम्,** दुष्कर्मणो भावो दौष्कर्म्यम्। 'गुणवचनब्राह्मणादिभ्य कर्मणि च' इत्यनेन 'ष्यञ्'। तस्मात् प्रविशन्तम् आगच्छन्तम्। किमपि कुटिल कर्म कर्तुं गोवत्साना मध्ये प्रविशन्तमित्यर्थ। **उन्मदम्** उन्मत्तम्। अधोभूतम् अध सपद्यमान नम्र, कुटिलहेतोर्विनीतमिव वर्तमानम्। **अन्ध तम** तमोगुणत्वाद्गाढान्धकार **तत्** एतादृक् **धेनुक** धेनुवत्सरूपम् असुरम्। **हठात् स्वर्गायेव** बलेन स्वर्ग नेतुमिव। **महीरुहतते** महीरुहाणा वृक्षाणा तति पङ्क्ति तस्या **ऊर्ध्व क्षिपन्** प्रक्षिपन्, अस्यन् इत्यर्थ। **तद्वर्ष्म-भारात्** तस्यासुरस्य शरीरभाराद्गुरुत्वात्। 'शरीर वर्ष्म विग्रह' इत्यमर। **निपतता तालाना ध्वनिं** तालवृक्षाणा पतनेनोत्थित शब्दम्। **वयसां**

**सत्पाणितालै** सुहृदा हर्षसूचनाय कृतकरतलध्वनिभि । **पुनरुक्तयन्** प्रतिध्वनि कुर्वन्। **स हितदर्शन** उपकारदक्ष **तालाङ्क** बलरामो **बभौ** शुशुभे। ' तालाङ्को मुसलीहली ' इत्यमर । शार्दूलविक्रीडित वृत्तम्।

हितदर्शन 'हि गतौ वृद्धौ च' हिनोतेर्निष्ठा, हित दर्शन यस्य स हितदर्शन , यो दर्शनमात्रेणैव हितकारी, एतादृशोऽसौ उपकारदक्ष तालाङ्को बलराम अस्य दैत्यस्य वधात् कर्मणोपि बभौ शुशुभे इति भाव । परिकरालकारोनुप्रासानुप्राणित ॥५०॥

**आगोपापेयनीराजनि तपनसुता या भुजङ्गानुषङ्गा-**
**न्मुञ्चन्ती जीवन द्रागवनतविषये तद्विशुद्धि चिकीर्षु ॥**
**कृष्ण कृच्छ्रातिकृच्छ्रोपचयमुचितमारोपयत्तत्तटस्थान्**
**प्रायश्चित्तेन तेषा सपदि परिहरन्किन्नु सानिध्यदोषम् ॥५१॥**

**अन्वय** --आगोपा तपनसुता या अवनतविषये जीवन मुचन्ती भुजङ्गानुषङ्गात् अपेयनीरा अजनि। तद्विशुद्धि द्राक् चिकीर्षु कृष्ण तेषा सानिध्यदोष सपदि परिहरन्। किन्नु प्रायश्चित्तेन तत्तटस्थान् उचित कृच्छ्रातिकृच्छ्रोपचय आरोपयत् ॥

**व्याख्या**--**आगोपेति**। **आगोपा** आ अभिव्याप्य । पा पाने। आसमतात् गा पातु ( जलपानार्थमित्यर्थ ) प्रेरयति, पालयति या सा आगोपा । ' पातेर्णौ लुग्वक्तव्य ' इत्यनेन लुगागम । **तपनसुता** सूर्यतनया यमुनानदी। **या अवनतविषये जीवन मुचन्ती** या यमुना नदी निजप्रवाहस्य निम्नप्रदेशे जल प्रस्रवन्ती। 'जीवन भुवन वन। कबन्धमुदक पाथ ' इत्यमर । **भुजङ्गानुषङ्गात्**-कालिय नागस्य विषससर्गात्। **अपेयनीरा अजनि**-पातु योग्य पेय, न पेय अपेय नीर जल यस्या सा। जलपान कारयितुमयोग्याऽभूत्। अजनि इति 'दीपजनबुधपूरि ' इत्यनेन कर्तरि चिण्। अथवा भुजङ्गानुषङ्गात् सर्पविष ससर्गात् अवनतविषये पानार्थ नते निम्नप्रदेशे जीवन मुचन्ती प्राण हरन्ती अपेयनीरा अजनि। अत **तद्विशुद्धि द्राक् चिकीर्षु**, कर्तुमिच्छति चिकीर्षति तस्मात् उ प्रत्यय । तस्या जलस्य शोधन तूर्ण कर्तुमिच्छु श्रीकृष्ण । **तेषा सानिध्यदोष सपदि परिहरन्** तेषा तटप्रदेशे न्युषिताना भुजगस्य सानिध्येन विषोपसर्ग सपदि तत्काल परिहरन्। **किन्नु प्रायश्चित्तेन** प्रायश्चित्तविधानेन। 'प्रायो नाम तप प्रोक्त चित्त निश्चय उच्यते। तपोनिश्चयसयोगात् प्रायश्चित्तमितीर्यते ॥ इति **तत्तटस्थान् उचित** योग्य **कृच्छ्रातिकृच्छ्रोपचयम् आरोपयत्** कृच्छ्र-अति कृच्छ्राणा प्रायश्चित्ताना यथायोग्य प्रायश्चित्तम् अकथयत् ॥ उत्प्रेक्षालकार ॥ स्रग्धरावृत्तम् ॥५१॥

**विषमे पतनाय जायते खलसङ्ग क्षणिक सतामपि ।।**
**न्यपतद्धि कदम्बसश्रित प्रभुरायामिनि यामुने ऱ्हदे ।।५२।।**

**अन्वय**—खलसङ्ग क्षणिकोऽपि सता विषमे पतनाय जायते । कदम्बसश्रित प्रभु आयामिनि यामुने ऱ्हदे न्यपतत् हि ।।

**व्याख्या—विषमे इति ।। खलसड्ग· क्षणिकोऽपि**—दुर्जनसमागमो यद्यपि क्षणिक अल्पात्यल्पकालिक तथापि, **सता** सज्जनाना प्रति । **विषमे पतनाय जायते** आपदि पतनाय कारण भवति । कथ तदुदाहरति । **कदम्बसश्रित प्रभु** कदम्बो नीपवृक्ष त सश्रित आरूढ इत्यर्थ । **प्रभु** श्रीकृष्ण । अयामिनि विशाले । **यामुने** यमुनाया अय यामुन तस्मिन् यामुने । **ऱ्हदे** यमुनायारगाध जले 'तत्रागाधलजो ऱ्हद' इत्यमर । **न्यपतत् हि** पपात खलु ।। यमुनायास्तट स्थत्वेन भुजगस्य सान्निध्यात् कदबस्यापि दुर्जनत्वमिति भाव ।। अथान्तरन्यासालकार ।। वियोगिनीवृत्तम् लक्षणन्तु विषमे ससजगा समे च सभरलगा इति ।।५२।।

**भोगिस्वर्भानुविद्ध हृदयगततमस्तस्कराहस्करप्रा—**
**गाबालादा च वृद्धाद्व्रजवसतिजुषश्चापशोर्वीक्ष्य सर्वे ।।**
**कृष्ण त्यक्तान्नपाना प्रविलपनसरित्सगतौ गाढमग्ना**
**कालिन्दीदिव्यतीर्थे व्यवसितमतयस्ते सुदानेष्वऽभूवन् ।।५३।।**

**अन्वय**—हृदयगततमस्तस्कराहस्कर कृष्ण भोगिस्वर्भानुविद्ध वीक्ष्य, आबालात् च आवृद्धात्, आपशोश्च, सर्वे व्रजवसतिजुष प्राक् त्यक्तान्नपाना प्रविलपनसरित्सगतौ गाढमग्ना कालिन्दीदिव्यतीर्थे ते असुदानेषु सुदानेषु वा व्यवसितमतय अभूवन् ।।

**व्याख्या—भोगीति ।। हृदयगततमस्तस्कराहस्कर** हृदये गत तम· अज्ञानान्धकार तस्य तस्कर चोर अपहारक स एव अहस्कर सूर्य तम् । तेषा ज्ञानदर्शक **कृष्ण** । **भोगिस्वर्भानुविद्ध वीक्ष्य** भोगी सर्प एव स्वर्भानु राहु तेन विद्धो ग्रस्त तम् । कृष्णरूप सूर्य सर्परूपेण राहुणा ग्रस्त वीक्ष्य । एतादृशि ग्रहणपर्वणि । **प्राक्**—सर्वप्रथममेव । **आबालात् च आवृद्धात् आपशोश्च** बालादारभ्य वृद्धपर्यंत पशुसहिता **सर्वे व्रजवसतिजुष** सर्वे व्रजवासिन । **त्यक्तान्नपाना** त्यक्तम् अन्न पान च यैस्ते । कृष्णवियोगात् अथ ग्रहणपर्व अनुलक्ष्य चेति भाव । सर्वे उपोषण कृतवन्त· । **प्रविलपनसरित्सगतौ गाढमग्ना** प्रविलपन भूरि रोदनमेव सरित् नदी तस्या सगति सगम· तस्याम् । रोदनकर्मणि अश्रुप्रवाहे । गाढमग्ना भृशमाप्लुता ।

**कालिन्दीदिव्यतीर्थे** यमुनाया पवित्रजले । **ते** सर्वे । **असुदानेषु** असूना प्राणाना दान तेषु । प्राणाना दान कर्तु । **व्यवसितमतय** व्यवसिता निश्चिता मतयो येषा ते, दृढसकल्पा **अभूवन्**। कालिन्दीजले कृष्णस्य मरण ज्ञात्वा तस्मिन्नेव जले स्वप्राणोत्सर्जनाय दृढसकल्पा अभूवन् । अथ च ग्रहणपर्व अनुलक्ष्य तीर्थक्षेत्रे प्राणादधिक योग्य वस्तु सुदानाय दुर्लभ तत प्राणानामेवदानमिति भाव ॥ श्लेषपरपरित रूपकम् ॥ स्रग्धरावृत्तम् ॥६३॥

**सदम्बुरुड्विकर्तन सुरद्विषद्विकर्तन**
**शतफणा विमर्दयन्नहेर्मदोच्छ्रिता भृशम् ॥**
**ननर्त्त नर्त्तनप्रियो यदा तदानुवर्त्तन**
**मृदङगगोमुखानकै प्रचक्रुरप्सरोगणा ॥५४॥**

**अन्वय**—सदम्बुरुड्विकर्तन सुरद्विषद्विकर्तन अहे मदोच्छ्रिता शतफणा विमर्दयन् यदा नत्तनप्रिय भृश ननर्त्त, तदा अप्सरोगणा मृदङगगोमुखानकै अनुवर्तन प्रचक्रु ॥

**व्याख्या—सदम्बु इति ॥ सद्म्बुरुड्विकर्तन** अम्बुनि रोहतीति अम्बुरुट् इति क्विप् । सन्त एव अम्बुरुह कमलानि तेषा यो विकर्तन सूर्य स । कृती छेदने इत्यस्मात् ल्युट् कृन्ततीति कर्तन । विशेषेण बिकासितु योग्य । 'विकर्तनार्कमार्तण्ड' इत्यमर । सत्कमलभास्कर । **सुरद्विषद्विकर्तन** सुरद्विषतामसुराणा विकर्तन छेत्ता स । असुरारिरेतादृश श्रीकृष्ण । **अहे** कालियनागस्य । **मदोच्छ्रिता** मदेन उन्मदत्वेन उच्छ्रिता उत्थिता **शत फणा** फटा **विमर्दयन्** कुट्टयन् । **यदा नर्त्तनप्रिय** नर्तन नृत्य प्रिय यस्य स । नृत्यप्रिय कृष्णो यदा **भृश ननर्त्त** । **तदा अप्सरोगणा** अप्सरसा समूहा , **मृदङ्गगोमुखानकै** र्नानावाद्यै सह तस्य अनुवर्तन प्रचक्रु तेऽपि भृश ननृतुरित्यर्थ ॥ विरोधाभासाश्रित यमकानुप्रासावलङ्कारौ । पञ्चचामर वृत्तम् ॥५४॥

**श्रीपतिर्दमनकैतवादहेरुच्छ्रितोच्छ्रितफणाधिरोहिणीम् ॥**
**शिश्रिये वियति चाप्सरोगणान् पारितोषिकसमर्पणाय किम् ॥५५॥**

**अन्वय**—श्रीपति दमनकैतवात् अहे उच्छ्रितोच्छ्रितफणाधिरोहिणी शिश्रिये । वियति अप्सरोगणान् पारितोषिकसमर्पणाय किम् ? ॥

**व्याख्या—श्रीपतिरिति ॥ श्रीपति** श्रीकृष्ण **दमनकैतवात्** दमनो निग्रह तस्य कैतव व्याज तस्मात् । कालियनागस्य वशीकरणमिषादेव । **अहे** नागस्य ।

**उच्छ्रितोच्छ्रितफणाधिरोहिणीम्**-उच्छ्रितोच्छ्रिता उच्चैरुच्चैर्गता या फणा फटास्तासाम् अधिरोहिणी निश्रेणि ताम्। 'फटाया तु फणाद्वयो' इत्यमर। 'निश्रेणिस्त्वधिरोहिणी' इत्यमर। उन्नतोन्नतगतमहिफणरूप सोपानमार्ग यत् **शिश्रिये** आश्रय कृतवान् तच्च **वियति** नाके स्वर्गे। **अप्सरोगणान्** स्वर्वेश्याना समूहान् **पारितोषिकसमर्पणाय किम्** दक्षिणाप्रदानायैव किम् इति उत्प्रेक्षा। यदासौ श्रीहरि कालियनागस्य फणा विमर्दयन् तासामुपरि नृत्यमकरोत् तदा अप्सरोगणा अपि मृदङ्गादिवाद्यै सह भृश ननृतु तासामीदृक्सेवामनुलक्ष्य श्रीकृष्ण नागस्योन्नतोन्नतफणाना सोपानमार्गकृत्वा तानप्सरोगणान् दक्षिणाप्रदानायैव स्वर्गगमन कृतवान् किमिति उत्प्रेक्षते कवि ॥ रथोद्धताछन्द ॥५५॥

**बाढ हठेन विफलीकृतसत्सुपर्ण**
**प्राज्यागम वनविदूषकमाश्रयाशम् ॥**
**एक द्विजिह्वमपर च स सप्तजिह्व**
**मुख्या स्थिति समनयद्विभुरेककालम् ॥५६॥**

**अन्वय**—बाढ हठेन विफलीकृतसत्सुपर्ण, प्राज्यागम, वनविदूषकम् आश्रयाशम्। एक द्विजिह्वम्। अपर च सप्तजिह्व स प्रभु एक काल मुख्या स्थिति समनयत् ॥

**व्याख्या**—बाढमिति ॥ **बाढ हठेन** अतिरभसा। **विफलीकृतसत्सुपर्णम्** नविफल समर्थ, विफल असमर्थ। अविफलो विफल सपद्यते तथाकृतो विफलीकृत। 'अभूततद्भावे च्वि' विफलीकृत. सत्सुपर्णो गरुडो येन स तम्। **प्राज्यागमम्**-प्रकृष्टेन आज्य प्राज्य। 'प्रभूत प्रचुर प्राज्यमदभ्र बहुल बहु' इत्यमर। प्राज्य प्रचुर आगम आगमन यस्य स तम्। **वनविदूषकम्** वन विशेषेण दूषयति नाशयतीति वनविदूषक तम्। एतादृशम् **आश्रयाश** पावकम्। 'आश्रयाशो बृहद्भानु कृशानु पावको नल' इत्यमर। एताभ्या द्वाभ्या **एक नाग द्विजिह्वम्। अपरं सप्तजिह्वम्** अग्निम्। द्वे जिह्वे यस्य स द्विजिह्व तम्। सप्त जिह्वा यस्य स सप्तजिह्व. तम्। सप्तार्चि अग्नि तम्। एतौ नागपावकौ स प्रभु श्रीकृष्ण **एककाल** एकसमयावच्छेदेन **मुख्या स्थिति** प्रधानावस्था शाततामित्यर्थ **समनयत्**—निनाय ॥ वसन्ततिलका वृत्तम् ॥५६॥

**शब्दाश्रितेन द्विजसङ्गतेन नक्षत्रयुक्तेन गतार्यभासा ॥**
**सयोजितोऽभूदमुना मुखेन यच्चित्रभानु किमुनार्हमेतत् ॥५७॥**

**अन्वय** —शब्दाश्रितेन, द्विजसगतेन, नक्षत्रयुक्तेन गतार्यभासा मुखेन अमुना यत् चित्रभानु सयोजित एतत् किमु न अहम् ।।

**व्याख्या**–शब्द मिति ।। **शब्दाश्रितेन**–आश्रित आश्रय भावे क्त । शब्दम्आश्रित शब्दाश्रित तेन 'द्वितीयाश्रितातीतपतित 'इत्यनेन द्वितीया। यन्मुखात् शब्दोच्चारो भवति तेनेत्यर्थ , शब्दोच्चारकारकेन। **द्विजसगतेन** द्वि द्विवार जायन्ते ते द्विजा दन्ता तै सगतेन युक्तेन । **नक्षत्रयुक्तेन** नक्षत्र मौक्तिकम् । मौक्तिकच्छविदधद् तधारकेन । **गतार्यभासा** गता अर्यस्य स्वामिन श्रेष्ठस्य भा कान्ति यस्मात् तेन। अग्निपानोद्भूत-मालिन्य म्लानता वा गतेन । **मुखेन** स्वाननेन। **अमुना** श्रीकृष्णेन। **यत् चित्रभानु** अग्नि **सयोजित** पीत । **एतत् कर्म किमुनार्हम्** अपितु योग्यमेव, यत् मुखजोग्नि स्वस्थाने प्रापित 'मुखादिन्द्रश्चाग्निश्चप्राणाद्वायुरजायत' इति वेदवचनात् ।। 'सप्तार्चिर्दमुना शुक्रश्चित्रभानुर्विभावसु ' इत्यमर ।। **चित्रभानु**शब्दप्रयोगेण श्लेषेण सूर्यस्यापि ग्रहणम् । 'द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचन ' इत्यमर । **शब्दाश्रितेन** शब्दगुणत्वात् । **द्विजसगतेन** पक्षियुक्तेन । 'दतविप्राण्डजा द्विजा ' इत्यमर । **नक्षत्रयुक्तेन** तारकासहितेन **गतार्यभासा** नष्टसज्जनशोभया। 'महाकुल कुलीनार्य सभ्यसज्जन साधव' ' इत्यमर । **यत्** यस्मात् । **अमुना** न'मु ' मुकारो यस्मिन् तत् तेन अमुना। 'मु'वर्णरहितेन। मुखेन, खेन आकाशेन सह चित्रभानु सूर्य **सयोजितो** युक्त कृत तत् किमुनार्हमपितु योग्यमेव । तैराच्छादितमाकाश सूर्ययुक्त कृतवानित्यर्थ श्लेषालकार ।। काकुश्च ।। इन्द्रवज्रा वृत्तम् ।।५७।।

**गीर्वाणद्विट्प्रधान मदविकलतया नष्टदृष्टि प्रलम्ब**
**प्रत्यारूढ पृदाकुप्रवरतनुतया पादहीनो बलाख्य ।।**
**विद्वन्मान्य पुमान्यो व्यसनमुपगतो विस्मृतात्मावबोधो**
**हत्वैषोऽमुच्यतास्मात्सपदि विधिगुरो सन्निधौ सद्विवेकात् ।।५८।।**

**अन्वय** —विद्वन्मान्य पुमान् य विस्मृतात्मावबोध व्यसन-मुपगत विधिगुरो सन्निधौ सद्विवेकात् सपदि अस्मात् अमुच्यत । (एवम्) एष बलाख्य पृदाकुप्रवरतनुतया पादहीन प्रलम्ब प्रत्यारूढ विद्वन्मान्य विस्मृतात्मावबोध व्यसनमुपगत विधिगुरो सन्निधौ सद्विवेकात् गीर्वाणद्विट्प्रधान मदविकलतया नष्टदृष्टि प्रलम्ब हत्वा — अस्मात् अमुच्यत ।।

**व्याख्या**—**गीर्वाण इति ।। यथा विद्वन्मान्य' पुमान्** पण्डितपुरुष । **यो विस्मृतात्मावबोध** विस्मृत आत्मनोऽवबोधो ज्ञान यस्य स । तस्मात् **व्यस**

**नमुपगतो** विपत्तौ आपतित । **विधिगुरो** विधेविधानस्य सदुपदेशस्य गुरुर्देशिक तस्य । सद्गुरो, **सन्निधौ** । **सद्विवेकात्** सदुपदेशात् । **सपदि** झटिति आत्मानम् **अस्माद्व्यसनादमुच्यत** मुक्त कृतवान् । एवम् एतत् प्रकारेणैव **एष बलाख्यो** बल इति आख्या नाम यस्य स । बलराम । **पृदाकुप्रवरतनुतया** पृदाको सर्पस्य प्रवरा तनु पीवरो देहो यस्य स पृदाकुप्रवरतनु, तस्मात् तल् स्त्रियाम् पृदाकुप्रवरतनुता तया । नागपतिशेषावतारतया । **पादहीन**श्चरणरहित । **प्रलम्ब प्रत्यारूढ** प्रलम्बासुरस्य पृष्ठारूढो, **विद्वन्मान्योऽपि विस्मृतात्मावबोध**, आत्मान विस्मृतवान् । क्रीडासक्ततयात्मानमसुर च विस्मृतवान् इति भाव । तस्मात् **व्यसनमुपगत** पृष्ठारूढत्वात् तस्यासुरस्य विपत्ति प्राप्त । **विधिगुरो**र्ब्रह्मण पितु श्रीकृष्णस्य सन्निधौ सद्विवेकात् । असौ [illegible] इति श्रीकृष्णेन प्रदर्शयितत्वात् इत्यर्थ । **एन गीर्वाणद्विट्प्रधानम्** असुराणा मुख्यम् । **मदविकलतया नष्टदृष्टि** मदोन्मत्तत्वाद् अन्ध, मदान्ध प्रलम्ब हत्वा **अस्मात्** व्यसनात् आत्मानम् **अमुच्यत** मुक्त कृतवान् ॥ 'विधिर्विधाने दैवेपि । तथा 'विधाता विश्वसृड्विधि' इत्यमर ॥ स्रग्धरावृत्तम् ॥ श्लिष्टससृष्टोपमालकार ॥५८॥

**सगवे च सवत्साय सहलाय बलाय ते ॥**
**स्वस्ति स्तात् सहकृष्णाय सहगोपाय सर्वत ॥५९॥**

**इत्याशिष प्रयुजाना मुनयोऽनुनयोक्तिभि ॥**
**प्रशशसुश्च त गोपा साधु साध्विति वादिन ॥६०॥**

**अन्वय**—सहकृष्णाय सहगोपाय सगवे सवत्साय सहलाय च बलाय ते सर्वत स्वस्ति स्तात् इति आशिष प्रजुञ्जाना मुनय अनुनयोक्तिभि त प्रशशसु, साधु साधु इति वादिन गोपा च त प्रशशसु ॥

**व्याख्या—सगव इति** ॥ **सहकृष्णाय** कृष्णेनसह वर्ततेऽसौ सहकृष्ण तस्मै । गोपै सह वर्ततेऽसौ सहगोप तस्मै, **सहगोपाय स्वस्ति स्तात्** । इत्यत्र 'प्रकृत्याशिषि' इति सूत्रेण बहुव्रीह्यवयव 'सह'शब्द. प्रकृत्या स्यादाशिषि, पर च 'अगोवत्सहलेष्विति वाच्यम्' इति वार्तिकेन सहस्य स स्यादाशिषि । **सगवे** गोभि सह वर्ततेऽसौ सगव तस्मै । एव **सवत्साय, सहलाय** एतादृशाय **बलाय** बलरामाय **ते** तुभ्यम् । **सर्वत** सर्वस्मात् **स्वस्ति स्तात्** शुभ भूयात् । **इति आशिष प्रयुञ्जाना** आशिष ददाना, आशीर्वचन वदन्तो **मुनय. तं** बलराम प्रशशसु । तथा 'साधु साधु' इति वादिनो गोपाश्च त तुष्टुवु ॥ 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति आशिषि

'तातङ्'=स्तात् इति 'श्नसोरल्लोप' इतिसूत्रेण असधातोरकारस्य लोप । अनुष्टुब्छ द ॥५९॥६०॥

**गोपालाना कदाचिद्वनमधिवसता धीमता हन्त गाव**
**सच्चेतोवृत्तयस्ता विषयतृणरसाद्गव्हर कर्ममार्गम् ॥**
**ऐषीक सप्रविष्टास्तदुदितमनल शोकमासाद्य भीता**
**नीता स्वाहममत्वाक्ष्यपलपनयुजा कृष्णबोधेन सौस्थ्यम् ॥६१॥**

**अन्वय**—हन्त ! कदाचित् वनमधिवसता धीमता गोपालाना सच्चेतोवृत्तय ता गाव विषयतृणरसात् कममार्गम् ऐषीक गव्हर सप्रविष्टा । तदुदितमनल शोकम् आसाद्य भीता । स्वाहममत्वाक्ष्यपलपनयुजा कृष्णबोधेन सौस्थ्य नीता ॥

**व्याख्या—गोपालानामिति** ॥ **हन्त** इति खेदे ! **कदाचित्** कस्मिश्चित् समये । **वनमधिवसताम्** वने स्थितानाम् । **धीमता** बुद्धिमता **गोपालानाम्** । **सच्चेतोवृत्तय** सत्यश्चेतसो वृत्तय, सद्वर्तनशीला सत्प्रकृतय इत्यर्थ । **ता गाव विषयतृणरसात्** विषयो जिह्वाया प्रलोभन स एव तणरस तस्मात्, तृणरसास्वाद लौल्यात् । **कर्ममार्ग्ग** तृणभक्षणमेवकर्म तदनुसरन्त्य तृण खादन्त्यो गव्हरात् **गव्हर** गच्छन्त्य । **ऐषीक** इषीकस्य इदम् ऐषीकम् इषीकारण्य **सप्रविष्टा** । **तदुदितमनल शोकम् आसाद्य**-तत्रोत्थित दावाग्निरूप शोक दु ख प्राप्य । **भीता** भयसत्रस्ता । तत **स्वाह ममत्वाक्ष्यपलपनयुजा कृष्णबोधेन सौस्थ्य नीता** अक्ष्णाम् अपलपनम् निमीलनम् अक्ष्यपल्पनम् । स्वस्य अह स्वाह । स्वाहभाव इत्यर्थ । तस्मिन् यन्ममत्व तत् स्वाहममत्व तस्मात् अक्ष्यपलपनम् अक्षिनिमील्न त युनक्तीति स्वाहममत्वाक्ष्यपलपनयुक् इति 'सत्सूद्विषत् ' इत्यनेन क्विप् । तेन स्वाहममत्वाक्ष्यपल्पनयुजा । अहकारममत्वादक्षिनिमील्न करणेन कृष्णबोधेन, तदेव अर्थान्तरेण अहकारममत्व दूरीकर्तु कृष्णोपदेशेन सौस्थ्य पूर्वस्थिति नीता प्रापिता ॥ ममत्वबुध्यासक्ता कृष्णोपदेशेनाक्षिनिमील्नक्रियया ममत्व दूरीकृतत्वात् ता गाव सुस्थिति शान्ति नीता इत्यर्थ । **पक्षान्तरेणापि गावो** धेनव तथा च इन्द्रियाणि । **विषयो** विशेषेण सिन्वन्ति बध्नन्ति जनम् अस्मिन्निति विषय । 'षिञ् बन्धने' । इन्द्रियोपभोग्यवस्तु अथवा तीव्रेच्छा । **ऐषीकम्** इषीकनामक अथवा लालसोत्पन्नम् । **स्वाह ममत्वाक्ष्यपलपनम्** स्व, अह ममेत्याकारकज्ञानाभाव पक्षे स्वादग्रहणपराङ्मुखता । कदाचित् वनमधिवसता वने वर्तमानाना गोपालाना गोस्वामिनाम् । पक्षे इन्द्रिययुक्ताना जनाना धीमता बुद्धिमता । गावो धेनव

इन्द्रियाणि च । ता सच्चेतोवृत्तय शुद्धमन सत् प्रवृत्तयोपि । विषयतृणरसात् बालतृणभक्षणजिव्हालौल्यात् । पक्षे तुच्छविषयसेवनकामनाया प्रभावेण । ऐषीक गव्हरम् इषीकनामक काननभागम् । पक्षे वाञ्छाजनित कर्ममार्ग स्पादनकर्म कर्तु अथवा विषयान् भोक्तु सेवितुमित्यर्थ । प्रविष्टा अन्तर्गता पक्षे आसक्ता परन्तु तस्मात् उदितम् अग्नि दावाग्नि पक्षे दाहक शोकम् आसाद्य प्राप्य भीता भीतिग्रस्ता । स्वाहममत्वाक्ष्यपलपनयुजा स्वाहममत्वेभ्यो नयननिमीलनकर्मणा अथ च ममत्व त्यागेन कृष्णबोधेन कृष्णोपदेशेन सौस्थ्य सुस्थितित्व नीता प्रापिता इति भाव । श्लिष्ट परपरितरूपकम् ॥ शार्दूलविक्रीडित वृत्तम् ॥६१॥

**अपिस्वल्पमभ्यन्तरे यो निधातु दवाग्नि जगत्तापक नाप कम्पम्**
**नतीना ततीरस्मि दण्डायमान पिचण्डाय चण्डाय तस्मै वहामि ॥६१॥**

**अन्वय** —य जगत्तापक दवाग्निम् अभ्यन्तरे निधातु स्वल्पमपि कप न आप । तस्मै दण्डायमान अस्मि । चण्डाय पिचण्डाय नतीना तती वहामि ।

**व्याख्या—अपीति** ॥ **य** परमात्मा श्रीकृष्ण । **जगत्तापक** जगत् तापयतीति जगत्तापक ण्वुल् प्रत्यय । तम् । जगन्नाशकम् । **दवाग्नि** दावानलम् । **अभ्यन्तरे निधातु** जठरे स्थापयितु पातुमित्यर्थ । **स्वल्पमपि कप न** आप य किंचिदपि न विकंपितो न भीत इत्यर्थ । **तस्मै** हरये श्रीकृष्णाय । **दण्डायमानोऽस्मि** दण्ड इव आचरति दण्डायते इति 'क्यङ्' तस्मात् 'शानच्' दण्डायमान साष्टाङ्गदण्डवत् प्रणतोऽस्मि । अपितु तस्य **चण्डाय** महातेजसे **पिचण्डायोदराय** । **नतीना तती** नमस्काराणा पङ्क्ती**र्वहामि** समर्पयामि इति कवे प्रार्थना । अनुप्रासालकार । वृत्त तु भुजगप्रयातम् । यश्चतुर्भि ॥६२॥

**वृन्द सप्रावृषीष्टै शरदि परिवृतौ चारयन्तौ गवा तौ**
**शोभालोभात् किलोभावपि वननिवहे स्व मनो भावयन्तौ ॥**
**क्षोभाधिक्येपि वह्नेर्जठरपदजुषो भोजनेनोपशान्तौ**
**नो भान शान्तचित्ताविव हृदि दधतु सत्तमौ रामकृष्णौ ॥६३॥**

**अन्वय**—सप्रावृषि शरदि इष्टै परिवृतौ गवा वृन्द चारयन्तौ, वननिवहे शोभालोभात् स्व मनो भावयन्तौ, जठरपदजुष वह्ने क्षोभाधिक्येपि भोजनेन उपशान्ताविव शान्तचित्तौ, तौ उभावपि सत्तमौ रामकृष्णौ हृदि भान नो दधतु किल ॥

**व्याख्या—वृन्दमिति ॥ सप्रावृषि शरदि** प्रावृषा सहिता सप्रावृट् तस्या सप्रावृषि । 'स्त्रिया प्रावृट् स्त्रिया भूम्नि वर्षा अथ शरद् स्त्रियाम्' इत्यमर । वर्षर्तुसहिताया शरदि ऋतौ । **इष्टै** प्रियगोपवयस्यै **परिवृतौ** सहितौ । **गवा वृन्द** समूह **चारयन्तौ** । 'चर गतौ भक्षणेपि ।' णिजन्तात् शत्रन्तम् । तृणमत्तु प्रेरयन्तौ इत्यर्थ । **वननिवहे** वनसमूहे विविधकाननेषु इत्यर्थ । **शोभालोभात्** सौदर्याति लोभात् । **स्व मनो भावयन्तौ** आत्मन मनो रजयन्तौ । **जठरपदजुष** जठरस्य उदरस्य पद स्थान जुषते सेवते तस्य । **वह्ने** जठराग्ने **क्षोभाधिक्येपि** क्षुधाबाहुल्या दपि । **भोजनेन उपशान्ताविव शान्तचित्तौ** कृतभोजनाविव सतुष्टौ स्वस्थचित्तौ । **तौ उभौ अपि** । अपीत्यनेन यथा तयोर्वयस्या शान्तचित्तास्तद्वदिमौ **सत्तमौ** श्रेष्ठौ रामकृष्णौ अपि । **हृदि** चित्ते **भान नो दधतु** भोजनायाख्यान स्मृतिर्वा न धृतवन्तौ किल निश्चये ॥ स्रग्धरावृत्तम् ॥६३॥

**सरन्ध्रोऽपिवशो नव शोभमान यश कि वश कञ्जनाभस्य भूत्वा ॥**
**प्रलेभे द्वय यद्वय तन्न विद्म कियद्वेति तद्वेत्ति सर्वज्ञ एव ॥६४॥**

**अन्वय**—सरन्ध्रोऽपि वश कञ्जनाभस्य वश भूत्वा, नव शोभमान कि यश प्रलेभे, कियद्वा यश प्रलेभे, वा यत् द्वय प्रलेभे तत् वय न विद्म, तत् सर्वज्ञ एव वेत्ति ॥

**व्याख्या—सरन्ध्र इति ॥ सरन्ध्रोऽपि** रन्ध्रै छिद्रै सहित सरन्ध्र सछिद्रोपि । **वश** वेणु, सछिद्रत्वात् दोषयुक्तोपि । **कञ्जनाभस्य** कञ्ज कमल नाभौ यस्य स तस्य विष्णो श्रीकृष्णस्य **वश** आश्रितो भूत्वा । हरिणा आत्मीयत्वेन अङ्गीकृत इत्यर्थ । **नव शोभमान**—तदा नवीन सुरुचिर च **किं यश** कीर्तिं **प्रलेभे** अथवा **कियत् यश** प्राप **वा यत् द्वयमेव** प्राप्तवान् **तत् वय न विद्मो** न जानीम, **तत्तु** स **सर्वज्ञो** हरिरेव वेत्ति इति ॥

दोषी वशो दोषयुक्तेन श्रीकृष्णेन वश्यता नीत, कि यश कियद्वा यश प्राप्तवान् तदुभयमपि वय न जानीम ॥ सछिद्र कमलनाल, सछिद्रो वश उभावपि रन्ध्रधारिणौ, सछिद्रेण सह सछिद्रस्य सबधात् दुष्किर्तिरेव स्यात् इति ॥ भुजग प्रयात वृत्तम् ॥६४॥

**अनुपरम्यमुखेन करेण च स्ववशकीचकरन्ध्रपिधानकृत् ॥**
**हरिरसूचयदाश्रितदुष्कृतिप्रसरनिह्नवचिह्नमिहाद्भुतम् ॥६५॥**

**अन्वय** —अनुपरम्यमुखेन करेण च स्ववशकीचकरन्ध्रपिधान-कृत् हरि इह यत् आश्रितदुष्कृतिप्रसरनिह्नवचिह्नम् असूचयत् तत् अद्भुतम् ॥

**व्याख्या—अनुपरम्य मिति ॥ अनुपरम्यमुखेन** रन्तु योग्य रम्यम् । उपरम्य कुत्सितम् । न उपरम्यम् अनुपरम्यम्, अनुपरम्य मनोहर मुख तेन । करेण हस्तेन च । मनोहराभ्या मुखकराभ्यामित्यर्थ । **स्ववशकीचकरन्ध्रपिधानकृत्** स्ववशस्य स्वाश्रितस्य कीचकस्य वेणो रन्ध्राणि छिद्राणि तान्येव दोषा तेषा पिधानम् आच्छादन करोति य स । 'इति कृञ क्विप्'। 'वेणव कीचकास्तेस्युर्ये स्वनत्यनिलो द्धता-' इत्यमर । वेणुछिद्राऽऽच्छादनकृत् हरि**र्यत्** स्वाश्रितवेणुछिद्रपिधान, तदेव **आश्रितदुष्कृतिप्रसरनिन्हवचिन्हम् इह असूचयत्**-आश्रितस्य दुष्कृतिर्दुष्कर्म तस्या प्रसर प्रसरण तस्य निह्नवोऽपलपन, अपह्नवो वा तस्य चिह्न लक्षण तत् । इह वेणुनिनादकर्मणाऽदर्शयत् । **तत् अद्भुतम्** आश्चर्यम् ॥

यत् स्वाश्रिताना दुष्कर्मणा प्रसरण हरि सदा निराकरोति तदिहवेणुनिनादनकर्मणा तस्य वेणो छिद्राणि निजसुन्दरेण मुखेन करेण च आच्छादयन् दर्शयतीति भाव ॥ उत्प्रेक्षालकार । दुतविलबित वृत्तम् ॥६५॥

**कृत्वा मूर्त्ति मृडमृगदृश सैकती नैकतीर्थै**
**सश्लिष्टाया स्वसरि शमनस्याप्लुता मासमेकम् ॥**
**आनर्चुस्ता व्रजपतिसुत भर्तृभावेन लब्धु**
**गोधुक्कन्या प्रतिपदलसत्प्रेमभक्तिप्रकर्षा ॥६६॥**

**अन्वय** —मृडमृगदृश सैकती मूर्ति कृत्वा, नैकतीर्थै सश्लिष्टाया शमनस्य स्वसरि आप्लुता, प्रतिपदलसत्प्रेमभक्तिप्रकर्षा, ता गोधुक्कन्या व्रजपतिसुत भर्तृभावेन लब्धुम् एक मासम् आनर्चु ॥

**व्याख्या—कृत्वेति ॥ मृडमृगदृश** मृगस्य दृशौ इव दृशौ यस्या सा मृगदृक् । मृडस्य शकरस्य मृगदृक् मृडमृगदृक् तस्या । अथवा 'मृग अन्वेषणे' इत्यस्मात् 'इगुपधज्ञाप्रीकिर क' इत्यनेन क प्रत्यय । मृगयते अन्विष्यति इति मृग । स्त्रिया टाप् मृगा, अन्वेषिणी । मृड शकर मृगा अन्वेषिणी दृक् यस्या सा मृडमृगदृक् । स्त्रिया पुवद्भाषितपुस्कादनूङ् इत्यादिना पुवद् भाव । तस्या मृडमृगदृश भवान्या । **सैकतीं** मृन्मयीं **मूर्तिं कृत्वा नैकतीर्थै सश्लिष्टाया** नैकानि तीर्थानि नैकतीर्थानि

तै नैकतीर्थै । नञर्थेन न शब्देन सुप्सुपेति समास । अनेकपवित्रनदीभि **सगतायाम्** । **शमनस्य** यमस्य **स्वसरि** भगिन्या । यमुनाजले । 'शमनो यमराड् यम ', इति अमर 'यमुना शमन स्वसा ' इति चामर । **आप्लुता** स्नान कृतवत्य । **प्रतिपदलसत्प्रेमभक्तिप्रकर्षा** पदे पदे प्रतिपद, प्रतिपद लसन्ती शोभमाना प्रेमभक्तिर्यासा ता तस्या प्रकर्षोऽतिशयो यासु ता । एतादृश्य **ता गोधुक्कन्या** गोपबालिका । **व्रजपतिसुत** नन्दनन्दन श्रीकृष्ण । **भर्तृभावेन** पतिभावेन लब्धुम् एक मासम् आनर्चु । 'कालाध्वनोरत्यतसयोगे' इत्यनेन एक मास इति द्वितीया । एकमासपर्यन्त ता गोपबालिका कात्यायनीं पूजयामासु । यथा शकरमेव प्रतिक्षणमन्वेषिणी दृष्टि गम्यमाना भवानी वर्तते तथा च तस्यान्वेषण कुर्वती सा तमेवेप्सितपति स्वतपश्चरणेन प्राप्तवतीति कृत्वा ता गोपकन्या तस्या एव नेतृत्वे स्वकार्ये सिध्येदिति भावनया तस्या एव वालुकामयीं मूर्तिं कृत्वा ता पूजयामासुरिति भाव ॥ मदाक्रान्ता छन्द ॥६६॥

**अनुग्रहे वित्तहृतिस्वभाव समेत्य तत्रार्णवजार्चिताङ्घ्रि**
**विलोक्य तासा तदभावमीशो जहार तीराद्बत चीरसघम् ॥६७॥**

**अन्वय** —अर्णवजार्चिताघ्रि अनुग्रहे वित्तहृतिस्वभाव तत्र समेत्य तदभाव विलोक्य ईश तीरात् तासा चीरसघ जहार बत ॥

**व्याख्या—अनुग्रह इति** । अर्णवजा लक्ष्मी तया आर्चितौ पूजितौ अङ्घ्री यस्य स । **अर्णवजार्चिताङ्घ्रि** रमासेवितपादपद्म स श्रीकृष्ण । यस्य पदद्वये सकलसपत् विलसति । यद्यपि सकलसपत्तिमान् स हरि तदपि । **अनुग्रहे** प्रसादे कर्तव्ये सति । **वित्तहृतिस्वभाव** वित्तस्य धनस्य हृतिर्हरण । वित्तहृति स्वभावो यस्य स । भक्तस्य वित्तापहरणशील । **तत्र** यमुनातट । **समेत्य** आगत्य । **तदभावम्** तासा गोपीनाम् अभाव तदभाव चित्ताभाव **विलोक्य**। **ईश तीरात् तासा चीरसङ्घ जहार** वस्त्राण्यपाहरत् । **बत** आश्चर्यमिदम् । तासा गोपीना लक्ष्यमन्यत्प्रेक्ष्य ईश तासा वस्त्राणि तीरादपाहरत् इत्यर्थ ॥ उपजाति वृत्तम् ॥६६॥

**भक्तानुग्रहतोऽपि पूर्वमशुचीस्तत्सगिनो वा शुचीन्**
**दीनानाथदयाब्धिरुद्गमयते यादृक्षतादृक्षकान् ॥**
**स्नातीना जलमस्पृशन्त्यपि यतो वासासि तासा सित-**
**श्यामारक्तकपीतकर्बुररुचीन्यादावधत्तासयो ॥६८॥**

**अन्वय** — दीनानाथदयाब्धि भक्तानुग्रहत पूर्वम् अशुचीन् वा यादृक्षतादृक्षकान् अपि तत्सगिन शुचीन् उद्गमयते । यत दीनानाथ-

दयाब्धि तासा स्नातीना जलम् अस्पृशति अपि सितश्यामारक्तकपीत-कर्बुररुचीनि वासासि आदौ असयो अधत्त ।

**व्याख्या – भक्तेति ॥ दीनानाथदयाब्धि** दीनाश्च ते अनाथाश्च दीनानाथा तेषु दयाब्धि दयासागर श्रीकृष्ण । **भक्तानुग्रहत पूर्व** भक्तानामनुग्रह प्रसाद तस्मात् तसि । भक्ताना प्रसाददानात् पूर्वम् । **अशुचीन्** अशुद्धान **वा यादृक्ष-तादृक्षकान्** यान् कानपि । **तत्सगिन** तस्य भगवत सगिन सग कृतवत । **शुचीन् उद्भमयते** पुनीतान् करोति, आदाय हस्ते गृह्णातीत्यर्थ । कथ तदुदाहरति । **यत स दीनानाथदयाब्धि कृपालु श्रीकृष्ण तासा स्नातीना** गोपीना वासासि वस्त्राणि । **जलमस्पृशन्त्यपि** अनार्द्राणि वस्त्राण्यपि पुनश्च **सितश्यामारक्त-कपीतकर्बुररुचीनि** सितानि श्यामादि नानावर्णानि वासासि । **आदौ** अनुग्रहात् पूर्वमेव । **असयोरधत्त** निजस्कधयो प्रस्थापयामास ॥ जलमस्पृशन्ति वासासी-त्यस्मात् शुष्कवस्त्रत्वादशुद्धत्व भक्तिरसहीनत्व दशयति । तथैव सितश्यामारक्तक-पीतकर्बुररुचीनि नानावर्णानि वासासि इत्यस्मात् स दीनानाथयोर्दयाब्धिर्दयासागरा न केवल सितानि शुद्धानि वस्त्राण्यसयोर्धृतवान् किन्तु श्यामानि कबुराणि यानि कान्य शुद्धान्यपि अनुग्रहे चित्तहृतिस्वभावान्निजस्कधयोर्धृतवान् । तानि शुद्धत्व नतु स्वस्कन्धाभ्या वहति रजकवत् इति भाव ॥ शार्दूलविक्रीडित वृत्तम् । अर्थान्तर-न्यासालकार ॥६८॥

**विष्णो पदेन समित त्वधिरुह्य मध्य**
**शाख्यूर्ध्वदेशकलनेन समुच्छ्रितस्य ॥**
**तस्यैव त समभजन्त्सुदृशा पटौघा**
**अध्यासते हि गुणिन पदमुच्चमुच्चम् ॥६९॥**

**अन्वय** —सुदृशा पटौघा विष्णो पदेन समित तु तस्य मध्यम् अधिरुह्य समुच्छ्रितस्य तस्य शाख्यूर्ध्वदेशकलनेन तम् एव समभजन् । हि गुणिन उच्चम् उच्च पदम् अध्यासते ॥

**व्याख्या—विष्णोरिति ॥ सुदृशा पटौघा** सुष्ठु दृशौ यासा ता सुदृश तासाम् । गोपीना वस्त्रसमूहा । **विष्णोर्भगवत पदेन समित** वैकुण्ठस्थानसममुन्नत वृक्ष तु **तस्य मध्यमधिरुह्य** तस्य वृक्षस्य मध्यभागपर्यन्त गत्वा । **समुच्छ्रितस्य तस्य** ऊर्ध्वगतस्य तस्य श्रीकृष्णस्य । **शाख्यूर्ध्वदेशकलनेन** शाखिनो वृक्षस्य ऊर्ध्वदेश उन्नतप्रदेश तस्य कलनेन अधिरोहणेन । **तमेव समभजन्** त श्रीकृष्णमव अर्चितयन् । तस्य सगतेन महत्पद प्राप्ता इत्यर्थ । **हि** निश्चयेन **गुणिनो** गुणा सति

येषा ते गुणिन । गुणवन्त पुरुषा । **उच्चम् उच्च पदम् अध्यासते** महत्पद प्राप्नुवन्ति । प्रभोराश्रयत्वात् गुणीभूतास्ते गोपीवस्त्रसमूहा महत्पद प्रापुरिति भाव ॥ अर्थान्तरन्यासालकारो विशेषेण सामान्यसमर्थनरूप ॥ वसन्ततिलका वृत्तम् ॥६९॥

**मद बहूना निजधन्यतागुणात्कदम्बधुर्यो यदपाहरत्तत ॥**
**सदम्बता द्राग्भजताङ्कथन्न वा सदम्बरैर्भूषयति स्म य विभु ॥७०॥**

**अन्वय**--य विभु सदम्बरै भूषयति स्म । तत (स) द्राक् सदम्बता कथ वा न भजता यत् कदम्बधुर्य निजधन्यतागुणात् बहूना मदम् अपाहरत् ॥

**व्याख्या—मदमिति** ॥ **य** कदम्बवृक्ष **विभु** श्रीकृष्ण **सदम्बरै** सद्वस्त्रै भूषयति स्म अलकरोति स्म । 'लट् स्मे' इत्यनेन भूते लट् स्यात् स्म योगे । **तत** एतादृक् वस्त्रालकृत स वृक्षो **द्राक्** झटिति **सदम्बता** कथ वा न भजता शोभनाया अम्बाया भाव सदम्बता ताम् । भावे तल् स्त्रियाम् । सन्मातृत्व कथ न धारयेत् अपि तु धारयेदित्यर्थ । **यत्** यस्मादेव कारणात् । **कदम्बधुर्य** कदम्बेषु धुर्य श्रेष्ठ कदम्बधुर्य स कदम्बवृक्षेषु श्रेष्ठ । धुर्य इति 'धुरोयड्ढकौ' इत्यनेन यत् । **निजधन्यतागुणात्** प्रभुणाऽध्यारोहितत्वात् वस्त्रै सत्कारितत्वाच्च निजस्य अहोभाग्याद् **बहूना मदम् अपाहरत्** बहूना वृक्षाणा प्रमत्तत्व जहार । निज श्रेष्ठत्व प्रस्थापितवान् इति भाव ॥ वशस्थ वृत्तम् ॥७०॥

**एष्यद्वर्षानन्तरर्त्तुक्षपासु वाञ्च्छापूर्तौ जातशङका इवामू ॥**
**स्व स्व नेत्र कृष्णनेत्रद्वयेन साक वव्रुर्व्यूढमध्यस्थभावम् ॥७१॥**

**अन्वय**—स्पष्टम् ।

**व्याख्या—एष्यदिति** ॥ एष्यन्त्या आगामिन्या वर्षायारनतर य ऋतु तस्य क्षपा रात्रय तासु **एष्यद्वर्षानतरर्त्तुक्षपासु,** आगामिनीषु शरद्रात्रिषु **वाञ्च्छापूर्तौ** इच्छातृप्त्यर्थ । **जातशका इव** जाता उद्भूता शका सशया यासा ता । इव । इच्छापूर्तिर्भविष्यति वा न वा इति शकिता **अमूर्गोप्य** । **स्व स्व नेत्र** निजनेत्रकाटाक्ष **कृष्णनेत्रद्वयेन सह** मीलयित्वा । वाञ्छापूर्तिहेतोस्तेन सह रन्तुमित्यर्थ । तस्य **व्यूढ मध्यस्थभाव** व्यूढ उत्कटो मध्यस्थ सौम्यो भाव आशयो यस्मिन् स तम् **वव्रु** अवृण्वन् ॥ आगामिशरद्दतो रात्रिषु निजवाञ्छापूर्तौ कृष्णेन सह रन्तु समय प्राप्यते न वति कृत्वा अमूर्गोप्य तस्य नेत्राभ्या सह स्वैकनेत्रमीलन कृत्वा उदासीनभाव ददृशु इति भाव ॥७१॥

**आसन् गुणैश्च नियमैश्च यमैश्च जात्या**
**नात्यादृता अपि पर व्रजगोपकन्या ॥**
**दु खाब्दखण्डपरिखण्डनचण्डवात्या**
**कात्यायनीचरणपूजनपूर्णकामा ॥७२॥**

**अन्वय**—जात्या गुणैश्च नियमैश्च यमैश्च न अत्यादृता अपि पर कात्यायनीचरणपूजनपूर्णकामा व्रजगोपकन्या दु खाब्दखण्डपरिखण्डनचण्डवात्या आसन् ॥

**व्याख्या—आसन्निति ॥ जात्या** जातिजन्मस्वभावेन, जन्मना उच्चजातिकुलोत्पतिस्तया। अथवा **गुणै** शीलौदार्यादिभि । अथवा **नियमै** तप स्वाध्यायादिभि । उत **यमै** शमदमब्रह्मचर्यादिभि**र्नात्यादृता** न आदरणीया । गोपकन्या हीनकुलोत्पत्तित्वात् तथाच गुणहीनत्वात् व्रात्यत्वादिदोषयुक्तत्वात् आदरणीया नासन् । तथापि **कात्यायनीचरणपूजनपूर्णकामा** कात्यायन्याश्चरणौ तयो पूजनेन पूर्ण कामो मनोनरथो यास्सा ता । कात्यायनीचरणपूजनेन पूर्णमनोरथास्ता । **दु खाब्दखण्डपरिखण्डनचण्डवात्या** दु खस्य अब्दो मेघ तस्य खण्डो भाग तस्य परिखण्डन नाश तस्मै चण्डवात्या प्रचडवाता । दु खमेघनाशार्थं महावाता इव आसन् । अथ च दु खस्य अब्दो वत्सरस्तस्य खण्डो भाग शरदृत्तुपर्यन्तो भाग इत्यर्थ , तस्य परिखण्डन नाशो यापनमित्यर्थ , तस्मै चण्डवात्या प्रचण्डवातूला इव दृढा आसन् । 'अभिप्रायवशौ छन्दावब्दौ जीमूतवत्सरौ' इत्यमर । कात्यायनी प्रसादेन ता गोप्यो दु खकाल यापयितु समर्था अभवन् इति भाव ॥ लाटानुप्रासालङ्कार ॥ वसन्ततिलका वृत्तम् ॥७२॥

**हास्यायापि ग्लानिभृता वस्त्वपहारा-**
**च्छ्रीमन्तोपि स्वोदरपूर्त्यै लघव स्यु ॥**
**इत्थ श्रीश सूचयितु गोपकुमारी-**
**वासोहृत्या उर्ध्वमभूद्दीदिविभिक्षु ॥७३॥**

**अन्वय**—श्रीमन्तोपि हास्यायापि ग्लानिभृता वस्त्वपहारात् स्वोदरपूर्त्यै लघव स्यु , इत्थ सूचयितु श्रीश गोपकुमारीवासोहृत्या ऊर्ध्व दीदिविभिक्षु अभूत् ॥

**व्याख्या—हास्यायेति ॥ श्रीमन्त** श्री सपद् अस्यास्तीति श्रीमान् । 'तदस्यास्त्यस्मिन्निति मतुप्' इत्यनेन मतुप् । धनाढ्या सधना अपि । **हास्यायापि**

हास्य परिहासमपि कर्तुम्। अपीत्यनेन परस्वापहरणे लघुत्वस्य कैमुत्य ध्वन्यते। **ग्लानिभृता** ग्लानि• दैन्यात् हर्षक्षय । ग्लानि बिभर्ति इति ग्लानिभृत्। इति क्विप्। दीनाना **वस्त्वपहारात्** वस्तोरपहरणात्, अर्थात् चौयत्वावलम्बनापेक्षया। **स्वोदरपूर्त्यै** निजोदरभरणाय **लघव स्यु** लघुत्वभाज भवेयु । **इत्थ सूचयितुम्** इति स्पष्ट प्रदर्शनाय। **श्रीश** श्रिञ सेवायाम्। श्रयते हरिं सा श्री । 'अन्यभ्योपि दृश्यते' इत्यनेन क्विप् । क्विब्वचिप्रच्छिश्रिस्नुद्रुप्रुज्वा दीर्घोऽसप्रसारण च' इति उणादि सूत्रेण दीर्घ । श्रिय ईश श्रीश श्रीकृष्ण स्वय श्रीमानिति भाव । **गोपकुमारीवासोहृत्या** गोपकुमारीणा वासासि चीराणि तेषा हृति हरण तस्या । ऊर्ध्वम् अनन्तरम्। दीनाना गोपीना वस्त्रहरणादनन्तरम् । **दिदिविभिक्षु** ओदनयाचकोऽभूत्। 'भि सा स्त्रीभक्तमन्नोऽन्नमोदनोऽस्त्री स दीदिवि'। इत्यमर । भिक्षा याचते स भिक्षु 'सनाशसभिक्षउ' इत्यनेन उ प्रत्यय ।

श्रीमान् दीनाना वस्त्वपहरण परिहासाय निजमनोरजनाय कुर्वन्नपि क्षुधात सन् चौर्यापेक्षया धृष्टतापेक्षया वा लघुत्व भजेत् इति दर्शयन्नेव किम् असौ श्रीमान् क्षुधार्त श्रीकृष्ण गोपीवस्त्रहरणादनतर याचको भूत्वा यज्ञस्त्रीभ्य ओदनमयाचत इति भाव । मत्तमयूरवृत्तम् वेदैरन्ध्रैर्म्तौयसगा मत्तमयूर ।। अर्थान्तरन्यासालकार ।।७३।।

**क्षुधार्त्तान्सखीन्दूरमागत्य खिन्नान्प्रभु प्रेषयामास यामासनस्थाम् ।।**
**क्रतौविप्रपङ्क्ति प्रति स्त्रीभिरस्या ददे स्वन्नमागत्य गत्यर्थिनीभि**
**।।७४।।**

**अन्वय**—दूरम् आगत्य या क्रतौ आसनस्था विप्रपङ्क्ति प्रति प्रभु क्षुधार्त्तान् खिन्नान् सखीन् प्रेषयामास। अस्या गत्यर्थिनीभि स्त्रीभि आगत्य स्वन्नम् ददे ।।

**व्याख्या—क्षुधार्त्तानिति ।। दूरमागत्य** वनाभ्यन्तरे सुदूरपर्यन्तमेत्य। **या क्रतौ आसनस्था विप्रपङ्क्ति प्रति**-यज्ञकर्मणि स्थित यज्ञसपादने दत्तचित्त द्विजवर्ग प्रति। अन्यविषयेषूपेक्षितभावेन पश्यन्त द्विजवर्गमिति भाव । **प्रभु** श्रीकृष्ण **क्षुधार्त्तान् खिन्नान् सखीन्** क्षुधापीडितनिजवयस्यगोपान् क्षुधानिवारणार्थमन्न याचितु **प्रेषयामास**। **अस्या** विप्रपङ्क्त्या स्त्रीभि । अध्वरे निमग्नाना प्रभुयाचनामुपेक्षमाणाना ब्राह्मणाना पत्नीभिरितिभाव । कथ भूताभि स्त्रीभि ? **गत्यर्थिनीभि** गतिम् अर्थयन्ते या ताभि, सुगतिकाक्षिणीभि । **आगत्य** विशेषादरेण स्वय कृष्णातिकमुपेत्य। **स्वन्न** सुष्ठु अन्न स्वन्न स्वादिष्टभोजन **ददे** अदत्त ।। भुजङ्गप्रयात वृत्तम् ।।७४।।

**तत्पत्यनूतापकृते हठेन ता प्रास्थापयद्यज्ञसद पतिव्रता ॥**
**श्रीमान्त्स वैकुण्ठपदे गृहस्थवत्कि दम्पतिब्राह्मणसत्क्रियाभिक ॥७५॥**

**अन्वय**—कि तत्पत्यनूतापकृते ? स ता यज्ञसद पतिव्रता हठेन वैकुण्ठपदे प्रास्थापयत्, श्रीमान् दम्पतिब्राह्मणसत्क्रियाभिक गृहस्थवत् ॥

**व्याख्या—तत्पतीति ॥ किं तत्पत्यनूतापकृते** तासा पतय तत्पतय तेषाम् अनुतापस्य पश्चात्तापस्य कृते तत्पत्यनूतापकृते (अव्ययम्), तासा पतीना पश्चात्तापप्रदर्शनाय एव किम् ? तपन ताप इति भावे 'घञ' प्रत्यय । अनु पश्चात् ताप अनूताप । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्यनेन विकल्पेन दीर्घ । अनुताप अनूताप परिवाह परीवाह इत्यादि । **स** श्रीकृष्णस्ता **यज्ञसद पतिव्रता** । यज्ञे सीदन्तीति यज्ञसद ता यज्ञसद इति क्विप् । यज्ञे उपविष्टा पतिव्रता । **हठेन** प्रसभेन । **वैकुण्ठपदे** एतत् सज्ञके निजधाम्नि **प्रास्थापयत्** प्रेषयामास । कस्मात् प्रेषयामास ? **श्रीमान्** स्वय **दपतिब्राह्मणसत्क्रियाभिक** दपतिब्राह्मणाना या सत्क्रिया तासु अभीक कामयिता स । 'कम्र कामयिताभीक कमन कामनोभिक' इत्यमर । सपत्नीकब्राह्मणाना सत्कारकर्ता इत्यर्थ । **गृहस्थवत्** यथा गृहस्थो यजमान आचरति तद्वत् ॥

हठेन श्रीकृष्ण ता यज्ञकर्तृणा ब्राह्मणाना स्त्रियो वैकुण्ठ किं प्रेषयामास तत्रोत्प्रेक्षते कवि । तत्पतीनामनुतप्ते हृदि पश्चात्तापो जायेत । ते च पश्चात्ताप दग्धा प्रायश्चित्त कृत्वा वैकुण्ठगमनयोग्या भविष्यन्ति । ताश्चाह वैकुण्ठे प्रेष यिष्यामि । यतोऽह गृहस्थवत् जायापतिब्राह्मणपूजकोस्मीति भाव ॥ उत्प्रेक्षा । इन्द्रवज्रा वृत्तम् ॥७५॥

**सपश्यत स्वमनिमेषयतेव देवान्**
**गन्धेन गन्धनयताप्यमृतस्य तृप्तान् ॥**
**पुष्णन्कदुष्णविविधान्नचयेन तेन**
**गोपात्मजान्त्स बुभुजे सबलोऽध्वराङ्ग ॥७६॥**

**अन्वय**—अमृतस्य तृप्तान् अपि अनिमेषयता इव सपश्यत देवान् गन्धनयता गन्धेन पुष्णन् । तेन कदुष्णविविधान्नचयेन गोपात्मजान् पुष्णन् स अध्वराङग सबल स्वमपि बुभुजे ॥

**व्याख्या—सपश्यत इति ॥ अमृतस्य तृप्तानपि** सुधापानेन सतुष्टानपि अथ च अमृतस्य यज्ञशिष्टान्नस्य तृप्तानपि । 'अमृत विघसो यज्ञशेषभोजनशेषयो ' इत्यमर । 'पीयूषममृत सुधा' इत्यमर । **अनिमेषयता इव सपश्यत** । निमेष करोति निमेषयति । कृञर्थे णिच् । तस्मात् शतृ निमेषयन् तेन निमेषयता । नञ् समासेन अनिमेषयता । निमिषरहितस्थिरदृष्टया इव । लुब्धकवत् इत्यर्थ । **सपश्यत** आलोकयतो देवान् । **गन्धनयता** गन्ध नयतीति गन्धनयन् तेन वायुना । **गन्धेन** वायुना नीतामोदेन **पुष्णन्** । पतिव्रताभिर्दत्तस्यान्नस्याघ्राणेन देवानपि तृप्ति गमयन्नित्यर्थ । **तेन कदुष्णविविधान्नचयेन** कदुष्ण मन्दोष्ण यत् विविधान्न नानाखाद्य तस्य चयेन समूहेन **गोपात्मजान् पुष्णन्** गोपबालान् तृप्ति नयन् । **सबल** बलरामसहित । **अध्वराङ्ग** अध्वरो यज्ञ एव अङ्ग प्रतीको यस्य स । नित्यमेव यज्ञेन सतुष्ट । स्वमपि बुभुजे स्वयमपि तदन्नमभक्षयत् ॥ वसन्त तिलकावृत्तम् ॥७६॥

**यागध्वसरुषा वृषा प्रविदधौ मध्येव्रज सागर**
**त चैवोज्झितमध्यमाक्षरमर लोके तदाऽदर्शयत् ॥**
**गोविन्दोऽप्यमुमार्त्तबन्धुरकरोल्लुप्तान्त्यवर्णकर**
**कि चित्र प्रभुराद्यवर्णरहित कुर्याद्यदेन बुधा ॥७७॥**

**अन्वय**—यागध्वसरुषा वृषा मध्येव्रज सागर प्रविदधौ । गोविन्दोऽपि त चैव अरम् उज्झितमध्यमाक्षर लोके तदा अदर्शयत् । तदा प्रभु अमु लुप्तान्त्यवर्णकरम् अकरोत् । हे बुधा ! यदि आर्त्त-बन्धु एनम् आद्यवर्णरहित कुर्यात् कि चित्रम् ?॥

**व्याख्या—याग इति । यागध्वसरुषा** यागस्य शक्रपूजनस्य ध्वसो नाश तेन रुट् क्रोध तेन । श्रीकृष्णेन शक्रपूजन निराकृत तत्समुत्पन्नेन क्रोधेन । **वृषा** इन्द्र । **मध्येव्रज** व्रजस्य मध्ये मध्येव्रजम् । 'पारेमध्ये षष्ठ्या वा' इत्यनेन अव्ययीभाव समास । व्रजस्य गोकुलस्य मध्ये । **सागर** समुद्र । **प्रविदधौ** कृतवान् । **गोविन्दोपि** अथ श्रीकृष्णोपि **त चैव** त सागरमपि । **अर** द्रुतम् । **उज्झित-मध्यमाक्षर लोके अदर्शयत्** सागरशब्दात् उज्झित त्यक्त मध्यमाक्षर 'गकारो' यस्मात् तत् । तत् । सारमिति स्थिरांशेन तिष्ठन्त जगति दर्शयामास 'सारोबलेस्थिरांशे च' इत्यमर । व्रजभूमे सर्वतो जलाप्लावितत्वात् स गोविन्द त्राता साररूपेण सर्व विष्णुमय जगदितिलोकान्दर्शयामासेति भाव । **तदा** तदनतर **प्रभुरमु** सागर । **लुप्तान्त्यवर्णकरम् अकरोत्** अन्त्याक्षररहित कर 'अकार' रहित सागस्करम् । आगसा अपराधेन सहित साग तत् करम् अपराधकरम्

इत्यर्थ । 'आगोपराधो मन्तुश्च' इत्यमर । त सागर व्रजवासिना भयोत्पाद कत्वादपराधिनमकरोदित्यर्थ । **हे बुधा यदि आर्त्तबन्धु** स दीनानाथ **एन** सागरम **आद्यवर्णरहित** 'सकार'रहितम् आगर भाडार रत्नाकर **कुर्यात्**। **किं चित्रम्** किमाश्चर्यमित्यम ? स व्रज प्रभुशरणार्थमागतश्चेत् तर्हि आर्त्तबन्धुत्वात् स त रत्नाकरमपि कुर्यादिति भाव । सभावनाया लिङ् ॥ उत्प्रेक्षालकार । शार्दूलविक्रीडित वृत्तम् ॥७७॥

**गुढयन् गोत्रभिद्गर्व गोवर्धनगिरिग्रहात् ॥**
**गोविन्दो गेयगुणभृद्गोपायामास गोगणम् ॥७८॥**

**अन्वय** —गोवर्धनगिरिग्रहात् गोत्रभिद्गर्व गूढयन्, गोविन्द गेयगुणभृत् गोगण गोपायामास ॥

**व्याख्या—गूढयन्निति ॥** गोवर्धनगिरेर्गोवर्धनपर्वतस्य ग्रहात् धारणात् । **गोवर्धनगिरिग्रहात्** गोवर्धनपर्वतोद्धारणात् । **गोत्रभिद्गर्वम्** । गोत्रभिद् इन्द्र । इन्द्रस्याभिमानम् । **गूढयन्** लोपयन् । **गोविन्द** श्रीकृष्ण **गेयगुणभृत्** गेयान् स्तुत्यान् गुणान् बिभर्तीति गेयगुणभृत् **गोगण** गोसमूहम् । **गोपायामास** पालयामास ॥ अनुप्रासालकार । अनुष्टुबूछन्द ॥७८॥

**पदे निधाय स्वकरे शतात्मन्ययत्नसपन्नमहाभिषेकम् ॥**
**मन्ये गिरि त जडमप्यधीश प्रातिष्ठिपत्स्व पदमिन्द्रकोपात् ॥७९॥**

**अन्वय** —-जडमपि अयत्नसपन्नमहाभिषेकम् त गिरिम् अधीश शतात्मनि स्वकरे पदे निधाय इन्द्रकोपात् स्व पद प्रातिष्ठिपत्। मन्ये ॥

**व्याख्या—पदइति ॥** **जडमपि** सुखदु खे इष्टानिष्टे यो मोह न विन्दति अतो निश्चैतन्यात् स जड तम् । अचलमित्यर्थ । **अयत्नसपन्नमहाभिषेकम्** अयत्नेनैव अनायासेनैव सपन्न महाभिषेको यस्य स तम् । इन्द्रकोपादतिवृष्ट्या येनाऽनायासेनैव राज्याभिषेकमिव महाभिषेचन प्राप्तम् । **त गिरिं** गोवर्धन पर्वतम् । **अधीश** 'सहस्रशीर्षा पुरुष सहस्राक्ष सहस्रपाद' इति श्रुत्युक्त-स्वरूप प्रभु । **शतात्मनि स्वकरेपदे** निजस्यानन्तकरे पदे स्थाने । **निधाय** स्थापयित्वा, हस्ते गृहीत्वा । **इन्द्रकोपात् स्व पद** स्व अव्यय, स्वर्गस्य पद वैकुण्ठपदमित्यर्थ **प्रातिष्ठिपत्** स्थापयामास । इत्यह मन्ये इति उत्प्रेक्षा । इन्द्रकोपादेव स गिरि वैकुण्ठ प्राप्तवान् अन्यथा इन्द्रकोपाभावे वैकुण्ठस्याप्यभाव **इत्यर्थः** ॥ उत्प्रेक्षा । उपजाति वृत्तम् ॥७९॥

**उदाराधिकारोत्थगर्वातिरेकात्**
**सुपुण्यस्य हानाववश्योपभोग्यात् ॥**
**तमोदुर्दरात्स व्रजक्ष्मादरो य**
**सुखायेति मत्वैवशैलो निवृत्त ॥८०॥**

**अन्वय** —उदाराधिकारोत्थगर्वातिरेकात् सुपुण्यस्य हानौ अवश्योपभोग्यात् तमोदुर्दरात् अय व्रजक्ष्मादर सुखाय इति मत्वा स शैल निवृत्त ॥

**व्याख्या—उदार इति । उदाराधिकारोत्थगर्वातिरेकात्** उदारो महान् अधिकार तत उत्थ उत्पन्नो गर्वस्तस्यातिरेक अतिशायितत्व तस्मात् । वैकुण्ठस्य महापदस्य प्राप्तिजन्यगर्वातिबाहुल्यात्, प्रमत्तत्वात् तेन स्थानभ्रष्टत्वात् इत्यर्थ । तथा **सुपुण्यस्य हानौ** सुकृतिक्षये **अवश्योपभोग्यात्** सचितपुण्यक्षये प्राप्तभोगान् अवश्यमेव भोग्यत्वात् । तथा **तमोदुर्दरात्** तमस तमोगुणस्य भोगापत्तेर्दुर्दरात् भयात् । **अय व्रजक्ष्मादरो** व्रजक्ष्माया व्रजभुवि आदर सत्कार स्वीकार । **सुखायेति मत्वा** सुखेन कालक्षेपाय भवतीति मत्वा **स शैलो निवृत्तो** वैकुण्ठात् परागत ॥ भुजगप्रयातम् वृत्तम् ॥८०॥

**सत्पूजोद्धृतिकालयोर्निजतनू मन्थानगोवर्धन-**
**स्योर्ध्वाध स्थलयोर्दधत्स्वकुशल यत्रोज्जहारामृतम् ॥**
**लेश चापि विषस्य यत्र न दृशो कर्मीचकाराऽसुर-**
**द्विड्गर्वाबुधिमन्थन स भगवानन्यादृश तद्व्यधात् ॥८१॥**

**अन्वय**—सत्पूजोद्धृतिकालयो, मन्थानगोवर्धनस्य ऊर्ध्वाध स्थलयो निजतनू दधत्, तत् अन्यादृश असुरद्विड्गर्वाम्बुधिमन्थन स भगवान् व्यधात् । यत्र स्वकुशलम् अमृतम् उज्जहार, यत्र विषस्य लेश चापि न दृशो कर्मीचकार ॥

**व्याख्या—सत्पूजेति ॥ सत्पूजोद्धृतिकालयो** सत्पूजा च उद्धृतिश्च सत्पूजोद्धृती तयो कालौ सत्पूजोद्धृतिकालौ तयो । **मन्थानगोवर्धनस्य**—मन्थानो मन्थदण्ड एव गोवर्धनगिरि तस्य **ऊर्ध्वाध स्थलयो** तस्य गोवर्धनरूपिणो मन्थदण्डस्य सत्पूजासमये ऊर्ध्वस्थले, तस्य उद्धृतिकालसमये अध स्थले च । **निजतनू दधत्** स्वस्य रूप सस्थाप्य । गोवर्धनपूजासमये स्वयमेव श्रीकृष्णो गोवर्धनरूप धारयित्वा,

त गिरिमविष्ठाय गोपालाना सपर्यामग्रहीत् । अत तत्समये स तस्य पर्वतस्यो परिस्थित । पुनश्च गोवर्धनोद्धारणसमये तस्य अध स्थित । अत कालद्वयान्य स्मिन् स स्वविग्रह गोवर्धनस्य ऊर्ध्वमधश्च सस्थाप्येति स्पष्टो भाव । **तदन्यादृशम्** अपूर्वम् असाधारणम् **असुरद्विड्गर्वाम्बुधिमन्थनम्** असुरद्विषाम इन्द्रादिदेवाना गर्व अहकार एव अम्बुधि सागर तस्य म थन तत् । **स भगवान्** श्रीकृष्ण **व्यधात्** अकृत । **यत्र स्वकुशल** स्वस्य सगोत्रबन्धुबान्धवस्य जगत इत्यर्थ । कुशल क्षेमस्थैर्ययुक्त मगलम् आनदरूपम् **अमृतम् उज्जहार** आहरत् । ' सगोत्र बान्धवज्ञाति बन्धु स्व स्वजना समा ' इत्यमर । पर च **यत्र विषस्य लेशमपि** विषस्य कणमपि । **न दृशो कर्मीचकार** च्वि प्रत्यय । नेत्रस्य विषयो नाभूत् विषरहितममृतमुद्धृतवानित्यर्थ ॥ समुद्रमन्थने विषसहिता सुधोत्पत्तिरत्र तु विषरहितेति भाव ॥ शार्दूलविक्रीडित वृत्तम् ॥८१॥

**सप्ताहानल्पकल्पक्षयपटुकटुवागभ्रजाऽदभ्रवर्षाऽ**
**मर्षाऽभावैकतर्षप्रशमनविधये कि युत कामधेन्वा ।**
**त चिन्तारत्नकल्पद्रुमसुरसुरभिस्वेष्टद देवदेव**
**मूढानामार्द्रमन्तुर्गुरुरिव विबुधाधीश्वरोप्याजगाम ॥८२॥**

**अन्वय** —आद्रमन्तु विबुधाधीश्वर सप्ताहानल्पकल्पक्षयपटु-कटुवागभ्रजाऽदभ्रवर्षाऽमर्षाऽभावैकतर्षप्रशमनविधये त चिन्तारत्न-कल्पद्रुमसुरसुरभिस्वेष्टद देवदेव कि कामधेन्वा युत आजगाम ? (अत ) विबुधाधीश्वरोपि मूढाना गुरुरिव ( बभो ) ॥

**व्याख्या—सप्तेति ॥ आर्द्रमन्तु** आर्द्रा मन्तुरपराधो यस्य स आर्द्रमन्तु सद्योऽपराधी । **विबुधाधीश्वरो** विबुधाना देवानामधीश्वर स्वामी इन्द्र । **सप्ताहानल्पकल्पक्षयपटुकटुवागभ्रजादभ्रवर्षामर्षाभावैकतर्षप्रशमनविधये**— सप्ताहम् अनल्पक्षय तस्मिन्नतिवृष्ट्या प्रलयकारिणी या पटुकटुवागभ्रजा मेघजन्य चचलविद्युत्कर्कशगर्जनायुक्ता अदभ्रवषा बहुवर्षा तस्या अमर्षाभाव शाति (अमर्षस्य अशान्तेरभाव = शान्ति ) सएव एक केवल तर्षप्रशमनविधि (तपस्य अभिलाषाया प्रशमन तृप्ति तस्य विधि प्रकार ) तस्मै । सप्तदिनपर्यन्त कल्पान्त समवर्षाजनिताऽशान्ते प्रशमनम्, तदेव ( इन्द्रागमनस्य ) एकएव हेतु' तद्धेतव । **त चिन्तारत्नकल्पद्रुमसुरसुरभिस्वेष्टदम्**—चिन्तारत्न च कल्पद्रुमश्च सुरसुरभिश्च स्वेष्ट च ते चि तारत्नकल्पद्रुमसुरसुरभिस्वेष्टानि, तानि ददाति य स तम् । एतादृश **त देवदेव** श्रीकृष्ण प्रति । **किं कामधेन्वायुत** आजगाम ? कामधेनुसहितः स इन्द्र आजगाम किम् ? कामधेनोर्बहुप्रस्रवण प्रलोभन तु त स्वेष्टद सर्वद देवदेव प्रति

निरर्थकम् । अत स **विबुधाधीश्वरो** विबुधा पण्डिता तेषा अधीश्वरो गुरु । स इन्द्रो गुरूणा गुरुरपि **अत्र मूढाना गुरुरिव** अत्यन्तजड इव आचचार इत्यर्थ ॥ श्लेषससृष्टव्याजोक्ति स्रग्धरावृत्तम् ॥। ।७१॥

**अमन्दमन्दाक्षमलीमसास्यव्यक्तीकृतौ शङ्कितहृत्स शक्र ॥**
**श्रीकृष्णपादाम्बुजयो प्रणामादेका क्रिया द्व्यर्थकरी व्यधत्त ॥८३॥**

**अन्वय** —स्पष्टम्

**व्याख्या—अमन्दमन्दाक्षमलीमसास्यव्यक्तीकृतौ** अमन्दम् अतिशयम् । मन्दाक्ष लज्जा । अमन्द मन्दाक्ष यस्मिन् तत् अमन्दमन्दाक्षम् । अमन्दमन्दाक्षेण अतिलज्जया मलीमस कलुषित यत् आस्य मुख तस्य व्यक्तीकृति दर्शनक्रिया तस्याम् । लज्जया कलुषित स्वमुख दर्शयितु । **शङ्कितहृत्**—शङ्कापर सकुचित **स शक्र श्रीकृष्णपादाम्बुजयो प्रणामात्** नमनात् । **एका क्रिया द्व्यर्थकरी व्यधत्त**—हरिचरणनमनरूपाम् एका क्रिया कृत्वा क्रियाद्वयसिद्धिरूपाम् अकरोत् । तन्नमनात् नमनरूपा एका क्रिया, लज्जितमुखस्यादर्शनरूपामपरा क्रियामसाधय दित्यर्थ ॥ 'मन्दाक्ष ह्रीस्त्रपाव्रीडालज्जासापत्रपायन' इत्यमर ॥ उपजाति वृत्तम् ॥८३॥

**स्वर्धुन्या नित्ययोगाद्बहिरपि च शुचीभूतदेहेन नून**
**दिव्यान्दन्तान्पुमर्थानिव किल चतुरो बिभ्रताऽभ्रद्विपेन ॥**
**शुण्डादण्डेन तस्या द्रुतमिह पयसामाहृतेनाम्बुजाक्ष**
**पूरेणारात् सुरेश सुरभिरपि निजेनौधसेनाभ्यषिक्त ॥८४॥**

**अन्वय** —स्वर्धुन्या नित्ययोगात् बहिरपि च शुचीभूतदेहेन अभ्रद्विपेन नून पुमर्थानिव चतुर दिव्यान् दन्तान् किल बिभ्रता शुण्डादण्डेन आहृतेन तस्या पयसा पूरेण, सुरेश इह आरात् अम्बुजाक्षम् अभ्यषिक्त । सुरभिरपि निजेन औधसेन तम् अभ्यषिक्त ॥

**व्याख्या—स्वर्धुन्या इति ॥ स्वर्धुन्या** मन्दाकिन्या । **नित्ययोगात्** नित्यमेव सगतत्वात्, मन्दाकिन्या नित्यमेव मज्जनादित्यर्थ । **बहिरपि शुचीभूतदेहेन च**—बाह्यतोऽपि शुद्धाङ्गेन च । **अभ्रद्विपेन** ऐरावतेन । 'ऐरावतोऽभ्रमातङ्ग रावणाभ्रमु वल्लभा' इत्यमर । **नून** निश्चयेन तर्कयामि यत् । **पुमर्थानिव**—चतुरो धर्मार्थकाम-मोक्षान् पुरुषार्थानिव । **चतुरो दिव्यान् दन्तान् बिभ्रता** चत्वार सुदन्ता.

तान् दधता। पुरुषार्थैरिव चतुर्दन्तै शोभितेनेत्यर्थ। **शुण्डादण्डेन** निजशुण्डयाऽऽहृतेन। **तस्या पयसा पूरेण**–मन्दाकिन्या जलनिपातेन। **सुरेश** स इन्द्र। **इह** अत्र। **आरात्** समीपत। **अम्बुजाक्ष** श्रीकृष्ण। **अभ्यषिक्त** अभिषेकमकरोत्। **सुरभिरपि** कामधेनुरपि। **निजेनौधसेन** स्वपयसा, दुग्धेन त अभ्यषिक्त॥ औधसेन ऊधसि भवम् औधसम् 'तत्रभव' इति सूत्रेण अण् प्रत्यय॥ उत्प्रेक्षालकार॥ स्रग्धरावृत्तम्॥८४॥

**विभु स्ताव स्ताव प्रणतजनवात्सल्यजलधि**
**सहस्रादक्षिभ्यो मुहुरमितमोदाम्बुलहरी॥**
**सृजन्भूयोऽप्यस्मान्निभृतमयमाप्लावयति वे–**
**त्यमन्दङ्गोपालान्हृदि विकलयन्प्राप स दिवम्॥८५॥**

**अन्वय**—प्रणतजनवात्सल्यजलधि विभु स्ताव स्ताव स सहस्रात् अक्षिभ्य मुहु अमितमोदाम्बुलहरी सृजन् 'अय भूयोपि अस्मान् निभृतम् आप्लावयति वा' इति गोपालान् हृदि विकलयन् अमन्द दिव प्राप॥

**व्याख्या – विभुमिति॥ प्रणतजनवात्सल्यजलधिम्**–'वत्सासाभ्या कामबले' इति सूत्रेण लच् प्रत्यय वत्सल। वत्सलस्य स्निग्धत्वस्य भाव वात्सल्यम्। 'गुणवचन ' इति ष्यञ्। प्रणताना जनाना भक्ताना वात्सल्य-जलधि। तम्। भक्तानुकम्पिन दयासिधुम्। **विभु** श्रीकृष्ण। **स्ताव स्तावम्** आभीक्ष्ण्ये णमुल्। पुनः पुन स्तुति कुर्वन्। **स** इन्द्र। **सहस्रा दक्षिभ्यो** निजसहस्रनेत्रेभ्य। **अमितमोदाम्बुलहरी सृजन्**–न मिता अमिता अपरिमिता। अमिताना मोदाम्बूनाम् आनन्दाश्रूणा लहर्यो वीचयस्ता। अपरिमितानन्दाश्रुपूर मुचन्। **भूयोपि** पुनरपि। **अयमिन्द्र। अस्मान्** न **निभृत** गुप्तरूपेण **आप्लावयति वा**। निजे अस्मिन् आनन्दाश्रुपूरे अस्मान् पुनरपि निमज्जयति किम्? यथापूर्वम् अतिवृष्ट्याऽकरोत् तद्वत् पुनरपि इतिभाव। **इति गोपालान् हृदि विकलयन्** मनसि विकलता भीति वा उत्पादयन्। **अमन्द दिव प्राप** शीघ्र स्वर्ग जगाम। इति उत्प्रेक्षा॥ शिखरिणी वृत्तम्॥८५॥

**वारुण्या सेवयेव भ्रममधिहृदय विभ्रदम्भोविहारी**
**किम्वोदेष्यद्विवस्वद्भयचकिततमोराशिभृत्पाशिभृत्य॥**
**धर्मान्विष्णोरजानन्ननयत सविध स्वामिन स्वामिनोऽपि**
**वात्या खे यस्य भीत्या वहति निशिजलाद्धन्त तस्यापि तातम्॥८६॥**

**अन्वय** —अम्भोविहारी पाशिभृत्य वारुण्या सेवया इव अधि हृदय भ्रम बिभ्रत्, किम्वा उदेष्यद्विवस्वद्भयचकिततमोराशिभृत्, स्वामिनोपि स्वामिन धर्मान् अजानन्, यस्य भीत्या वात्या खे वहति, हन्त तस्यापि तात निशिजलात् स्वामिन सविधम् अनयत !॥

**व्याख्या—वारुण्येति ॥ अम्भोविहारी** अम्भसि विहरतीति । सुप्यजातौ णिनि ' इत्यनेन ताच्छील्ये णिनि । जलक्रीडावान् । पाशिभृत्य वरुणसेवक । 'प्रचेता वरुण पाशी ' इत्यमर । **वारुण्या सेवयेव** वरुणसेवकत्वेनापि किम् ? **अधिहृदय भ्रम बिभ्रत्** हृदये इति अधिहृदयम् । अ ययीभावसमास । हृदये आधिपत्यभावम्, अस्मिताभाव दधत् । अथवा वारुण्या आसेवया इव अत्यधिक सुरापानेनैव किम् ? मदोन्मत्ततया हृदये भ्रम मिथ्यामति दधत् । **किम्वा उदेष्यद्विवस्वद्भयचकिततमोराशिभृत्**-उदेष्यत उद्गमिष्यतो विवस्वतो भानोर्भयेन चकित भीत यत्तमोऽन्धकार तस्य राशि बिभर्तीति । ' भृत् ' इति क्विप् । एतादृशो मूर्खराडित्यर्थ । **स्वामिनोपि** वरुणस्यापि **स्वामिन** अधिपतेर्विष्णो श्रीकृष्णस्य, **धर्मान्** न्यायाचारान् **अजानन्** अनभिज्ञ सन् । **यस्य** प्रभो**र्भीत्या** भयेन **वात्या** वायु **खे** आकाशे **वहति** । ' भीषास्माद्वात पवते ' इति उपनिषत् । **तस्यापि तात** जनक नन्दसज्ञ, **निशि** रात्रौ, **जलात्** यमुनाजलात् **स्वामिन** वरुणस्य **सविध** समीपवर्तिनम् अनयत निनाय । **हन्त !** इति सखेदाऽऽश्चयम्॥ स्रग्धराछन्द ॥८६॥

> **गत्वाथो वरुणालय स करुणास्वाराज्यसम्राडपि**
> **प्राग्दृग्भ्यामरुणायितस्तमखिल विस्फारिताभ्या रुषा ॥**
> **कृत्वा तज्जनसानत स्वजनक पूजा च सगृह्य वै**
> **प्राप्त सन्व्रजमुच्चकैरमदयद् गोपालभूपालभू ॥८७॥**

**अन्वय** —अथो करुणास्वाराज्यसम्राडपि स प्राक् रुषा विस्फारिताभ्या दृग्भ्याम् अखिलम् अरुणायित त वरुणालय गत्वा, तज्जनसानत कृत्वा, स्वजनक पूजा च वै सगृह्य, व्रज प्राप्त सन् गोपालभूपालभू उच्चकै अमदयत् ॥

**व्याख्या—गत्वेति ॥ अथो**-वरुणसेवकेन नन्दो बन्दीकृतस्तदनन्तरम् । **करुणास्वाराज्यसम्राट् अपि** करुणाया स्वाराज्य तस्य सम्राट् । करुणाधीश्वरोपि स दयालु । **प्राक्** प्रथम तु । **रुषा** क्रोधेन **विस्फारिताभ्या** स्फीतीकृताभ्या **दृग्भ्याम् अखिलम् अरुणायित** अत्यन्तारक्तलोचन । **त वरुणालय गत्वा** । **तज्जसानत कृत्वा** तस्य वरुणस्य जन भृत्यपरिवार सानतम् अवनत कृत्वा । तेषा

पराभवेण विनीतत्व नीत्वा इत्यर्थ । **स्वजनक पूजा च सगृह्य**-वरुणात् पितुर्नन्दस्य मुक्ति तथा स्वप्रति सत्कारपूर्वक बलि च प्राप्य । **व्रज प्राप्त सन् गोपालभूपालभू** गोपालाना भूपालो नन्द तस्य भू पुत्र । नन्दनन्दन , श्रीकृष्ण **उच्चकैरमदयत्** अतिशयेन सर्वान् सतोषमनयत् ॥ स्रग्धरावृत्तम् ॥८७॥

**जानीम पक्षपात मधुकुकुरदशार्हाहंभोजान्धकेभ्यो**
**गोधुक्षु श्रीनिवासोऽधिकमतनुतयन्नैजमैश्वर्यमेतान्**
**सर्वान्नेक श्वफल्कात्मजमथ निरघ दर्शयामास तेषा**
**कि चैक वर्षमेषामभजत सदन तस्य यामार्द्धमात्रम्** ॥८८॥

**अन्वय** --गोधुक्षु मधुकुकुरदशार्हाहंभोजान्धकेभ्य पक्षपात जानीम यत् श्रीनिवासो नैजम् ऐश्वर्यम् एतान् सर्वान् अधिकम् अतनुत । अथ तेषाम् एक निरघ श्वफल्कात्मज दर्शयामास । यत् तस्य यामार्द्धमात्र तत् वर्षम् एषाम् एक सदन अभजत ॥

**व्याख्या--जानीम इति ॥ गोधुक्षु** गोपालेषु । **मधुकुकुरदशार्हार्ह-भोजान्धकेभ्य** एतद्गोत्रेभ्य पुरुषेभ्य । **पक्षपात जानीम** अस्य श्रीकृष्णस्य विशेषानुग्रहोस्तीति वय जानीम । कि कथम् ? **यत् श्रीनिवासो नैजमैश्वयम्** निजस्य इद नैजम् अण् प्रत्यय । नैजम् आत्मन । ईश्वरस्य भाव ऐश्वर्यम् । भावे ' ष्यञ् ' प्रत्यय । **एतान् सर्वान् अधिकम् अतनुत**-गोपालान् प्रति आत्मन प्रभुत्व विशेषतया दर्शयति स्म । **अथ तेषा** मधुकुकुरादीना यदूना मध्ये । **एक निरघ** निष्पाप **श्वफल्कात्मज** अक्रूरमेव दर्शयामास न तु सर्वान् यदून् । यतो क्रूर पापरहित आसीत् । किं दर्शयामास ? **यत् तस्य यामार्द्धमात्र** य समय तस्य यामार्द्धमात्रम् यामोदिनस्याष्टमो भाग तस्य अद्र्ध षोडशो भाग । यामाद्र्धमेव यामाद्र्धमात्रम् **तत** एतादृग्**वर्ष** कालपरिमाण स श्रीनिवास **एषा** गोपालाना **एक सदनम्** एकरूपत्व गृह स्वय **अभजत** । एक सदनमित्यत्र कालात्यतसयोगे द्वितीया ॥ स्रग्धरा वृत्तम् ॥८८॥

इति श्रीमता वत्सगोत्रातर्गतेन काळेकुलोत्पन्नेन श्रीटुण्ढिराजरामचद्रशास्त्रिणा विरचितस्य भागवतव्यजनस्य तस्यैव कविवरस्य पौत्राभ्या गोविन्दकाशीनाथाभ्या कृताया व्यजनसुबोधिनीव्याख्याया द्वितीय उल्लास ॥

---

# महाकविढुण्ढिराजशास्त्रिणा कृतम्
# श्रीमद्भागवतव्यंजनम्

## तृतीयोल्लासः

कलितललितवशीदिव्यशक्तिप्रपन्न
गहनगतिमृडानीपूजनोत्थैरचिन्त्यै ।।
व्रजयुवतिसुपुण्यैरुद्यत प्राग्वदासी-
च्छरदि बहुलरूपै क्रीडितु ब्रह्म पूर्णम् ।।१।।

**अन्वय** —अचिन्त्यै गहनगतिमृडानीपूजनोत्थै व्रजयुवतिसुपुण्यै उद्यत, कलितललितवशीदिव्यशक्तिप्रपन्न, शरदि बहुलरूपै क्रीडितु पूर्ण ब्रह्म प्राग्वत् आसीत् ।।

**व्याख्या—कलितेति ॥ अचिन्त्यै**श्चिन्तनात् परैरनाकल्नीयै । **गहनगतिमृडानीपूजनोत्थै** -गहना अगाधा कर्तुमकर्तुमन्यथाकर्तु समर्था गति पद्धतिर्यस्या सा गहनगति । गहनगतिश्चासौ मृडानी च भवानी तस्या पूजनेन उत्थैरुदितै । **व्रजयुवतिसुपुण्यैरुद्यत** व्रजयुवतीना गोपीना सुपुण्यैर्महद्भाग्यैरुद्यतम् । मृडानी पूजनेनोत्थित यत् व्रजस्त्रीभाग्य तेनोद्गूर्णम् अत प्रेरित **पूर्ण ब्रह्म** । कथ भूत पूर्ण ब्रह्म ? **कलितललितवशीदिव्यशक्तिप्रपन्नम्**-कलिता अनिर्वचनीया अव्यक्ता वा ललिता मनोहरा या वशी सैव दिव्यशक्तिरूपा माया तया दिव्यशक्त्या प्रपन्न युक्तम् । ब्रह्मस्वरूप श्रीकृष्णो मनोहर यक्तवेणुनि यशक्ति प्रपन्न । इह **शरदि** शरदृतौ **बहुलरूपै क्रीडितु** नानाप्रकारै क्रीडा कर्तु **प्राग्वत् आसीत्** यथापूर्व सृष्टे सोऽकामयत ततश्च नानारूप विश्वमकल्पयत् तद्वत्त्रैव नानाप्रकारैर्लीला कर्तु सनद्ध आसीत् ॥

पूर्ण केवलानन्द सच्चिन्मात्र ब्रह्म निर्विकार भवति । प्रकृत्या मायया युक्तमेव विकार भजते । सापि प्रकृति त्रिगुणमयी, अतो निस्सगेन ब्रह्मणा सह सगता कार्यजात विश्व नानारूप लीलया सृजति । एवमेव ब्रह्मरूपेण वर्तमान,

श्रीकृष्णोपि रुचिरमधुरवेणुरूपया दिव्यशक्त्या मायया युक्त सन कर्तुमकर्तुम यथा-कर्तु समर्थमृडानीपूजनेनादित यत् व्रजस्त्रीभाग्य तेनोत्पन्न, पूर्वसृष्टेर्यथा नानारूप विश्वमकल्पयत् तथैवेदानी शरदतौ नानाप्रकारै क्रीडा कर्तुमकामयतेति भाव ॥ मालिनीवृत्तम् । न न म य य युतेय मालिनी भोगिलोकै ॥१॥

**अशङ्कं चुम्बन्त सपदि मुखमैन्द्रचा अपि दिशो**
**निशानाथ स्वीयान्वयपुरुषमारक्तमनघ**
**विमृश्येवानुज्ञाम्प्रतिददतमात्मानमपि स**
**प्रभुस्तादृक्कर्मण्यपर इव हृष्यन्प्रववृते ॥२॥**

**अन्वय** — स्वीयान्वयपुरुष निशानाथम् ऐन्द्रचा दिश आरक्त मुख सपदि अशङ्कमपि चुम्बन्त विमृश्य, अपर इव आत्मानमपि प्रत्यनुज्ञा ददतमिव विमृश्य, स अनघ प्रभु तादृक्कर्मणि हृष्यन् प्रववृते ॥

**व्याख्या—अशङ्कमिति ॥ स्वीयान्वयपुरुषम्**-स्वीयस्य आत्मनोऽन्वयस्य पूर्वजस्य पुरुष तम् । स्वकुलपूर्वजपुरुषमित्यर्थ । 'कुलान्यभिजनान्वयौ' इत्यमर । यादवाश्चन्द्रवंशीया इत्यस्मात पूर्वज **निशानाथ** चन्द्रमस । **ऐन्द्रचा दिश** इन्द्रस्य इय ऐन्द्री 'तस्येदम्' इत्यनेन अण् तस्मात् 'टिड्ढाणञ् द्वयसज् ' इति स्त्रिया ङीप् । तस्या ऐन्द्रचा दिश पूर्वस्या दिश । **आरक्त मुख** व्रीडाजन्यरागयुक्तमिति भाव । **अशङ्कमपि चुम्बन्त विमृश्य**-स्वपूर्वज चन्द्रमस पूर्वस्या सव्रीडमारक्त मुख निःशङ्कतया चुम्बन्त दृष्ट्वा । **अपरइव** परकीयवत् सामान्यजनवत् । **आत्मानमपि** मा श्रीकृष्णमपि **प्रत्यनुज्ञा ददतमिव विमृश्य** आत्मान श्रीकृष्ण प्रति तु तदेव चुम्बनकर्मकर्तुमाज्ञा ददतम् इव विचार्य । **सोऽनघो** गुरुवत्पूर्वजश्चन्द्रोऽन्यपुरुषवत् वर्तते, तस्य सम्मुख चुम्बनादि कर्मणा गुरुजनमानभगपाप नास्तीत्यस्मात् अनघो निष्पाप **प्रभु** श्रीकृष्ण । **तादृक्कर्मणि** चुम्बनकर्मणि । **हृष्यन् प्रववृते** आनन्देनोद्युक्तो बभूव ॥ शिखरिणीवृत्तम् ॥२॥ रसै रुद्रैश्छिन्ना यमनसभलाग शिखरिणी ॥

**समानेतु गोपीर्विशदयमुनातीरमजित**
**स्ववशी सद्दूतीमिव मधुरमध्यापियदरम् ॥**
**स्वरालाप सोऽपि प्रखरगरलादग्ध इव यद्**
**भुजङ्गास्यान्निर्यन्स्मरमनु तदाऽमूर्छयदिमा. ॥३॥**

**अन्वय**—गोपी विशदयमुनातीर समानेतुम् अजित सद्दूतीमिव स्ववशी मधुर स्वरालापम् अरम् अध्यापियत, यत् सोऽपि भुजङ्गास्यान्निर्यन् प्रखरगरलादग्ध इव अनुस्मर निर्यन् तदा इमा अमूर्छयत् ॥

**व्याख्या—समानेतुमिति ॥ गोपीर्विशदयमुनातीर समानेतु** तत्र विशाले सुविस्तीर्णे यमुनातटे व्रजवधूरानेतुम् । 'तुमुण्वुलौ क्रियाया क्रियार्थाया' मित्यनेन भविष्यदर्थे तुमुन् । **अजित** स श्रीकृष्ण । **सद्दूतीमिव स्ववशी** विश्वसनीया सचारिकामिव । यथा विश्वासयोग्या दूती वल्लभस्य सदेश नायिका प्रति नयति तद्वदसौ हरि स्ववशी वेणु नियुज्य । **मधुर स्वरालापम् अरम् अध्यापियत्** । निजवशीद्वारा सदेशमिवात्यन्तमधुरालाप द्रुतमातनोत्, **यत्** यस्मात् कारणात् **सोऽपि** स स्वरालापोऽपि, **भुजङ्गास्यान्निर्यन् प्रखरगरलादग्ध इव** सर्पमुखात् निसृतफूत्कारो यथा तीक्ष्णविषेणावलिप्त तद्वदस्यहरेर्मुखात्प्रक्षिप्त स्वरालापोपि । **अनुस्मर निर्यन् स्मर** कन्दर्पम् अनु अनुस्मरम् । 'अनुप्रवचने द्वितीया' । अनगोग्रसर्पविषमिव निसृत तामा कर्णपुटे प्रविष्ट सन् । **तदा इमा** गोपीर**मूर्छयत्** विषबाधया इव अनङ्गबाधया समोहयामास । **अपियत्** इति पि गतौ 'अच्चिश्नुधातु ' इत्यनेन इयडादेश । लडि अपियत् अतनोदित्यर्थ ॥ **अजित** इत्यनेन स परमात्मा कर्तुमकर्तुमन्यथा कर्तृत्वन अचेतना वशी चेतनायुक्ता सद्दूतीमिव नियोक्तु समर्थ इति भाव ॥ अथवा स्वय कामविकाररहितत्वात् न जित केनापि इति भाव ॥ शिखरिणी वृत्तम् ॥३॥

**हरदृगनलप्लुष्टोऽनङ्ग पुनस्तनुलिप्सया**
**ननु भगवत कुक्षि भेजेऽतिसूक्ष्मतयेह य ॥**
**सुमनइषवस्तस्योच्छ्वासै सुवेणुगतैर्हरे-**
**र्बहिरुपगता नालीकत्व स्फुट च किलोपिरे ॥४॥**

**अन्वय**—हरदृगनलप्लुष्ट अनङ्ग य पुनस्तनुलिप्सया इह अतिसूक्ष्मतया भगवत कुक्षि भेजे । ननु । हरे सुवेणुगतै उच्छ्वासैश्च तस्य बहिरुपगता सुमनइषव किल स्फुटम् अलीकत्व न ऊपिरे ॥

**व्याख्या—हरदृगेति ॥ हरदृगनलप्लुष्ट** हरस्य शभोर्दृक् दृष्टि तस्या अनल तेन प्लुष्टो दग्ध स । शिवनेत्राग्निना भस्मीभूत । **अनङ्ग** काम । **य पुनस्तनुलिप्सया** पुनरपिशरीरधारणेच्छया । **इह**ास्मिन्समये । **अतिसूक्ष्म**

**तया** अशरीरत्वादतिसूक्ष्मत्वेन । **भगवत** श्रीकृष्णस्य **कुक्षि** जठर **भेजे** प्रविवेश । **ननु** निश्चयेनेत्यर्थ । **हरे सुवेणुगतैरुच्छ्वासै** श्रीकृष्णस्य वशीधमनेनोत्थितै दीर्घोच्छ्वासै । **तस्य** मदनस्य । **बहिरुपगता सुमनइषवो** बहिर्निर्गता कुसुमबाणा । **किल** निश्चयेन । **स्फुट** स्पष्टम् । **अलीकत्वम्** अप्रियत्वम् अनृतत्व वा । **न ऊपिरे** न ऊपु । मदनस्य कुसुमबाणैरप्रियत्व न जनितमिति स्पष्टमित्यर्थ । अथवा कामो दग्धो नेति स्फुट सत्यत्व प्रतिपादयामासु ॥ हरिणी छ द । रसयुगहय न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥४॥

**चिर निगूढ कुसुमेषुमेत स्फुलिडगदेश्य हृदयेषु तासाम् ॥**
**वशीधमन्युद्गतगीतदीर्घोच्छ्वासैरिवावर्धयदब्जनाभ ॥५॥**

**अन्वय** —तासा हृदयेषु कुसुमेषु स्फुलिङगदेश्य चिर निगूढम् । अब्जनाभ वशीधमन्युद्गतगीतदीर्घोच्छ्वासै एतम् अवर्धयत् इव ॥

**व्याख्या—चिरमिति ॥ तासा हृदयेषु** गोपीना हृत्सु । **कुसुमेषु** कुसुमानि इषवो यस्य स कुसुमेषु तम् । मदनम् । **स्फुलिङ्गदेश्यम्** ईषन्न्यून स्फुलिङ्ग स्फुलिङ्गदेश्य तम् । 'ईषदसमाप्तौकल्पब्देश्यदेशीयर' इत्यनेन 'देश्य' प्रत्यय । अग्निकणरूपम् । 'त्रिषु स्फुलिङ्गोऽग्निकण सताप सज्वर समौ' इत्यमर । **चिर निगूढ** बहुकालात् गुप्तरूपेण स्थितमेव । **अब्जनाभ** श्रीकृष्ण । **वशीधमन्युद्गतगीतदीर्घोच्छ्वासै** वशीधमन्या वेण्वाध्मानेनोद्गत यत् गीत स्वरालाप तस्य दीर्घोच्छ्वास तै । वेणुस्वरालापोद्गतदीर्घवातै । **एत** मदनम् । अवर्धयत् इव वृद्धिमनयन्निव ॥

स कामो गोपीना हृत्सु अग्निकणमिव सूक्ष्मरूपेण पूर्वस्मादेव चिरकालादुवास । कणरूपोग्निर्वेणुधमन्या प्रबोधितो यथा प्रवर्धते तद्वत् प्रभुरिह स्ववेणुस्वरालापोद्गत दीर्घवातै त सूक्ष्म मदन प्रजज्वाल, उद्दीपयामासेति भाव ॥ उत्प्रेक्षालकार । उपेन्द्रवज्रावृत्तम् ॥५॥

**स्मराग्नि प्रादीपि द्रुतमजनि पीडा खलु ततो**
**न काऽपि व्यापार स्फुटमपि तदाऽबोधि रमणी ॥**
**अपूर्यत्र प्रीत्या सपदि नयने कस्य न यदा**
**स्वरैर्वंशी साऽताय्यतिमधुरमप्यायि च भृशम् ॥६॥**

**अन्वय** —यदा सा वशी स्वरै अतिमधुरम् अतायि, भृशम् अप्यायि च तदा स्मराग्नि द्रुत प्रादीपि, द्रुत पीडा अजनि खलु ।

तत कापि रमणी स्फुट व्यापार न अबोधि, अपि च कस्य नयने प्रीत्या अस्र न अपूरि ? ।।

व्याख्या—**स्मराग्निरिति ॥ यदा सा** मदनबाणै सश्लिष्टेव हरिणाक्षायिता **वशी स्वरैरतिमधुरम् अतायि भृशम् अप्यायि च**–अत्यतमधुरालापैरविरत दीर्घस्वरानतनोत्। तदा **स्मराग्निर्द्रुत प्रादीपि द्रुत पीडा चाऽजनि खलु**–तदा कामाग्निरासमतात् द्रुत प्रजज्वाल, तत्स्मराग्ने प्रभावात् तस्य पीडा दु खमप्यनुभूता ताभि । न कापि व्रजवधूस्तत्राभूत् या प्रज्वलितकामाग्निना पीडिता नासीदित्यर्थ । **तत** तदनतर। **कापि रमणी स्फुट व्यापार नाऽबोधि** सा प्रव्यक्त निज व्यवहार नाजानात्। **अपि च** न केवलमिदमपितु। **कस्य नयने प्रीत्या अस्र नाऽपूरि** ?–कस्य–येन केन स मधुर स्वर श्रुत तस्य नयने चक्षुषि प्रेमाश्रुपूर नाऽभूत् ? अभूदित्यर्थ । हरेर्मधुरालापै प्रतिरमणी कामपीडिता समोहिता तथा प्रेमाश्रुक्लिन्ना बभूव इति भाव ।। अदीपि, अजनि, अबोधि, अतायि, अप्यायि एतानि रूपाणि 'लुङ सति' 'दीपजनबुधपूरितायिप्यायिभ्यो यतरस्याम्' इत्यनेन कर्तरि चिण् कविनात्र साकल्येन सूत्रोदाहरणम् ग्रथितमितिचित्रम् ।। शिखरिणी छन्द ।।६।।

**न केवल स्व स्वमहायि गेह वनाय गोपीभिरलक्षिताभि ।।**
**किन्त्वेतदङ्गाभरणैरपीह कुर्वद्भिरन्योन्यपदावलम्बम् ।।७।।**

**अन्वय**—वनाय अलक्षिताभि गोपीभि न केवल स्व स्व गेहम् अहायि, किन्तु इह अन्योन्यपदावलम्ब कुर्वद्भि एतदङ्गाभरणै अपि ।।

**व्याख्या- न केवलमिति ॥ वनाय** वन गन्तुम्। 'क्रियार्थोपपदस्य च' इत्यनेन चतुर्थी। **अलक्षिताभिर** यैरपश्यतीभिर्गुप्तरूपेण गच्छतीभि **गोपीभि । न केवल स्व स्वम्** आत्मनो गेह**महायि** त्यक्तम्। ओहाक् त्यागे लुङि कर्मणि चिण्। **किन्तु इह**ास्मिन् समये। **अन्योन्यपदावलम्ब कुर्वद्भि** । वीप्साया कर्मव्यतिहारे सर्वनाम्नो द्विरुक्ति । यथा एकेन कृत तमनुसरन् अन्येनापि तदेव कृतम् एतादृश कुर्वद्भि **एतैरङ्गाभरणैरपि** आभूषणैरपि निज निज गृह स्थानम् अहायि-कर्णयोराभूषणानि नासिकया धृतानि एवम् अन्येनाभूषणन अन्यस्य स्थान गृहीतमित्यर्थ. । ता गोप्यो न केवल गुप्तरूपेणालक्षिता वनमगच्छन् किन्तु विपर्ययस्थाभूषणैरलङ्कृता जग्मु ।।

तथा तीव्रासक्तियोगादुन्मत्ता इव स्वभान विस्मृतवत्यो गृह तत्यजुरितिभाव । उपेन्द्रवज्रावृत्तम् ।।७।।

**सपदि विभुना तासामूरू पिचण्डमथो पदे**
**गतिमनु कटिं नेत्रे नासा कचानपि पश्यता ॥**
**विधुधवलिते रम्भाऽबोधि स्थलाब्जचयो वने**
**गजमृगपती न्यङ्कु कीरश्चमर्यपि शङ्किता ॥८॥**

**अन्वय**—अथो विधुधवलिते वने तासा (अङ्गानि) पश्यता विभुना ता सपदि शङ्किता । तासा ऊरू रम्भा शङ्किता, पिचण्ड स्थलाब्जचय अबोधि, अनुगतिपदे गजगति, कटि मृगपति, नेत्रे न्यङ्कु, नासा कीर अबोधि, कचानपि चमर्य शङ्किता ॥

**व्याख्या—सपदीति** ॥ **अथो** वेणुनिनादानन्तरम् । **विधुधवलिते वने** चन्द्रमसा द्योतिते कानने । **तासा पश्यता विभुना** तासामागच्छतीना गोपीनामङ्गानि पश्यता श्रीकृष्णेन **ता सपदि शङ्किता** । **तासामूरू** तयो सौष्ठवात् तेन **रम्भा** कदली शङ्किता । **पिचण्ड** जठर तु **स्थलाब्जचय** स्थलकमलिनीना गुच्छोऽ**बोधि** ज्ञात । **अनुगति पदे गजगति शङ्किता** तासा पदन्यास तु तेन गजगमनमेव ज्ञातम् । **कटिं मृगपति** कटि पश्यता तस्या कृशत्वेन सिंहत्वमेवानुभृत तेन । **नेत्रे न्यङ्कुर्नेत्रयो** श्चचलत्वात् विशालत्वाच्च कि मृग इति शङ्कित । **नासा कीरो** नासिकाया सरलत्वादग्रे वक्रत्वाच्च कीर शुक शङ्कित । **कचानपि** कशपाशान् पश्यता **चमरी** मृगविशेष शङ्किता तासा केशत्रातुल्य इति भाव ॥ भ्रान्तिमान् अलकार साम्यादतोस्मिन तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थित । हरिणी छन्द ॥८॥

**अद्याप्याकलितामृतोऽनपगतश्रीको जडासङ्गतो**
**यो दोषाकरदर्शनाधृतरुचि कुर्वन्नध क्षीरधिम् ॥**
**वेष शेषगिरापि दुर्वचमुपादाय व्यभात्त हरिं**
**सद्यो नद्य इवानवद्यसुकृतास्ता हृद्यरूपा ययु ॥९॥**

**अन्वय**—य अद्यापि आकलितामृत, अनपगतश्रीक, जडासङ्गत, दोषाकरदर्शनाधृतरुचि क्षीरधिम् अध कुर्वन्, शेषगिरापि दुर्वच वेषम् उपादाय व्यभात् । त हरिम् अनवद्यसुकृता हृद्यरूपा ता नद्य इव सद्य ययु ॥

**व्याख्या—अद्यापीति** । **यो** हरि, पक्षे क्षीरधि, **अद्यापि** अद्यदिनपर्यन्तमपि **आकलितामृत** । आङ् अभिवृद्ध्यर्थे । आकलित प्राप्तम् अमृत मोक्षो यस्मात् स. ।

'मुक्ति: कैवल्यनिर्वाणश्रेयो नि:श्रेयसामृतम्' इत्यमर: । यो भक्ताय सर्वदा मुक्तिदानेपि अव्यथितमोऽभ्‍ । क्षीरविस्तु आकलितामृत: आङ् अभिव्याप्तौ आकलित नि:शेषेण प्राप्तम् अमृत सुधा यस्मात् स । 'पीयूषममृत सुधा' इत्यमर: । अर्थात् उदधिस्तु मन्थनकाल एव अपहृतपीयूष:, उत्तरत्र तु अमृत न विद्यते यस्मिन्निति भाव: । **अनपगतश्रीक:** अपगता निर्गता श्री: लक्ष्मी यस्मात् स अपगतश्रीक: । 'शेषाद्विभाषा' इत्यनेन कप् प्रत्य: । न अपगतश्रीक: अनपगतश्रीक: । हरिस्तु सदा लक्ष्मीसयुक्त: । क्षीरधिस्तु न तथा, स तु मथनसमये अपगतलक्ष्मीक: । **जडासङ्गत:** सुखदु:खे इष्टानिष्टे यो मोह: न विन्दति स जड: मुक्त: इत्यर्थ: । जडै: नारदसनकादिभि: आ सङ्गत: परिवृत: । कि तु उदधिस्तु जडै: ग्रावशिक्तादिभि: र्जलैश्च परिपूर्ण: । पुन: **दोषाकरदर्शनाधृतरुचि:** दोष: पापम् । आकर: खनि: । 'खनि: स्त्रियामाकर: स्यात्' इत्यमर: । दोषाकरस्य पापिन: दर्शने अधृतरुचि: अधृतप्रीति: । पापिनमनहमान: । उदधिस्तु दोषा रात्रि: (अव्ययम्) दोषाकरोतीति दोषाकर: चन्द्र: । 'कृञोहेतुताच्छील्यानुलोम्येषु' इत्यनेन कृञ: ट: प्रत्यय: । दोषाकरस्य दर्शने आधृतरुचि: विवृतशोभ: । अतएव सर्वतया हीन: **क्षीरधिं** क्षीरसमुद्रम् **अध: कुर्वन्** लघुतर: कुर्वन् । अर्थात् समुद्रात् आधिक्येन वर्तमान: अथ च तम् अध: कुर्वन् तस्योपरिशयन कुर्वन् तन्निवासीत्यर्थ: । एतादृशो य: श्रीकृष्ण: **शेषगिराऽपि** शेषस्य शेषनागस्य गी: वाणी तया । शब्दशास्त्रस्य निदान मूर्तिना शेषनागेन वर्णनकरणेनापि **दुर्वच:** वक्तुमशक्य: **वेष:** प्रसाधनम् । रासक्रीडार्थधृतवेषम् । शृङ्गारभृतमिति भाव: । **उपादाय** ग्रहण कृत्वा **व्यभात्** शुशुभे । एतादृश **त हरिं प्रति अनवद्यसुकृता** अवद्य गर्ह्यम्, अवद्यमिति 'अवद्यपण्यवर्या गर्ह्यपणितव्या निरोधेषु' इत्यनेन निपातनात् यत् प्रत्यय: । न अवद्यम् अनवद्य सुकृत पुण्य यासा ता: अनवद्यसुकृता: निर्दोषपुण्या: । **हृद्यरूपा:** 'हृदयस्य प्रिय:' इत्यनेन यत् । हृदयस्य प्रिय हृद्यम् । मनोहरस्वरूपा: **ता:** गोप्य: । **नद्य इव** यथा नद्य: सरित: समुद्रमीलनाय पर्वतादिबन्धमविगणय्य सभ्रमेन यान्ति तद्वत् इमा: गोप्य: स्वजनादे: प्रतिबन्धमनादृत्य **सद्य:** तत्कालमेव **ययु:** जग्मु: ॥ व्यतिरेकालकार: ॥ शार्दूलविक्रीडित वृत्तम् ॥९॥

**ईषत्सान्निध्यमात्रेप्यवशवदनयोश्चक्रवर्तित्वसाम्ये-**
**प्यौन्नत्योद्रेकिणो: श्रीकरभृदपि कर दास्यतीत्याशयोत्थात् ॥**
**हर्षाद्गोप्यो न गोप्य: स्फुटमिह महिमैत्यर्चितौ सुष्ठु गन्धै:**
**छद्माक्षिप्ता: स्तनौ द्राग्युयुजुरनुमिलत्कज्जलौ लज्जयेव ॥१०॥**

**अन्वय:**--चक्रवर्तित्वसाम्येऽपि औन्नत्योद्रेकिणो: अनयो: ईषत्सान्निध्यमात्रेऽपि श्रीकरभृदपि अवशवत् कर दास्यति इत्याशयोत्थात्

हर्षात् (यदा) गोप्य स्फुटम् इह (अनयो ) महिमा न गोप्य इति सुष्ठु गन्धै अर्चितौ स्तनौ (सत्य ) (तदा) छद्माक्षिप्ता लज्जया मिलत्कज्जलौ द्राक् अनु युयुजु इव ॥

**व्याख्या—ईषदिति** ॥ **चक्रवर्तित्वसाम्ये** चक्रवर्तिन सार्वभौमस्य सर्वश्रेष्ठस्य भाव चक्रवर्तित्व तस्य साम्य सादृश्य तस्मिन्। शृगारभावोत्तेजकाना सर्वथा स्त्र्यवयवाना मध्ये कुचयो श्रेष्ठत्वेन सार्वभौमता सर्वश्रेष्टता तस्या अपि तुल्ये। अथ च चक्रवाकोपि वलयाकृतिशरीरसौष्ठवात् कुचसादृश्ये कविभि प्रदर्शित। अत चक्रवत् वर्तनशीलौ चक्रवाकवत् समताया वल्याकारौ पीवरौ कुचौ इत्यर्थ। 'कोक चक्र चक्रवाकरथागाह्वयनामक' इत्यमर। अथवा चक्रवत् सुदर्शनवत् वर्तनशीलौ कर्तनशीलौ अर्थात् पुरुषमनस चक्रवत् कर्तनशीलतुल्यत्वेपि। **औन्नत्योद्रेकिणो** उन्नतस्य भाव औन्नत्यम् इति ष्यञ् औन्नत्यस्य उच्चैस्त्वस्य औद्धत्यस्य च उद्रेक अतिशय तद्वतो शील ययो तयो औन्नत्योद्रेकिणो 'सुप्यजातौ णिनिस्ताच्छील्ये' इत्यनेन णिनि। अतिशयोन्नतोद्धतयो गोपीनाम् **अनयो** कुचयो। **ईषत्सान्निध्यमात्रेपि** सनिधे भाव सान्निध्यम्। 'इगन्ताच्च लघुपूर्वात्' इत्यनेन अञ्। सान्निध्यमेव सान्निध्यमात्रम्। 'मात्रच्' प्रत्यय। तस्मिन् सान्निध्यमात्रे, स्वल्पमपि सनिकर्षे अर्थात् एतादृशयो सुपुष्टकुचयो स्वल्पमपि सहवासेन **अवशवत्** पराधीन इव मोहित सन् **श्रीकरभृदपि** श्रिय लक्ष्म्या कर हस्त बिभर्तीति श्रीकरभृत्। इति क्विप। श्रीधरोऽपि। अथ च श्रिय सकाशात् कर राजदेयद्रव्य बिभर्ति स्वीकरोति। राज्ञो नन्दस्य पुत्रत्वात् राजकरग्राहकोपि। अर्थात् एतादृक् करग्राहकोऽसौ श्रीकृष्ण **अवशवत् कर** हस्त **दास्यति**। करग्राहकस्य स्थाने करदाता भविष्यति। अर्थात् अनुरक्तो भूत्वाऽस्माक स्वीकार करिष्यति। **इत्याशयोत्थात्** इत्याभिप्रायेण जनितात् **हर्षाद्** आनन्दात् **यदा गोप्य** गोपवध्व स्फुट यथा स्यात् तथा स्पष्टम्। **इह** अस्मिन् क्रीडासमये **महिमा न गोप्य** अनयो कुचयो महत्व न गोपनीय नापह्नवनीयम् अपि तु प्रकटनीयमेव। गोप्य इति गुप गोपने इत्यस्मात् 'ऋहलोर्ण्यत्' इत्यनेन ण्यत्। **इति** एवमाशयेन **सुष्ठु** शोभन यथा भवति तथा। **गन्धै** अनुलेपनै। ललाटानुलेपनद्रव्येण पुरुषत्वद्योतकोद्धतलक्षण प्रदर्शितमिति भाव। **अर्चितौ** सत्कृतौ चार्चितौ वा **स्तनौ** पयोधरौ सत्य **तदा छद्माक्षिप्ता** श्रीकृष्णेन छद्मना कपटेन आक्षिप्ता निराकृता सत्य अर्थात् स्वागत वो महाभागा कमनीया इत्यादि कपटवचनेन निर्भर्त्सिता निराकृताश्च सत्य तदा **लज्जया** व्रीडया **मिलत्कज्जलौ** मिलन्तौ कज्जलौ मिलत्कज्जलौ, निर्भर्त्सनेन अश्रुपतनात् कज्जलयुक्तौ **अनु युयुजु इव** तत्कालमेव योजयत्य इव। अर्थात् स्त्रीत्वद्योतकलक्षणलज्जया अश्रुपातेन च **तौ कुचौ** कज्जलावरणेनाच्छादयन्त्य इव बभूवु।

प्राक् पुरुषचिह्नलाञ्छितोद्धतोन्नतकुचप्रदर्शनेन श्रीकृष्ण वशमानेतु प्रयतमाना गोप्य तस्य कैतवेन कृताक्षेपवचनेन तद्विधेयकार्यसपादने सामर्थ्याभाव जानत्य सत्य तदा रोदनेन लज्जाप्रदस्त्रीचिह्नलाछिता बभूवुरिति भाव । उत्प्रेक्षालङ्कार । शार्दूलविक्रीडित वृत्तम् ॥१०॥

**क्षारादम्बुनिधे पयासि मधुराण्यप्राप्य तस्याबला**
**कालिन्दीमनुयाचितु कृतधियस्ता यज्ञपत्नीरयम् ॥**
**दृष्ट्वैवोपगतस्य सज्जलमुच शङ्का समुत्पादयन्**
**रेमे श्रीरमणश्चिराय रुचिर ताभिस्तडिद्दीप्तिभि ॥११॥**

**अन्वय**—अय ता यज्ञपत्नी दृष्ट्वा एव, अम्बुनिधे क्षारात् मधुराणि पयासि अप्राप्य तस्य अबला कालिन्दीम् अनुयाचितु कृतधिय (तत्र) उपगतस्य सज्जलमुच शङ्का समुत्पादयन्, श्रीरमण ताभि तडिद्दीप्तिभि चिराय रुचिर रेमे ॥

**व्याख्या—क्षारादिति** ॥ अय श्रीकृष्ण । **ता यज्ञपत्नीर्दृष्ट्वा एव** तत्र कानने द्विजपत्नीना निवसति स्वाभाविकत्वेन तासा सम्मुखे गुरुजनत्वात् करिष्यमाणा रासक्रीडामनुचिता दृष्ट्वैव इत्यर्थ । **अम्बुनिधे क्षारात्** समुद्रस्य जलस्य लवणत्वात् । **मधुराणि पयास्यप्राप्य, तस्य** समुद्रस्याऽबला पत्नीं **कालिंदीं** यमुनानदीम**नुयाचितु** तस्या सुस्वादुजल याचितु **कृतधिय** कृताधीर्येन स कृतधी तस्य । कृतनिश्चयस्य । **उपगतस्य** तत्रागतस्य । **सज्जलमुच** सुमेघस्य । **शङ्का समुत्पादयन्** मेघस्य भ्रम तन्वेव मेघपटल वितन्वन् । **श्रीरमण** श्रिया रमणोऽसौ श्रीरमण यद्यपि सदा लक्ष्म्या सह रमणशील तदायत्र **ताभिस्तडिद्दीप्तिभि**र्विद्युल्लेखेव कान्तिमतीभिर्गोपीभि**श्चिराय रुचिर रेमे** सुचारु रूपेण चिर रमयामास । अबलामित्यनन स्त्रीस्वभावो दानशीलत्वाद् याचने सुलभ इति भाव ॥ अपन्हुतिरलकार ॥ शार्दूलविक्रीडित वृत्तम् ॥११॥

**मुमुक्षूणा मोक्ष करगत इवाहङ्कृतिजुषा**
**प्रमत्तानामुच्चैर्निभृतमधनानामिव निधि ॥**
**प्रकाशो दृष्टीनामिव भृशमपथ्यार्पितहृदा-**
**वलिप्ताना तासा विभुरपि बतान्तर्धिमगमत् ॥१२॥**

**अन्वय**—मुमुक्षूणा करगत मोक्ष इव, दृष्टीना प्रकाश इव (किन्तु स एव विभु) अहङ्कृतिजुषा प्रमत्ताना अधनाना निधिरिव

वा अदृष्टीना प्रकाश इव उच्चै निभृत ( तद्वत् ) अपथ्यार्पित-हृदावलिप्ताना तासा विभुरपि भृश अन्तर्धिम् अगमत ।

**व्याख्या--मुमुक्षूणामिति । मुमुक्षूणा करगतो मोक्ष इव** यो विभुरपवर्गेच्छूना हस्तागतमोक्षरूपेण यथा वर्तते, वा **दृष्टीना प्रकाश इव** अथवा दृष्टीनाम अधत्वरहिताना प्रकाश सर्वदर्शक इव । किन्तु स एव प्रभु । **अहङ्कृतिजुषा प्रमत्तानाम्** अहकारयुक्ताना मदोन्मत्ताना प्रति तु । **अधनाना निधिरिव** यथा दरिद्राणा प्रति सपत् निगूढा अथवा **अदृष्टीनामन्धाना प्रकाश इव** प्रकाशो वर्तमानोपि तस्य न लाभ तद्वत् अहकारयुक्ताना मदोन्मत्तानाम् **स प्रभुरुच्चैर्निभृत** नितान्त गुप्तोऽस्ति । अत **स विभु अपथ्यार्पितहृदावलिप्तानाम्** अपथ्ये अहिते अर्पित हृत् अपथ्यार्पितहृत् तेन आवलिप्ता-नितान्तावगुठिता तासाम् । **तासाम्** अहितकर्मकर्तुमासक्ताना गोपीना **भृश** नितान्तम् **अन्तर्धिमगमत्** । अदृश्यत्वमगच्छत् 'अन्तर्धिरपवारण 'मित्यमर । यथा मोक्षेच्छूना हस्तस्थापि मुक्तिरहभावविद्यमानत्वादर्शनत्व याति । निर्धनाना सुगूढ क्षिप्तोनिधिर्दुष्प्राप्य, तथा च अदृष्टीना यथा प्रकाशो विद्यमानोपि नोपकारी तद्वदत्र स प्रभु श्रीकृष्ण तासा गोपीना कुमार्गासक्तहृदयत्वात् सम्मुखोप्यदृश्योभदिति भाव ॥ शिखरिणी वृत्तम् ॥१२॥

**प्रत्यक्षादित्रय यत्पदयुगपदवी न स्पृशत्येष गम्यो**
**द्रागेकेनागमेन क्षणमपि कलितेनापि दृग्भ्या च नूनम् ॥**
**तस्याऽभिख्या दधानान्द्रुमवरनिचयास्तद्विभूतिप्रमुख्यान्**
**पूर्णं ब्रह्माभ्यपृच्छन्प्रतिपदमबला हन्त विभ्रान्तचित्ता ॥१३॥**

**अन्वय**—प्रत्यक्षादित्रय यत्पदयुगपदवी नून दृग्भ्या च न स्पृशति । एष एकेन आगमेन क्षणमपि कलितेन द्राक् गम्य । हन्त ! एता विभ्रान्तचित्ता अबला तस्याभिख्या दधानान् तद्विभूतिप्रमुख्यान् द्रुमवरनिचयान् प्रतिपद पूर्ण ब्रह्म अभ्यपृच्छन् ॥

**व्याख्या—प्रत्यक्षेति । प्रत्यक्षादित्रयम्**-त्रयोऽवयवा यस्येति तत् त्रयम् आदीना ब्रह्मविष्णुमहेशाना त्रयम् आदित्रयम् । प्रत्यक्षम् आदित्रय प्रत्यक्षादित्रयम् । साक्षाद् ब्रह्मविष्णुमहेशाना त्रयम् । अथ च प्रत्यक्षम् आदिर्यस्मिन् त्रये तत् प्रत्यक्षादित्रयम् । प्रत्यक्षानुमानोपमानानि प्रमाणानि । **यत्पदयुगपदवीं** यस्य पदयुगस्य पदवी स्थान सा यत्पदयुगपदवी ताम् । **नून दृग्भ्या च न स्पृशति** यस्य पूर्णब्रह्मण. चरणयुगलस्य स्थानमपि आदिदेवानाम् अगोचरम् अथ वा

तदा तस्यादृश्यत्व प्राप्नुवती। तेन परित्यक्ता बभूवेत्यर्थ। **अच्युतविच्युता** एतादृशी श्रीकृष्णेन परित्यक्ता सा गोपी। **दूरादश्रुसलिलैर्निम्नानुगैर्दर्शिते** तद्दूरप्रदेशान्निम्नप्रदेशागतैरश्रुभिर्दर्शिते **यामुनके प्रान्ते** यमुनातटाके। अश्रुसलिलार्द्रमार्गेण विलोकय ती, यमुनातटाकमागता इत्यर्थ। **पूर्वोज्झिताभि पुनर्मिलिता रुरोद** पूर्वत्यक्ताभिर्गोपीभि पुन सगत्य रुरोद॥ शार्दूलविक्रीडित वृत्तम्॥१४॥

**अहमाने शान्ते परिचितदिशान्तेन विभुनो-**
**ज्झिताना गोपीना रुचिरधृतपीनान्तररुजाम्।**
**अपूवश्रीधामाऽतिगतिरुरुधामादृशगिरा**
**विरेजे कालिन्दीतटमथ मिलिन्दीकृतमिव॥१५॥**

**अन्वय**—तेन विभुना उज्झिताना रुचिरधृतपीनान्तररुजा परिचितदिशाम् अदृशगिरा गोपीनाम् अहमाने शान्ते, अथ अपूव-श्रीधाम, अतिगतिरुरुधाम मिलिन्दीकृतमिव कालिन्दीतट विरेजे॥

**व्याख्या—अहमान इति॥ तेन विभुना** श्रीकृष्णेन। **उज्झिताना** त्यक्तानाम्। **रुचिरधृतपीनान्तररुजा** रुचिरा धृता पीनाऽन्तरे रुक् याभि ता रुचिरधृतपीनान्तररुज तासाम्। हृदि प्रियतमस्यात्यन्तकष्टदा तदपि प्रियतरा बहुविरह व्यथामनुभवन्तीनाम्। **परिचितदिशा** परिचिता ज्ञाता दिक् दिशा याभि ता परिचितदिश तासाम्। दिशा ज्ञान प्राप्तानाम्। **अदृशगिरा** दृशा च गीश्च दृशगिरौ, न दृशगिरौ अदृशगिरौ, अदृशगिरौ यासा ता अदृशगिर तासाम् अदृश-गिराम्। प्रभोरदृश्यत्वानुदु खेन वक्तुमीक्षितु चासमर्थानाम्। स्तब्धीभूतानामित्यर्थ। चतुर्दिक्षुपश्यन्तीना भाषणरहितानामिति भाव। **गोपीनाम्। अहमाने शान्ते** अहकारे निर्गते सति। **अथ** तदनतरम्। **अपूर्वश्रीधाम** अपूर्वम् अद्वितीय श्रिया शोभाया धाम स्थान तत्। अद्वितीयशोभायुक्तम्। **अतिगतिरुरुधाम** अतिक्रान्ता गतिर्येषा रुरूणा मृगविशेषाणा धाम, स्तब्धमृगै परिवेष्टितम्। **मिलिन्दीकृतमिव** न मिलिन्द भ्रमर अमिलिन्द, अमिलिन्द मिलिन्द इव सपद्यमान त कृत मिलिन्दीकृतम् इव। 'अभूततद्भावे च्वि'। आसमतात् भ्रमरै सङ्कुलितमिव **कालिन्दी तट विरेजे** यमुनातट शुशुभे॥

प्रभोरदृश्यत्वाद्विरहदु खिता मानरहितास्ता गोप्य यदा यमुनातटे अन्धमूकमिव निस्तब्धा आसन् तदा तत्तटम् अतिश्रियाविराजित मृगैर्भ्रमरैश्च सङ्कुलितमिव गोपीभि परिवेष्टित शुशुभे इति भाव॥ शिखरिणीवृत्तम्॥१५॥

**तस्या पुलिनेऽमलिने नलिनेक्षणचिन्तया विगतनिद्रा ।।**
**विद्रावणाय विरहव्याधेश्चेष्टा तदादृताञ्जगृहु ।।१६।।**

**अन्वय**—तस्या अमलिने पुलिने नलिनेक्षणचिन्तया विगत-निद्रा विरहव्याधे विद्रावणाय तदादृता चेष्टा जगृहु ।।

व्याख्या—**तस्या इति**। **तस्या** यमुनाया। **अमलिने** निर्मले। **पुलिने** तोयोत्थिततटाके। **नलिनेक्षणचिंतया** नलिने इव ईक्षणे यस्य स नलिनेक्षण कमलनयन श्रीकृष्ण तस्य चिन्ता स्मृति तया। **विगतनिद्रा** निद्राहीना ता गोप्य। **विरहव्याधेर्विद्रावणाय** तस्य कृष्णस्य वियोगजनितदु ख नाशयितु। **तदादृताम्** तेन आदृता स्वीकृता ताम्। **चेष्टा** व्यापार **जगृहु** तस्य परमात्मन स्वीकृता क्रिया चक्रुरित्यर्थ ।। यमकानुप्रास । आर्या छद ।।१६।।

**काल प्रभूतमिति तत्र स विप्रलम्भा-**
**स्वाद प्रदाय विशदायतलोचनाब्ज ।।**
**सम्भोगक रसयितु रसमुत्सुकास्ता-**
**स्तेनैव सम्मदयितु ध्रुवमाविरासीत् ।।१७।।**

**अन्वय** — इति विप्रलम्भास्वाद प्रभूत काल प्रदाय। ता उत्सुका सम्भोगक रस रसयितु तेनैव ध्रुव सम्मदयितु स विशदायतलोचनाब्ज तत्र आविरासीत् ।।

व्याख्या—**कालमिति** ॥ **इति** इत्थ प्रकारेणाऽदृश्यत्वात्। **विप्रलम्भास्वाद** विरहव्यथानुभूति, विप्रलम्भशृङ्गाररसोत्पादितकरुणरसानुभवम्। 'विप्रलभो विप्रयोग' इत्यमर। **प्रभूत काल प्रदाय** बहुकालपर्यन्त दत्वा। 'कालाध्वनो रत्यन्तसयोगे' इत्यनेन द्वितीया। **ता उत्सुका** उत्कण्ठयासक्ता गोपी प्रति। **सम्भोगक रस रसयितु** समागमसुखास्वाद प्रदातु 'तुमुण्वुलौक्रियाया क्रियार्थायाम्' इत्यनेन भविष्यदर्थे धातोस्तुमुन्। रस आस्वादनस्नेहनयो। रस यतीति रसयितुम्। सम्भोगक रस कर्मक भविष्यत् रसन तत्प्रयोजक रसयितु। तथैव सम्मदयितु च। **तेनैव** तेनैवरसेन सुखास्वादनेन। **ध्रुव सम्मदयितु** ता गोपी खलु प्रमत्तता नेतु। **स विशदायतलोचनाब्ज** विशदे आयतेच अब्जे इव लोचने यस्य स। इत्यनेन शृगारभावप्रदर्शित श्रीकृष्ण **तत्र** यमुनातटे **ध्रुवम् आवीरासीत्** निश्चयेन प्रकटीबभूव ।। वसन्ततिलका वृत्तम् ।।१७।।

**कालिन्दीतटकुञ्जपुञ्जकुहरे स्वच्छन्दखेलञ् जगत्**
**प्राणायामवशो वियोगविपदा तासा स साधि वहन् ॥**
**प्रत्याहारपर स तत्र सुदृशामात्तोत्तरीयासनो-**
**भोगी कि च न सत्पथयस्य समवध्याताऽपि योगी बभौ ॥१८॥**

**अन्वय** —कालिन्दीतटकुञ्जपुञ्जकुहरे स्वच्छन्दखेलन्, तासा वियोगविपदा साधि वहन्, स जगत्प्राणायामवश प्रत्याहारपर, तत्र सुदृशाम् आत्तोत्तरीयासन भोगी अपि कि च सत्पथस्य समवध्याता योगी न बभौ ?

**व्याख्या** - **कालिन्दीतटकुञ्जपुञ्जकुहरे**-कालिन्द्या तट कुञ्जाना निकुञ्जाना पुञ्ज समूह तेषा कुहर विवर तस्मिन्। लतामण्डपेषु इत्यर्थ । **स्वच्छन्दखेलन्** स्वच्छन्द यथा स्यात्तथा खेलन् क्रीडन्। **तासा** गोपीना। **वियोगविपदा** विरह दुःखाना। **साधि** चिन्ता वहन्। **स जगत्प्राणायामवश** जगत प्राणानाम् आयामो विशालत्व वशे यस्य स । निखिलवायुमण्डलाधिपति । अथ च जगत्प्राणानाम् आयामो निरोधो वशे अस्ति यस्य स । प्राणायामक्रियया योगसाधनाया कुशल । प्राणायामपरायण इत्यर्थ । **प्रत्याहारपर** प्रत्याहार उपादान तस्मिन् परो रत, इन्द्रियनिग्रहे समर्थ । एतादृक् स श्रीकृष्ण । **तत्र सुदृशा** गोपीनाम 'कर्तृ कर्मणो कृति' इत्यनेन कर्तरि षष्ठी। **आत्तोत्तरीयासनो भोगी अपि** आत्त साधितम् उत्तरीयासन सम्भोगसुखस्य विशेषप्रकार यन स । उत्तरीयासनेन सुरतसुखस्य भोक्तापि। अथ च गोपीदत्तसव्यानवस्त्रासनस्थ । 'सव्यानमुत्तरीय च' इत्यमर । **सत्पथस्य** सदाचरणस्य। **समवध्याता** सन्ततदत्तावधान । **किं च योगी न बभौ** ? अपि तु बभौ इत्यर्थ ॥ तत्र उत्तरीयासनेन सुदृशा गोपीना भोगी कामासक्तोऽपि स प्रभु प्राणायामक्रियया प्रत्याहारपरेण इन्द्रियनिग्रहेण सदाचरण रक्षिता कि योगी न बभौ ? अपितु बभौ इति भाव ॥ काकुध्वनिरलङ्कार ॥ शार्दूलविक्रीडित वृत्तम् ॥१८॥

**काचिद्गोपवधूश्चुचुम्बवदन काचित्करावग्रहीत्**
**सक्रीडस्व मयैव सार्धमिति काप्याक्षिप्य कर्णेऽजपत् ॥**
**अङ्के काचिदुवाह पादयुगल काचिच्च नेत्रान्तिके-**
**तस्थौ ब्रह्म तदक्षवृत्तिभिरिवेत्येताभिरावेष्टितम् ॥१९॥**

**अन्वय** —तत्र काचित् गोपवधू वदन चुचुम्ब। काचित् करौ अग्रहीत्। कापि मयैव सार्ध सक्रीडस्व इति आक्षिप्य कर्णे अजपत्।

काचित् पादयुगल अङ्के उवाह। काचित् च नेत्रान्तिके। इति एताभि अक्षवृत्तिभि इव आवेष्टित तत् ब्रह्म तस्थौ ॥

**व्याख्या काचिदिति ॥ तत्र काचित् गोपवधू** तस्य **वदन** मुख **चुचुम्ब**। **काचित्** व्रजाङ्गना तस्य **करौ अग्रहीत्** निजकरे धृतवती। **कापि मयैव सार्धं सक्रीडस्व इति आक्षिप्य कर्णे अजपत्**, कापि मथैवसह क्रीडस्व ननु अन्यया सह इति आक्षेप भर्त्सना कृतवती त कर्णान्तिके असूचयत्। **काचिदन्या** तस्य **पादयुगल स्वाङ्के उवाह** अग्रहीत्। **कापि** अन्या तस्य **नेत्रान्तिके** अतिष्ठत् तस्य नेत्रे स्वनेत्राभ्या मीलयित्वा इत्यथ। **इति** एतत् प्रकारेण। **एताभिरक्षवृत्तिभिरिवाऽऽवेष्टित** वृते पण कृताभिरिव गोपीभि परिवेष्टितम्। अथच अक्षवृत्तिभि इव गुणीभूतैरिन्द्रियैरिवाऽऽवेष्टित **तत् ब्रह्म** निर्गुण स्वरूप **तस्थौ**, निरासक्तमित्यर्थ ॥ शार्दूलविक्रीडित वृत्तम् ॥१९॥

**हासयन्ति बहुश स्म ता विभु यासयन्ति बत वासयन्ति तम्**
**वीक्ष्य सिद्धनिवहैरभिष्टुता श्रीहरे स्वपदभक्तवश्यता ॥२०॥**

**अन्वय**—बत! ता विभु बहुश हासयन्ति त यासयन्ति, वासयति स्म वीक्ष्य श्रीहरे स्वपदभक्तवश्यता सिद्धनिवहै अभिष्टुता ॥

**व्याख्या**—हासयन्तीति ॥ **बत** आश्चय। **ता** गोप्य। **विभु** श्रीकृष्णम्। **बहुशो** विविध प्रकारेण **हासयन्ति** प्रमोदयन्ति स्म। 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इत्यनेन 'श' बहूनि हासयन्ति बहुश। बहुशो **यासयन्ति स्म**। 'यसु प्रयत्ने'। ता गोप्योविभुम् दृष्टार्थान्नेतु बहुप्रकारेण चेष्टामकुर्वन्। **वासयन्ति स्म**। 'वास उपसेवायाम्'। ता विभु परिमलद्रव्यैर्निषेवयति स्म। 'लट् स्मे' इत्यनेन भूतार्थे स्म। **वीक्ष्य** इति वीक्ष्य आलोच्य **श्रीहरे स्वपदभक्तवश्यता** स्वपदयोर्भक्ता स्वपदभक्ता तेषु वश्यता अङ्किता। **सिद्धनिवहै अभिष्टुता** देवगणै प्रशसिता। श्रीकृष्णस्य स्वभक्तेषु वशीभूतत्व सवीक्ष्य देवगणै प्रशसितम् इत्यर्थ ॥ रथोद्धता छद। रान्नराविह रथोद्धता लगौ ॥२०॥

**लुम्पन्तीभिरनुक्षणन्निजभुजाकम्पैकसल्लीलया**
**मल्लीमुख्यमहेन्द्रकाननलसद्वल्लीविलासच्छटाम् ॥**
**भल्लीभि स्मरसद्भटस्य सुचिर दृष्टचैव तल्लीनता**
**स्वस्मिन्त्सन्दधतीभिराभिरतनोत्साक स हल्लीसकम् ॥२१॥**

**अन्वय** —मल्लीमुख्यमहेन्द्रकाननलसद्वल्लीविलासच्छटा निज-भुजाकम्पकसल्लीलया अनुक्षण लुम्पन्तीभि, सुचिर स्मरसङ्कटस्य तल्लीनता दृष्टचैव स्वस्मिन् सन्दधतीभि आभि भल्लीभि साक स हल्लीसकम् अतनोत् ॥

**व्याख्या—लुम्पन्तीभिरिति ॥ मल्लीमुख्यमहेन्द्रकाननलसद्वल्लीविला-सच्छटाम्**—मल्लीमुख्या यस्मिन् तत्। एतादृक् महेन्द्रस्य कानन तस्मिन् लसन्त्यो या वल्लय तासा विलासस्य या च्छटा शोभा सा ताम्। मल्ल्यादिनन्दनवनशोभित-लताविभ्रमशोभाम्। नन्दनवनस्य लतिकासदृशीभिरित्यर्थ। **निजभुजाकम्पैक-सल्लीलया**—निजस्य भुजयोराकम्पो विधूनन सैव एका सल्लीला तया। **अनुक्षण** प्रतिक्षणम्। **लुम्पन्तीभि**र्हरन्तीभि। 'लुप्लृ छेदने' इत्यस्मात् शत्रन्तम्। **सुचिर** बहुकालपर्यतम्। **स्मरसङ्कटस्य** मदनस्य। **तल्लीनता** तद्रूपता। **दृष्टचैव** दृष्टि कटाक्षेणैव **स्वस्मिन् सन्दधतीभि**। कामबाहुल्याद्बहुकालपर्यं त तल्लीनता गताभिरित्यर्थ। **भल्लीभिराभि साक** एताभिर्भाषन्तीभिर्गोपीभि सह। 'भल भल्ल भाषणे'। **स** श्रीकृष्णो **हल्लीसक** रासक्रीडानृत्योत्सवम् **अतनोत्** चकार। यमकानुप्रासौ। शार्दूलविक्रीडितम् ॥२१॥

> **रासोत्सवे भगवतो नवतोषदायि-**
> **न्याकाशयायिभिरल मिथुनै सुराणाम्**
> **नृत्यद्भिरुन्नतपदं गमितेऽक्षिदेशे**
> **धात्रार्पिताऽनिमिषतैव निजान्वगायि ॥२२॥**

**अन्वय** —भगवत नवतोषदायिनि रासोत्सवे अक्षिदेशे उन्नतपद गमिते। आकाशयायिभि नृत्यद्भि सुराणा मिथुनै धात्रार्पिता निजा अनिमिषता एव अलम अन्वगायि ॥

**व्याख्या—रासइति ॥ भगवत** श्रीकृष्णस्य। **नवतोषदायिनि** नव प्रतिक्षण नवीनम् अद्भुत वा तोषम् आमोद ददातीति नवतोषदायी, इति णिनि। तस्मिन्। **रासोत्सवे** रासक्रीडाविलासे। **अक्षिदेशे** अक्ष्णोर्देश स्थान तस्मिन्। अक्षिपक्ष्मणि अक्षिगोलके च इत्यर्थ। **उन्नतपद गमिते** ऊर्ध्वदेशे चरमावस्थाया प्राप्तेसति। प्रभोरद्भुतरासक्रीडादर्शनेन विस्फारितेक्षणसति इत्यर्थ। **आकाश यायिभि** आकाशमार्गेण गच्छद्भि। **नृत्यद्भि सुराणा मिथुनै** सुरदम्पतीभि। **धात्रार्पिता** ब्रह्मणा दत्ता **निजा अनिमिषता** अक्षिपक्ष्मरहितता अक्षिपक्ष्मचलन रहिता वा **एव अल** पर्याप्तम् **अन्वगायि** सार्था मन्या ॥ अन्वगायि 'कै गै शब्दे'

इत्यस्मात् लुङि कर्मणि चिण् । प्रभो श्रीकृष्णस्य प्रतिक्षण नव नवीना सतोषदा रासक्रीडा स्थिरदृष्ट्या पश्यन्त्य सुरदम्पत्यो ब्रह्मणा दत्त निजनिर्निमेषत्व सार्थकम मन्यन्तेति भाव ।। वसन्ततिलकावृत्तम् ।।२२।।

**ता सप्तविशतिमिता वनिता नितान्त**
**तातोऽन्वह परिवहन्नहमस्मि नूनम् ।।**
**मद्वशजस्त्वयममूष्वमितासु सक्त**
**श्रान्तोऽपि नेति शशभृद्धृदि विस्मितोऽभूत् ।।२३।।**

**अन्वय** —अह तात ता सप्तविशतिमिता वनिता अन्वह परिवहन् नून नितान्त श्रान्त अस्मि । मद्वशज नु अय अमूषु अमितासु सक्त श्रान्तोऽपि न इति शशभृत् हृदि विस्मितोऽभूत् ।

**व्याख्या—ता इति ॥ अह तात** –तस्य श्रीकृष्णस्याह वशपूर्वजो जनक । **ता सप्तविशतिमिता वनिता,** एता अश्विनीत्यादिसप्ताधिकविशतिपरिमित सख्याका तारा मम योषित ता । **अन्वहम्** अहानि अहानि अनु अन्वह । 'अव्यय विभक्ति समीप ' इत्यनेन अव्ययीभावसमास । अ वह प्रतिदिन **परिवहन्** आभि साक क्रीडन्नित्यर्थ । **नून नितान्त श्रान्तोस्मि** निश्चयेनाऽत्यन्त शिथिलोस्मि । किन्तु **मद्वशजोऽय** श्रीकृष्ण । **अमूष्वमितासु सक्त** एतास्व परिमितासु गोपीषु क्रीडासक्त **श्रान्तोऽपि न** क्लान्तोपि न दृश्यते । **इति** इत्थ **हृदि** भावयन् **शशभृत्** चन्द्रो विस्मितोऽभूत् ॥ विरोधालकार । वसन्ततिलकावृत्तम् ॥२३॥

**द्विगुणा दधतीमगाधता स्थलकेलिश्रमघर्मवारिणा ।।**
**अवतीर्य तत कलिन्दजा सह कृष्णेन विजह्रुरङ्गना ।।२४।।**

**अन्वय** —तत स्थलकेलिश्रमघर्मवारिणा द्विगुणाम् अगाधता दधती कलिन्दजाम् अवतीर्य, अङ्गना कृष्णेन सह विजह्रु ।।

**व्याख्या—द्विगुणामिति ॥ ततो** रासक्रीडानन्तरम् । **स्थलकेलिश्रमघर्मवारिणा**–स्थले यमुनातटे केलि क्रीडा तस्या श्रम आयास तेनोत्थितोघर्म स्वेद स एव वारि तेन । **द्विगुणाम् अगाधता दधती कलिन्दजाम् अवतीर्य** क्रीडाजनितस्वेदजलेन द्विगुणामगाधता गभीरता गताया कालिंद्या अन्त प्रवेश्य **अङ्गना** गोप्य **कृष्णेन सह विजह्रु**र्जलक्रीडा चक्रु ॥ वियोगिनी वृत्तम् । विषमे ससजगा, समे च सभरलगा ॥ २४ ॥

**सर्वात्मभावत स्वस्वदोषाशयनसङ्गतान् ।।**
**तत्तद्दारान् प्रभुश्चक्रे तथैव बत गोदुहाम् ।।२५।।**

**अन्वय**—सर्वात्मभावत तथैव गोदुहाम् । स्वस्वदोषाशयनसङ्गतान् तत्तद्दारान् प्रभु तथैव चक्रे बत ।।

**व्याख्या**—**सर्वात्मेति** ।। **सर्वात्मभावत** सर्वेषु आब्रह्मस्तम्बपर्यन्त सर्वेषु निखिलजगत्सु आत्मन स्वस्य निजस्य भाव वर्तमानत्व सर्वात्मभाव तस्मात् तस्मि । सर्व विष्णुमय जगत् इत्याशयात् **तथैव** तेनैव भावनेन **गोदुहा** तेषा गोपालानामपि अन्तर्यामित्वात् । **स्वस्वदोषाशयनसङ्गतान्** स्वस्वदोष निजनिजव्यभिचारात्मको दोष तस्य आशय (अभिप्राय) आश्रय स्वस्वदोषाशय त न सङ्गता नानुलिप्ता तान् । नञर्थस्य न शब्दस्य सुप्सुपेति समास । अर्थात् निजनिजगोपास्यव्यभिचाराभिप्रायाद् दूरीभूतान् । **तत्तद्दारान्** तेषा तेषा गोपालाना पत्नी **प्रभु** असौ सर्वव्यापक श्रीकृष्ण **तथैव चक्र** अर्थात् दोषाशयनसङ्गतान् चक्रे दोषा (अव्यय) रात्रौ शयने सङ्गतान् । तेषा तेषा पत्नीना तत्तत्पतीना शयनसस्थितान् चक्रे । बत इदमाश्चर्यम् ।। श्लेषालङ्कार । अनुष्टुब्छन्द ।।२५।।

**न शारदी कापि विभावरीति विभावरीतिज्ञविभावरीतिम् ।।**
**अदीदृशत्सा स्वयमेव किन्तु विशारदीभूततयादृताभूत् ।।२६।।**

**अन्वय**—इति कापि शारदी विभावरी विभावरीतिज्ञविभौ अरीति न अदीदृशत् । किन्तु सा स्वयमेव विशारदीभूततया आदृता अभूत् ।।

**व्याख्या**—**नेति** ।। **इति** इत्थ पूर्वोक्तप्रकारेण **कापि शारदी** शरद शरदृतो इय शारदी । इति अण् । अणन्तत्वात् ङीप् । शरदृतुसम्बन्धिनी **विभावरी** रात्रि । 'विभावरीतमस्विन्यौ रजनी यामिनी तमी' इत्यमर । **विभावरीतिज्ञविभौ** विभावा यथा 'विकारो मानसोभावोऽनुभावो भावबोधक ।' तथा 'भाव सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमर एतेषामत्र क्रीडास्थले विभावाऽनुभाव व्यभिचारिभावा प्रमुखा ते तु पुनरालम्बनोद्दीपनरूपा । शृङ्गारादि रसानामपि विभावा । अत विभावाना रीति प्रकार अनुसरणपद्धतिर्वा ता जानात्यसौ विभावरीतिज्ञ स चासौ विभु श्रीकृष्ण तस्मिन् । आलम्बनोद्दीपनरूपविभावाना प्रकारविदि श्रीकृष्णे **अरीति** रीतिभिन्नाचरण **न अदीदृशत्** न दर्शयति स्म । अदीदृशत् इति 'दृशिर् प्रेक्षणे' इत्यस्मात् णिजन्तात् लुङिरूपम् । **किन्तु सा** शारदीरात्रि **स्वयमेव विशारदीभूततया** विशेषेण शरदृतुसबन्धिन्याल्हादकारक-

तया **आदृता** आदरणीया स्वीकृताऽभूत । अथ च किन्तु सा विभावाना रीति स्वयमेव श्रीकृष्णस्य विशारदीभूततया क्रीडाविषये नैपुण्यप्राप्ततया सर्वथा आदृता युक्ताऽभूत्।

सा शारदी रात्रि तत्तदालम्बनोद्दीपनरूपाणा शृङ्गारादिरसयुक्ताना विभावाना रीतिप्रदर्शने अस्मिन् श्रीकृष्णे रीतिभिन्नाचरण न दर्शयति स्म। अर्थात् तस्या शारदीयरात्रौ तत्तत् क्रीडाप्रकाराणा विस्फूर्तिर्नासीत् किन्तु सा रात्रि स्वयमेव शारद्य रूपतया अथ च सा रीतिश्च श्रीकृष्णस्य क्रीडाविषयकनैपुण्यतया सम्यगाविष्कृताऽभूदिति भाव ॥ उपेन्द्रवज्रा वृत्तम् ॥२६॥

**शरासो वै रासो जनिहितकरासो रतिपति-**
**त्रिलोकीजेतृत्वोत्कटमदनिरासोत्कमनस ॥**
**जनेनात्मस्वान्ताभिधशरवरेणाभ्युपहिती-**
**कृतश्चेद्धेतु स्यात्परपदशरव्याशुकलने ॥२७॥**

**अन्वय**—रतिपतित्रिलोकीजेतृत्वोत्कटमदनिरासोत्कमनस हितकरासो रास शरास अजनि (यो) जनेन आत्मस्वान्ताभिधशरवरेण अभ्युपहितीकृतश्चेत् (तर्हि) परपदशरव्याशुकलने हेतु स्यात् वै ॥

**व्याख्या—शरास इति ॥ रतिपतित्रिलोकीजेतृत्वोत्कटमदनिरासोत्कमनस** रतिपतेः मदनस्य त्रिलोकीजेतृत्वस्य त्रिजगज्जयकर्तृत्वस्य य उत्कटमद अतिशयगर्व तस्य निरासस्य दूरीकरणस्य उत्कमन उत्सुकमनो यस्य स तस्य। पुन **हितकरासो** हित कर्तुं शीलमस्य स हितकर 'कृञो हेतुताच्छील्यानुलोम्येषु' इत्यनेन ताच्छील्ये करोते ट प्रत्यय । हितकरा असव प्राणा यस्य स तस्य । अथवा जनिहितकरासो जनीनाम् उत्पन्नाना प्राणिना हितकरा असवो यस्य स तस्य । एतादृश श्रीकृष्णस्य रास रासक्रीडा स एव शरासो धनु अजनि समभूत् 'जनिरुत्पत्तिरुद्भव' इत्यमर । **यो जनेन** पुरुषेण श्रवणमननकीर्तनादिभिरितिभाव । **आत्मस्वान्ताभिधशरवरेण** आत्मन स्वान्त मानस तस्य अभिध स्थिति यमनियमादिभिरिति भाव स एव शरवर श्रेष्ठबाण तेन। अभिधत्ते इति अभिध । 'आतश्चोपसर्गे' इत्यनेन क प्रत्यय । कित्वात् आतो लोप । स्वान्त करणरूपश्रेष्ठबाणेन। **अभ्युपहितीकृतश्चेत्** स्थापितश्चेत्। धा धातो र्निष्ठापेक्षया 'दधातेर्हि' इत्यनेन हि । ततो निष्ठा क्त कृभ्वस्तियोगे च्वि प्रत्यय । अर्थात् धनुषि सयोजितश्चेत् तर्हि **परपदशरव्याशुकलने** परस्य परमात्मन पद स्थान परपद तदेव शरव्य

लक्ष्य तस्य आशुकलने शाघ्रसम्पादने **हेतु** कारण **स्यात्** । 'लक्ष लक्ष्य शरव्य च' इत्यमर ।

प्रभो रासलीलाया श्रवणमननचिन्तनादिभि स्मरणेन स्मरस्योत्कटमोह दूरीकृत्य चित्तशुद्धिद्वारा परपद मोक्ष करकलितमेवस्यादिति भाव । शिखरिणी वृत्तम् ॥२७॥

**इत्थ मनोरथपथातिगसौख्यलुब्धा**
**लब्धाधयश्चिरमपारकृपारसेन ॥**
**श्रीशेन शान्तमनसो विहिता हिताशा**
**सम्पूर्य गोपवनिता जनितानुरागा ॥२८॥**

**अन्वय**—मनोरथपथातिगसौख्यलुब्धा चिर लब्धाधय जनितानुरागा गोपवनिता अपारकृपारसेन श्रीशेन इत्थ हिताशा सम्पूर्य शान्तमनस विहिता ॥

**व्याख्या**—**इत्थमिति** ॥ **मनोरथपथातिगसौख्यलुब्धा** मनस रथ यान मनोरथ पथि मार्गं अतिगच्छतीति पथातिग तरस्विस्यन्दन । 'अन्तात्यन्ताध्वदूरपारसर्वान तेषु ड' इत्यनेन गमेर्ड प्रत्यय । मनोरथयाने सुखप्राप्त्यर्थम भिकाक्षावत्य । **चिर** बहुकालात् । **लब्धाधय** लब्ध प्राप्त आधिर्मानसीव्यथा याभिस्ता । कामजन्यमनोव्यथापीडिता । **जनितानुरागा** जनिता उद्भवा अनुरागा प्रेमाण यासु ता । प्रेमबाहुल्यात्व्यापादितमनस । प्रेमभक्तिप्रकर्षा इत्यर्थ । **गोपवनिता** गोप्य । **अपारकृपारसेन** न पारम् अन्त कृपारसस्य यस्य स तेन । अनन्तकरुणेन **श्रीशेन** श्रीकृष्णेन । **इत्थ हिताशा** मनोभिलाषम् इष्टवाञ्छा **सम्पूर्य** पूरयित्वा **शान्तमनस** स्वस्थचित्ता सन्तुष्टा **विहिता** कृता ॥ वसन्ततिलका वृत्तम् ॥२८॥

**यात्रायामम्बिकाया वृषहृदयदुहा गोदुहा कश्चनाहि-**
**र्नन्द सानन्दमेव प्रमुदितमनसामग्रसिष्टाग्रसीम्नाम् ॥**
**ह्रीकारुण्यक्षमाणामथ विधिगुरुणा त्रातपित्रङ्घ्रिकञ्ज-**
**स्पर्शात्तस्यापि विद्याधरवरपदवी नो दवीयस्यकारि ॥२९॥**

**अन्वय**—अम्बिकाया यात्राया कश्चन अहि ह्रीकारुण्यक्षमाणाम् अग्रसीम्ना प्रमुदितमनसा वृषहृदयदुहा गोदुहा सानन्दम् एव नन्दम् अग्रसिष्ट । अथ विधिगुरुणा त्रातपित्रङ्घ्रिकञ्जस्पर्शात् तस्यापि विद्याधरवरपदवी दवीयसी नो अकारि ॥

**व्याख्या—यात्रायामिति ॥ अम्बिकाया** भवान्या । **यात्राया** व्रज्याया गते । **कश्चनाऽहि** कोपि अजगर । **ह्रीकारुण्यक्षमाणा** ह्रीश्च कारुण्य च क्षमा च ह्रीकारुण्यक्षमा तासाम् । ह्री मदाक्ष विनय इत्यर्थ । विनय करुणा दया एतासामग्रसीम्ना धुरीणानाम् । ... सीमाया अग्रे निवसितानामित्यर्थ । **प्रमुदितमनसा** प्रसन्नचित्तानाम् **वृषहृदयदुहा**—वृषाणा वृषभाणा हृदय मानस तदेव तेषा जातिजन्मादियोग्यताभिज्ञान दुहन्ति जानन्ति ते वृषहृदयदुह तेषाम् । 'शुक्रेऽमूषिके श्रेष्ठे सुकृते वृषभे वृष' इत्यमर । एतादृशा **गोदुहा** गोपालानाम् । सानन्दमेव आनन्देन सहित यथास्यात् तथा । **नन्दम्** एतत्सज्ञ श्रीकृष्णपितरम् **अग्रसिष्ट** अग्रसीत् । **अथ** तदनन्तरम् । **विधिगुरुणा** विधेर्ब्रह्मणो दैवस्यापि गुरुर्जनको दैवपक्षे स्वामी तन श्रीकृष्णेन । **त्रातपित्रङ्घ्रिकञ्ज स्पर्शात्** त्रातो रक्षित पिता नन्दो येन स त्रातपिता श्रीकृष्ण तस्याऽङ्घ्रिकञ्जस्पर्श तस्मात् । **तस्याप्यजगरस्यापि विद्याधरवरपदवी** विद्याधरस्य श्रेष्ठस्थानम् । विद्याधरस्य देह इत्यर्थ । **दवीयसी नो अकारि?** दूर न कृतवान् । सा श्रेष्ठतरा विद्याधर पदवी तेन कि न दत्ता । दत्ता इत्यर्थ । हरेश्चरणस्पर्शात् स सर्पो मुनिशापान्मुक्त सन् निजविद्याधररूप झटिति प्रापेति भाव ॥ काकुध्वनिरलकार स्रग्धरा वृत्तम् ॥२९॥

**सौभाग्याङ्कितशङखचूडसदृश गोपीकरस्पर्शन ।**
**वाञ्छन्त विनिहत्य दुष्टदमनस्त शङखचूड विभु ॥**
**भोगीन्द्रस्य फणासहस्रविलसद्रत्नस्य मूर्त्यै मणि**
**भ्रात्रेऽदादिह तद्विहीनशिरसे प्रीत्यैवतन्मूर्धगम् ॥३०॥**

**अन्वय**—दुष्टदमन विभु सौभाग्याङ्कितशङखचूडसदृश गोपीकरस्पशन वाञ्छन्त त शङखचूड विनिहत्य, भोगीन्द्रस्य फणासहस्रविलसद्रत्नस्य मूर्त्यै, इह तद्विहीनशिरसे भ्रात्रे तन्मूर्धग मणि प्रीत्या एव अदात् ॥

**व्याख्या—सौभाग्यमिति ॥ दुष्टदमन** दुष्टाना दमन । दुष्टान् दमयतीति दुष्टदमन । 'नन्दिग्रहिपचादिभ्यो' इति ल्यु । दुष्टनाशको विभु श्रीकृष्ण । **सौभाग्याङ्कितशङ्खचूडसदृशम्** शोभन भाग्य सुभाग्य तस्य इद सौभाग्यम् इति अण् । सौभाग्येनाङ्कित चिह्नित तत् सौभाग्याङ्कितम् । सौभाग्यसूचकमित्यर्थ । सौभाग्याङ्कित यत् शङ्खस्य चूड कङ्कण तेन सदृशम् तत् । **गोपीकरस्पर्शन** गोपीना करा तेषा स्पर्शनम् अवग्रह करग्रहण तत् । **वाञ्छन्तम्** इच्छन्तम् । **त शङ्खचूडम्** एतत्सज्ञ दैत्य । **विनिहत्य** हत्वा । **भोगीन्द्रस्य** शेषनागस्य **फणासहस्रविलसद्रत्नस्य** फणासहस्रेषु विलसन्ति रत्नानि यस्य स तस्य । फणासु

विलसन्मणे शेषस्य **मूर्त्यै** । इहाऽस्मिन्नवतारसमये **तद्विहीनशिरसे भ्रात्रे** बलरामाय । **तन्मूर्धग** तस्य शङ्खचूडस्यशिरस्थ मणि **प्रीत्यैव अदात्** प्रेम्णा ददौ। यथा शङ्खनिर्मितकङ्कण सन्तत गोपीकरस्पर्श करोति तद्वत्कर्तुमिच्छु, नाम सादृश्यात् । त शङ्खचूड दैत्य हतवानित्यर्थ ।। शार्दूलविक्रीडित वृत्तम ।। ३० ।।

**वामाक्षीर्नवगर्भसम्भवजुष स्वल्पैरहोभिर्मुदा**
**रिष्ट यो गमयन्कुमारमुखतो मिष्ट परावर्तयन् ।।**
**गर्जन्मेघइवाव्रजद्व्रजभुव तस्याप्यरिष्टस्य स-**
**त्सर्वारिष्टनिवारणोप्यमदयत्क्रव्यैररिष्टावलिम् ।।३१।।**

**अन्वय** —य मुदा मेघ इव गर्जन्, नवगर्भसम्भवजुष वामाक्षी स्वल्पै अहोभि अरिष्ट गमयन्, कुमारमुखत मिष्ट परावर्तयन्, व्रजभुवम् अव्रजत् । सत्सर्वारिष्टनिवारणोपि तस्य अरिष्टस्यापि क्रव्यै अरिष्टावलि अमदयत् ।।

**व्याख्या—वामाक्षीरिति** ॥ **योऽ**रिष्टासुरो **मुदा मेघ इव गर्जन्** हर्षेण मेघ इव निनदन् । **नवगर्भसम्भवजुष** नवमुदरस्थ गर्भ नवगर्भ तस्य सम्भव जन्म जुषन्तीति नवगर्भसम्भवजुष ता । इति क्विप् । **वामाक्षी**र्वामे सुन्दरे अक्षिणी यासा ता वामाक्षीस्ता । आपन्नसत्वा स्त्रिय । **स्वल्पैरहोभिर**त्यल्पसमयेन । **अरिष्ट** सूतिकागृह **गमयन्** गन्तु प्रेरयन् 'गर्भागार वासगृहमरिष्टसूतिकागृह'मित्यमर । यो मेघ इव गर्जन् गार्भिणीना गर्भपात करोतिस्मेत्यर्थ । तथा **कुमारमुखतो मिष्ट परावर्तयन्** यो बालाना मुखेभ्यो यद्दत्त स्वाद्वन्न तद्दूरीकरोति स्म, एतादृक् सोऽरिष्टा सुरो गर्जन् **व्रजभुव** गोकुलम् **अव्रजत्** अगच्छत् । तत्र **सत्सर्वारिष्टनिवारणोपि** सर्वेषामरिष्टानाम् अशुभाना निवारयति दूरीकरोतीति सर्वारिष्टनिवारण सत् शोभन सर्वारिष्टनिवारण । सर्वाशुभनाशक श्रीकृष्ण । **तस्य अरिष्टासुरस्य, क्रव्यै** तस्यैव मासखण्डै । **अरिष्टावलिं** काकपङ्क्तिम् । 'काके तु करटारिष्ट बलिपुष्ट सकृत्प्रजा ' इत्यमर । **अमदयत्** मोदयामास । त दैत्य खण्डश कृत्वा तस्यैव मासखण्डैर्वायसान् अतर्पयदित्यर्थ । त मुक्तिमगमयदितिभाव ।।३१।। शार्दूलविक्रीडित वृत्तम् ।।

**यन्नादे मृत्युभीत्या त्रिगुणयतितरामङ्कगुप्यन्त्सुकेशी-**
**सीमन्तान्मौक्तिकालिं बत नयनयुगादस्त्रबिन्दून्स्म मुञ्चन् ।।**
**धैर्याहङ्कारपेशी निखिलसुरगण सोप्यहन्दुर्निदेशी-**
**केशी दैत्योऽवकेशी समजनि कुमते कल्पशाखीव मान्य. ।।३२।।**

**अन्वय** —यन्नादे धैर्याहङ्कारपेशी सुकेशी मान्य निखिलसुरगण सीमन्तात् मौक्तिकालि मुञ्चन्, नयनयुगात् अस्रबिन्दून् मुञ्चन्, बत मृत्युभीत्या अङ्कगुप्यन् त्रिगुणयतितराम् स्म । सोपि अहन्दुर्निदेशी केशीदैत्य कुमते कल्पशाखीव अवकेशी समजनि ॥

**व्याख्या--यन्नादे इति** ॥ **यन्नादे** यस्य केशिदैत्यस्य घोरनिनादे सति । **धैर्याहङ्कारपेशी** धैर्याहङ्कारयो पेशी कोषोभाण्डारइत्यर्थ । **सुकेशी** सुष्ठु केशा कचा यस्य स । इति णिनि । **मान्य** श्रेष्ठ । **निखिलसुरगणो** देवा इत्यर्थ । **सीमन्तात् मौक्तिकालि** सीमन्त केशवेश तस्मात् मौक्तिकानाम् आलि पङ्क्ति ताम् **मुञ्चन्**। शिरसिधृता मौक्तिकमाला स्रवन् स्खलन् वा । तथा **नयनयुगात् अस्रबिन्दून् मुञ्चन्** । रुदन् इत्यर्थ । **बत** इदमाश्चर्यं यत् अमरगणोपि **मृत्युभीत्या** मरणभयाद् **अङ्कगुप्यन् त्रिगुणयतितरा स्म** । 'गुप व्याकुलत्वे'। अङ्कान् शरीरावयवान् गुप्यतीति अङ्कगुप्यन् । अतिशयेन त्रिगुणयतीति त्रिगुणयतितराम् । 'द्विवचनविभज्योपपदेतरबीयसुनौ' इत्यनेन तरप् प्रत्यय तस्य घ सज्ञा तस्य आम् । देवगणोऽतिशयव्याकुलत्वेन शरीरावयवान् त्रिगुणीकृत्य सङ्कोचयति स्म । एतादृक् **सोपि केशी दैत्य अहन्दुर्निदेशी** अहमिति मान्तमव्ययम् अहङ्कारे । अहङ्कारेण दुर्निदेशान् दुष्टाज्ञा करोति इति दुर्निदेशी । अथवा दुर्निदेशोऽस्याऽस्तीति दुर्निदेशी दुष्टाज्ञाकारी इत्यर्थ । सोपि इह प्रभो सम्मुखे । **कुमते**दुर्बुद्धे **कल्पशाखीव** कल्पतरुरिव **अवकेशी समजनि** वध्यो निष्फलो बभूव । 'वन्ध्योऽफलोऽवकेशी च' इत्यमर स दैत्योपि प्रभुणा हत इति भाव ॥ यमकानुप्रासौ । स्रग्धरावृत्तम् ॥ ३२ ॥

**व्योमोङ्गजो बतमयस्य पितैवनॄणा-**
**माङ्पूर्वकोऽथभयकृद्विपरीतनामा ॥**
**विश्वात्मनो गिरिदरीमनयद्वयस्या-**
**नेत सचोदरदरी सहसैव मृत्यो ॥३३॥**

**अन्वय** —मयस्य अङ्गज व्योम । पिता एव आङ्पूर्वक । अथ विपरीतनामा नॄणा भयकृत् । (स व्योम ) विश्वात्मन वयस्यान् गिरिदरीम् अनयत् । स च एत सहसैव मृत्यो उदरदरीम् अनयत् ॥

**व्याख्या--व्योम इति** ॥ **मयस्य** मयासुरस्य **अङ्गज** पुत्रो **व्योमो** व्योमासुर । **पितैव** य तस्य पिता मय **आङ्पूर्वक** 'आमय' एव । 'स्त्री रुग्रुजा चोपताप रोगव्याधिगदामया' इत्यमर । साक्षादुपताप एव । अथ एतादृक् मय । **विपरीतनामा** नाम्ना विपर्यय , विपर्यययुक्तशब्दनामधारी 'यम'। **नॄणा** लोकाना

**भयकृत्** भयदायक मृत्यु । एतादृशो मयस्य 'आमयस्य', 'यमस्य' वा पुत्रो व्योमासुर । **विश्वात्मनो** विश्वस्य जगत आत्मा विश्वात्मा तस्य । जगदाधारस्य प्रभो श्रीकृष्णस्य **वयस्यान्** सुहृदो **गिरिदरी** गिरेर्दरी कन्दरा ताम् । **अनयत्** निनाय । गिरिकन्दरेषु पिहितवानिति भाव । **स च** तदा श्रीकृष्णस्तु । **एत** व्योमासुर **सहसैव** अतर्कितमेव झटिति **मृत्योरुदरदरीमनयत्** मृत्युमुखे अनैषीत् । तम् अहन्नित्यर्थ ॥ वसन्ततिलकावृत्तम् ॥ ३३ ॥

**यदतनुतनो ससर्गेण क्षतायतकोटिना**
**स्थितमशनिना डिण्डीरेणाप्यसौ नमुचिर्हत ॥**
**इति नु चरित स्मृत्वा कस पुराऽसुरजन्मभाक्**
**चरममकृताऽक्रूरोपाय वधाय तदेशयो ॥ ३४ ॥**

**अन्वय**—यत् अतनुतनो ससर्गेण क्षतायतकोटिना अशनिना स्थितम् । असौ नमुचि डिण्डिरेणापि हत नु । इति चरित स्मृत्वा पुराऽसुरजन्मभाक् कस तदा ईशयो वधाय चरमम् अक्रुरोपायम् अकृत ॥

**व्याख्या—यदिति ॥ यत्** यस्मात् कारणात् । **अतनुतनो** न तनुर्लघु । अतनु दीर्घ । अतनुस्तनुर्देहो यस्य स । अतनुतनुर्दीर्घकाय तस्य **ससर्गेण** पुष्टाङ्गराक्षसस्य सङ्गत्या । **क्षतायतकोटिना** क्षता छिन्ना आयता दीर्घा कोटि कोणोऽग्रभागो यस्य स तेन । नातितीक्ष्णेन । **अशनिना** वज्रेण **स्थित** यथास्यात् तथा निष्फलम् इति यावत्, नमुच्योपरि वज्रस्य प्रभावो निष्फल । **पर चाऽसौ नमुचिर्डिण्डीरेणापि हत** केवल समुद्र फेनेनैव स नमुचिर्हत । **नु** इति चित्रम् । "डिण्डीरोऽब्धिकफ फेन" इत्यमर । **इति चरित** पूर्ववृत्तान्त **स्मृत्वा पुरासुरजन्मभाक्** पूर्वस्मादेवदैत्ययोनिरसौ कस **तदा ईशयोवधाय** तौ बलकृष्णौ हन्तु । **चरमम्** अन्तिमम् **अक्रूरोपाय** न क्रूर उपाय उद्योग तम् । सौम्योपायम् **अकृत** चकार । तदेव अर्थान्तरेण अक्रूरस्य श्वफल्कात्मजप्रेषणस्योपाय चकार ॥

पूतनादीन् विविधान् प्रेषितान् दैत्यान् निहतान् दृष्ट्वा कठिनोपाया निष्फला जाता इति ज्ञात्वा अथ स कस तयोर्बलकृष्णयोर्वधाय तौ मथुरामानेतु श्वफल्कात्मजम् अक्रूरमयोजयदितिभाव ॥ दृष्टान्तालङ्कार ॥ हरिणीछन्द ॥३४॥

**राज्ञा कृता कुमतिना बत दुष्कराज्ञा-**
**माज्ञायभारमिव नम्रशिराश्चिराय ॥**

**प्राज्ञानुर्वाणितगुण स बभूव किवा**
**तादृक्क्रियोपरतसज्जनलज्जयैव ॥३५॥**

**अन्वय**—बत ! कुमतिना राज्ञा कृता दुष्कराज्ञा भारमिव आज्ञाय, प्राज्ञानुर्वाणितगुण स चिराय नम्रशिरा बभूव। किवा तादृक्क्रियोपरतसज्जनलज्जया एव ॥

**व्याख्या—राज्ञेति ॥ बत !** इतिखेदे। **कुमतिना राज्ञा** दुर्बुद्धिना राज्ञा कंसेन **कृता** निदेशिता। **दुष्कराज्ञा** दुष्करा कठिना आज्ञा दुष्कराज्ञा ताम्। **भारमिव** गरिष्ठवस्तु शिरसिधृतमिव। **आज्ञाय** राजाज्ञा परिपाल्नायेति मत्वा। ज्ञा धातो ल्यप् ह्रस्वाभावात् न तुक्। **प्राज्ञानुवर्णितगुण** प्राज्ञै सुज्ञैरनुवर्णिता प्रशसिता गुणा यस्य स। विद्वन्मान्य स अक्रूर। **चिराय** बहुकालपर्यन्त **नम्र शिरा बभूव।** अप्रियत्वेन भारभूता राजाज्ञा दधत् सन् किङ्कर्तव्यविमूढ इव नतमुखो बभूवेत्यर्थ। **किवा तादृक्क्रियोपरतसज्जनलज्जया एव** तादृक्क्रियाया तदप्रियकर्मणि उपरतोऽनिच्छयाप्रेरित सज्जन तेनोत्थिता लज्जा तया। अथवा अनिच्छतापि कर्तव्येन दुष्कराज्ञोत्थितलज्जया एव यथा सज्जनो नतमुखोभवति तद्वत् स नम्रशिरा बभूव ॥ वसन्ततिलकावृत्तम्। यमकानुप्रासौ ॥३५॥

**श्रीकृष्णसम्माननगोचरात्पथो व्यभ्रशयन्य शतशोमनोरथा ॥**
**एक कथ त बत सत्पथप्रिय मार्गेण वृष्णिप्रवर नयेद्रथ ॥३६॥**

**अन्वय**—शतशोमनोरथा श्रीकृष्णसम्माननगोचरात् पथ य व्यभ्रशयन्। (तर्हि) एक रथ सत्पथप्रिय त वृष्णिप्रवर (एकेन) मार्गेण कथ नयेत्। बत ॥

**व्याख्या—श्रीकृष्ण इति ॥ शतशोमनोरथा** शतश मनोरथा। अगणिता मनसोभिलाषरूपरथा। 'सख्यैकवचनाच्चवीप्सायाम्' इत्यनेन शस् प्रत्यय। शतानि शतानि इति शतश अगणिता इत्यर्थ। यस्य अगणितमनोरथा **श्रीकृष्णसम्माननगोचरात् पथ** गाव इन्द्रियाणि चरन्ति अस्मिन्निति गोचरा। 'गोचर सचर वहव्रज ' इत्यनेन घान्तोनिपात्यन्ते। श्रीकृष्णस्य सम्माननाय आदराय पूजनाय गोचरा प्रत्यक्षीकृता तस्मात्। पथ मार्गात्। यस्य मनोरथा श्रीकृष्णसम्मानार्थायेन्द्रियाश्रितात् मार्गात्। **यम्** अक्रूर **व्यभ्रशयन्** मार्गभ्रष्टमकुर्वन्। **एकोरथ** तर्हि तस्य एको रथो यस्योपरि स आरूढ। **सत्पथप्रिय** सन्मार्गेण गन्तुमिच्छन्त, सदाचाररतम्। **त वृष्णिप्रवर** वृष्णिकुलोद्भूतमक्रूरम्। **मार्गेण कथ नयेत** एकेनैवमार्गेण कथ नयेत्। बत इति विस्मय ॥ यस्य शतशो मनोरथा

यमक्रूर श्रीकृष्णसम्माननार्थायेन्द्रियविषयीभूतमार्गात् प्रभ्रशयामासु त सत्पथप्रियम् एकोरथो य स आरूढ कथ मार्गेण नयेत् इति उत्प्रेक्षते कवि उत्प्रेक्षाल्कार । इन्द्रवशा छन्द । स्यादिन्द्रवशाततजैरसयुतै ॥३६॥

**कुर्या कथ निखिलगोष्ठबहिश्चरासु**
**कृष्णापसारणविधि प्रकट दिवैव ॥**
**इत्थ विविच्य निजदुष्कृतिनिह्नवेच्छु**
**शङ्के गवा स समजेन तिरोहितोऽभूत् ॥६७॥**

**अन्वय**—दिवैव निखिलगोष्ठबहिश्चरासु कृष्णापसारणविधि प्रकट कथ कुर्याम् । इत्थ विविच्च्य निजदुष्कृतिनिह्नवेच्छु स गवा समजेन तिरोहित अभूत् । शङ्के ॥

**व्याख्या—कुर्यामिति** ॥ **दिवैव निखिलगोष्ठबहिश्चरासु** सतीषु बहि चरन्तीति बहिश्चरा निखिलगोष्ठेभ्यो बहिश्चरा तासु । अस्मिन् दिवासमय एव यदा सकलगावो गोस्थानाद् बहिर्निर्गता तदा । **कृष्णापसारणविधिं** कृष्णस्य अपसारण विधिं दूरीकरणविधान **प्रकट** व्यक्त **कथ कुर्याम्** । इत्थ **विविच्य** मनसिविचार्य । **निजदुष्कृतिनिह्नवेच्छु** निजदुष्कृत्या निह्नव गोपनम् इच्छतीति इच्छु 'विन्दु रिच्छु' इत्यनेन उप्रत्यय । इषे छत्व च निपात्यते । स्वदुराचरणाच्छादनमिच्छु **सोऽक्रर** । **गवा समजेन तिरोहितोऽभूत्** गोवृन्देन सह तिरोभूत्वा गोष्ठमगात् । 'समुदोरज.पशुषु' इत्यनेन अप् प्रत्यय , समज । 'पशूना समजोन्येषा समाजोथ-सधर्मिणामित्यमर.' ॥ इत्यह शङ्के इति उत्प्रेक्षतेकवि ॥ वसन्ततिलकावृत्तम् ॥३७॥

**सत्त्व प्रशस्तमपि धिङमुरभिद्वियुक्त**
**नित्य नमोऽस्तु रजसेपितदङ्घ्रिभाजे ॥**
**इत्थ ब्रुवन्ननुपद विरजा मुकुन्द-**
**पादाब्जरञ्जितरज सुभृश लुलोठ ॥३८॥**

**अन्वय**—सत्त्व प्रशस्तमपि मुरभिद्वियुक्त धिक् । तदङ्घ्रिभाजे रजसे अपि नित्य नम अस्तु । इत्थ ब्रुवन् विरजा मुकुन्दपादाब्ज-रञ्जितरजस्सु अनुपद भृश लुलोठ ॥

**व्याख्या—सत्त्व प्रशस्तमपि** सत्त्वरजस्तमस्सु गुणेषु सत्त्वगुणो नितरा प्रश-सितोऽपि । **मुरभिद्वियुक्त** यदि मुरभिदा मुरारिणा श्रीकृष्णेन वियुक्त रहित

चेत् तर्हि तत् सत्त्व धिक्कर्तु योग्यम् । सत्त्वगुणयुक्तोनरोपि यदि कृष्णभक्ति-हीनश्चेत् तर्हि धिक् कर्तु योग्य । **तदङ्घ्रिभाजे** तस्य अङ्घ्री चरणौ भजतीति तदङ्घ्रि भाक् । इतिण्वि । तस्मै । प्रभुचरणयुजे **रजसे** धूल्यै अपि **नित्य नमोऽस्तु** यद्यपि प्रभुचरणयुक्त रजो धूलिरपि तदपि तस्मै नित्य नमोऽस्तु अथच रजोगुणात्म-काय पुरुषाय परन्तु भगवद्भक्ताय नित्य नमोऽस्तु । तस्मात् प्रभो अहरह पदावलिप्ताय व्रजभूपासवे नित्य नम अस्तु । **इत्थ ब्रुवन्** ध्यायन् । **विरजा** विगत रजोगुणोमोहो यस्मात् स विरजा विगतसदेह स अक्रूर । मुकुन्दपादाब्जरञ्जित-रजस्सु मुकु दस्य पादाब्जाभ्या रञ्जितानि ससक्तानि यानि रजासि तेषु । श्रीकृष्णस्य पादचारेण रञ्जितधूलिषु **अनुपद** पदे पदे **भृशम्** अत्य त **लुलोठ** व्यलुठत् व्रजभुवम् अत्यन्त व्यलुठत् ॥ सत्त्वरजोगुणमध्ये सतोगुणस्य प्रशसा लोकेभवति, पर कविरत्र सत्त्वरजसोर्मध्ये रजोगुण प्रशसति कृष्णससर्गयुक्तत्वादिति भाव ॥ वसन्ततिलका-वृत्तद् ॥ ३८ ॥

**गोविन्ददर्शनमहोत्सवमग्नचेता**
**आनन्दनीरभरनिर्भरघूर्णिताक्ष ॥**
**गोपीसुदिष्टबहिरुज्झितदूनदून**
**दुर्दैवदर्शितदिश स विवेश गोष्ठम् ॥३९॥**

**अन्वय** —स्पष्टम्

**व्याख्या—गोविन्देति ॥ गोविन्ददर्शनमहोत्सवमग्नचेता** गोविन्दस्य दर्शन स एव महोत्सवोऽत्यानन्द तस्मिन् मग्न चेतो यस्य स । 'अत्वसन्तस्यचाऽधातो' इत्यनेन उपधादीर्घ । श्रीकृष्णदर्शनोत्सुक इत्यर्थ । तद्दर्शनस्य । आनन्दादुत्थयन्नीरम् अश्रु तस्य भर पूर तेन निर्भरे अतिशये घूर्णिते प्रचलिते अक्षिणी यस्य स । **आनन्दनीरभरनिर्भरघूर्णिताक्ष** । पुनर्गोपीना सुदिष्ट सौभाग्य तत् गोपीसुदिष्ट तेन बहिरुज्झित निष्कासित प्रक्षिप्त यत् दूनदूनदुर्दैव अतिशयकष्टप्रद दुर्भाग्य तेन दर्शिता दिशा यस्य स । **गोपीसुदिष्टबहिरुज्झितदूनदूनदुर्दैव-दर्शितदिश** । एतादृक् सोऽक्रूरो **गोष्ट विवेश** व्रज प्रविवेश ॥ स्वतस्तु हरि-दर्शनोत्सुकस्तस्य चिन्तनोत्थितानन्दाश्रुणा प्रचलितेक्षण सुभगाना गोपीना दुर्दैवदर्शित-मार्गम् अनुसरन् सोऽक्रूरो व्रज प्रविवेशेति भाव ॥ यमकानुप्रासौ ॥ वसत-तिलकावृत्तम् ॥ ३९ ॥

**सुधामय नन्दनरत्नरम्य सम्राजित निष्कुटगाप्सरोभि ॥**
**भूस्थ गुरु स्वर्गमिवातिपुण्यो नन्दस्य सानन्दमगादगारम् ॥४०॥**

**अन्वय**—सुधामय, नन्दनरत्नरम्य, निष्कुटगाप्सरोभि सम्राजित नन्दस्य स्वर्गमिव भूस्थ सानन्दम् अगारम् अतिपुण्यो गुरु अगात् ॥

**व्याख्या—सुधेति ॥ सुधामयम्** चूर्णनिर्मितत्वात् सुधाप्रचुरम् । 'सुधाले पोऽमृत स्नुही' इत्यमर 'तत्प्रकृतवचने मयट्' इत्यनेन सुधाया प्राचुर्यार्थे मयट् प्रत्यय । **नन्दनरत्नरम्य** नन्दयतीति नन्दन 'नन्दिग्रहिपचादिभ्यो ' इत्यनेन ल्यु तस्मात् अन । त न दन सु दरमित्यर्थ । नन्दनै रत्नै रम्य मनोहर तत् । रत्नजटितेन मनोहरम् । **निष्कुटगाप्सरोभि सम्राजित** निष्कुटे गच्छन्तीति निष्कुटगानि । अपा सरासि तानि अप्सरासि निष्कुटगानि अप्सरासि तानि निष्कुटगाप्सरासि तै । गृहारामजलाशयै सुशोभितम् । 'गृहारामास्तु निष्कुटा' इत्यमर । **नन्दस्य** श्रीकृष्णपितु । **स्वर्गमिव भूस्थ** देवगृहसदृशम् । **सानन्दम्** आनन्देन सहित यथा स्यात् तथा । **अगार** गृहम् **अतिपुण्यो गुरु**र्मान्योऽक्रूरो**गात्** । श्रीकृष्णदर्शन लाभादतिपुण्यवान् इतिभाव ॥ उपजाति वृत्तम् ॥४०॥

> **स्वीकृत्य नन्दबलभद्रसुभद्रपादै-**
> **र्दत्तामनोरथशताधिकसत्क्रियास्ता ॥**
> **पर्यङ्कमेव नहि किन्तु भवाम्बुराशे**
> **स्तर्य्यङ्कमप्ययमसेवत वृष्णिवर्य ॥४१॥**

**अन्वय**—नन्दबलभद्रसुभद्रपादै दत्ता ता मनोरथशताधिक-सत्क्रिया स्वीकृत्य, अय वृष्णिवर्य पयङ्कमेव न हि असेवत किन्तु भावाम्बुराशे तर्य्यङ्कम् अपि ॥

**व्याख्या—स्वीकृत्येति ॥ नन्दबलभद्रसुभद्रपादै** । सुभद्रौ कल्याण करौ पादौ यस्य स सुभद्रपाद प्रभु श्रीकृष्ण । नन्दश्च बलभद्रश्च सुभद्रपादश्च ते । तै । **दत्तास्ता मनोरथशताधिकसत्क्रिया** मनोरथाना मनस्यभिलषिताना शत तस्मादधिका बहव सत्क्रिया सत्काराणा क्रियास्ता स्वीकृत्य अङ्गीकृत्य । **अय वृष्णिवर्यो**ऽक्रूर । **पर्यङ्कमेव नहि**—न केवल पर्यङ्क मञ्चकम् असेवत उपबुभुजे किन्तु **भवाम्बुराशे** भव ससार एव अम्बुराशि समुद्र तस्य । भवसागरस्य **तर्य्यङ्कमपि** तरेर्नाव (तर्या वा) अङ्क स्थानम् असेवत । भवसागरस्य तरणोपायमपि प्राप इत्यर्थ । हरिणा तस्मै न केवल लौकिकमनोरथा दत्ता किन्तु परत्र वैकुण्ठमपि दत्तमिति भाव. ॥ वसन्ततिलका वृत्तम् ॥४१॥

**तेभ्य स पृष्टकुशल परिहृष्टचेता**
**मार्गे मनोरथशतैर्ननु हापित तै ॥**
**भोजेन्द्रदुर्विधिसमीरणतोऽनुवृत्त**
**वृत्त शशास निखिल निजदूत्यगर्भम् ॥४२॥**

**अन्वय** —मार्गे भोजेन्द्रदुर्विधिसमीरणत अनुवृत्त, तै मनोरथ-शतै ननु हापितम्। पृष्टकुशल परिहृष्टचेता स निखिल निज-दूत्यगर्भ वृत्त तेभ्य शशास ॥

**व्याख्या—तेभ्यइति ॥ मार्गे** पथ्यागमनसमये। **भोजेन्द्रदुर्विधिसमीरणतोऽनुवृत्त** भोजेन्द्रस्य कमस्य दुर्विधिर्दुर्विधान कपटप्रबध स एव समीरणो महा वात तस्मात् तसि। कसेन दुष्टहेतुना कृष्णानयनरूप कृत दुर्विधान तस्मात् यदनुवृत्त मनसो भ्रमण, यदुत्पन्न मनोविकार तत्। **तैर्मनोरथशतै** सङ्कल्पविकल्पाध्यासितै शतशोऽसख्यैरभिलषितै **ननु** निश्चयेन **हापित** त्याजित विस्मृतमित्यर्थ। तत **पृष्टकुशल** क्षेमसौस्थ्यादिपृष्ट। **परिहृष्टचेता** सन्तुष्टमना सोऽक्रूर। **निखिल निजदूत्यगर्भ वृत्त** दौत्यकर्मणिनियुक्तेन यद्गर्भ गूढ हेतु त समग्र वृत्त वृत्तान्त। **तेभ्यो** नन्दबलकृष्णेभ्य **शशास** विस्तारेण कथयामास। हापितमिति ओहाक् त्यागे। 'अर्तिन्हीव्लीरी ' इत्यनेन णिजन्तात् पुक् ॥ वसन्ततिलका वृत्तम् ॥४२॥

**विचित्र यत्ताता अपि निदधते दृष्टिमुदरे**
**तदुत्थेनैवात्र प्रतिवचनमूचेऽन्धकविराट् ॥**
**न वत्सैव तस्या बत पतनदोष प्रथमके**
**चिरायास्ता नान्ते ललितमृदुमूर्त्ताविति धिया ॥४३॥**

**अन्वय** —ताता अपि उदरे दृष्टि निदधते। विचित्र यत् तदुत्थे न एव। अत्र अन्धकविराट् ऊचे। हे वत्स ! एव न। बत तस्या पतनदोष प्रथमके चिराय आस्ताम्। अन्ते ललितमृदुमूर्त्तौ न। इति धिया ॥

**व्याख्या—विचित्रमिति ॥ ताता अपि** ये ताता वृद्धास्ते **उदरे** जठरे शरीरपोषणपरा **दृष्टि**मेव निदधते धारयन्ति अर्थात् ये अस्मत् वत्सला वृद्धा ते केवल देहपोषणे एव दृष्टिक्षेप कुर्वन्ति, **विचित्र तदुत्थे नैव** किन्तु आश्चर्यमिद यत् तदुत्थे तेभ्य उत्थे तज्जन्ये अपत्ये अस्मत् सदृशि न एव, अस्मदुपरि दृष्टिक्षेप न कुर्वन्ति। अर्थात् उदरपोषणमङ्गीकृत्य दुष्टकसेनादिष्ट कार्य कर्तु प्रवृत्ता भवन्तोऽ

स्मत्परामर्शोपि न कृतवन्त इति भाव । **अत्र** श्रीकृष्णस्य एतद्विधाने वचने । **अन्धकविराट्** 'राजृ दीप्तौ' इत्यस्मात् विराजते शोभते इति विराट् । इति सत्सूद्विषद्रुहदुह इत्यादिना क्विप् । अन्धकाना यदूना विराट् श्रेष्ठ यदुश्रेष्ठोऽक्रूर इत्यर्थ । अथ च अन्धाना दृष्टिहीनाना कविराट् अथवा अन्ध इव कविराट्, वाक्पटु उक्तिकुशल, यत सामाद्युक्तिभि• कृष्णाय मथुरा नेतुमागतोऽक्रूर । प्राय अन्धो धूर्त एव भवति इत्यपि भाव । **प्रतिवचनमूचे** प्रत्युत्तर ददौ । **हे वत्स** श्रीकृष्ण ! **एव न** । 'वयम् उदरपोषणपरत्वेनैव दृष्टिक्षेप कुर्म' इति यत् त्व वदसि तन्नैव । **बत** ! अनुकम्पाया, वय कि कुर्म, वयमसमथा इति भाव । किन्तु **तस्या** दृष्टे **पतनदोष** पतनस्य विक्षेपणस्य दोषो विकारो न्यूनता वा । **प्रथमके** पूर्वनिदर्शिते अर्थात् उदरे **चिराय आस्ता** तिष्ठतु–अर्थात् यत्र दृष्टि तत्र तस्या पतन भवति किन्तु तस्या दोषयुक्त पतन न श्लाघ्य तदपि यदि सा उदरभरणानुसीमिता भवति चेत् तर्हि भवतु तत्र निर्दोषा चिराय । पर च यद्दुष्टानुसरणमवलम्ब्य भवादृशि ममतास्पदीभूता दृश त्यज्यतेऽस्माभि तर्हि तदेव दृष्टिदोष किन्तु एव विकारास्पदी दृष्टिरपि **अन्ते ललितमृदुमूर्तौ न आस्ताम्** अन्ते तदुत्थे अर्थात् अपत्ये भवादृशि सुकुमारशरीरे तद्दृष्टि दोषो न भवतु **इति धिया** इति विचारेणैव वय वर्तामहे ।

दुष्टाना भृत्यत्वमङ्गीकृत्य सुष्ठुदुष्टुकार्य कर्तु प्रवृत्ताना गुरुजनानाम् उदरभरणा एव दृष्टि । तामिवानुसरन्त भवादृश एव इति वैचित्र्यम् । इत्येवमाक्षिप्तोऽक्रर उवाच हे वत्स श्रीकृष्ण । एव न । यदि उदरभरणा दृष्टिरेवात्र दुष्टाना भृत्यत्वमगीकरणे भवति चेत् तर्हि भवतु सा तत्र चिराय, परञ्च सा विकृता उदरपोषणा दृष्टिर्भवादृशाना सुकुमाराणा विघातिनी न भवतु इत्यैव बुध्या वय वर्तामहे इति भाव ॥ शिखरिणी वृत्तम् ॥ अपह्नुतिरलङ्कार ॥४३॥

**दुर्भर परमिहोदर दर तन्मुधैव दृगध करोति यत् ॥**
**इष्टदर्शनसुखे स्वतन्त्रता तद्गता क्षिपति यत्पदस्थितम् ॥४४॥**

**अन्वय**—तत् उदर दर इह पर दुर्भरम् । यत् मुधैव दृगध करोति । यत् पदस्थितम् इष्टदर्शनसुखे तद्गता स्वतन्त्रता क्षिपति ॥

**व्याख्या—दुर्भर मिति** ॥ पुनरपि उदरस्य दृष्टिसम्बन्ध दर्शयन्नाह । **तत्** तस्मात् हे कृष्ण । **उदर दर** श्वभ्रम् अथ च भयम् 'दरो स्त्रिया भये श्वभ्रे' इत्यमर• । **इह** अस्मिन् लोके **परम्** अत्यन्त **दुर्भर** दु खेन भर्तु योग्यम् । इह उदरपोषणमतिकठिन भयावहमपि । **यत्** उदर **मुधा एव** व्यर्थमेव **दृगध** दृग् दृश दृष्टि अध **करोति** नीचत्व नयति । अर्थात् असौ जठर उदरभरणार्थ जन

व्यर्थमेव अधोदृष्टिकरणाय प्रेरयति। अनादरयतीत्यर्थ । अथ च यत् दुर्भरमुदर दग्ध करोति तत् मुधा एव असत्यमेव अर्थात् उदरभरण दृष्टिपात च अनयोर्द्वयो र्मध्ये न कोपि सम्बन्ध । कथ ? **यत्** उदर **पदस्थित** चरणवर्ति, पक्षे अधिकारस्थितम् अर्थात् उदरपीडितोजन किङ्करो वा राजा वा भवतु। **इष्टदर्शनसुखे** इष्टस्य इच्छितस्य अर्थात् भोजनस्य दर्शन ईक्षण प्रापणमित्यर्थ । तस्य सुख तस्मिन्। प्राप्तव्यभोजन सुखहेतौ। **तद्गता स्वतन्त्रता** तस्य उदरस्य उदरभरणार्थजनस्येत्यर्थ । गता या स्वतन्त्रता स्वाधीनता ता **क्षिपति** जहाति। अर्थात् उदरभरणार्थ विचरत जनस्य स्वतन्त्रता नश्यति। अत उदरभरणवर्तिनो वय दुष्टकसप्रेरणेनागता नष्टस्वातन्त्र्या एव इति भाव ॥ स्वागतावृत्तम् परिकरालङ्कार ॥४४॥

**त्वामानिनीषुरगुण क्रूरोङ्कस्थौ न वा सहन् ॥**
**सगुण चापमक्रूर मा च मध्यस्थमातनोत् ॥४५॥**

**अन्वय**—त्वाम् आनिनीषु अगुण क्रूर वाम् अङ्कस्थौ न सहन् सगुण चाप मामक्रूर च मध्यस्थम् आतनोत ॥

**व्याख्या—त्वामानिनीषु** आनेतुमिच्छु । नी धातो सन्नन्तात् 'विन्दुरिच्छु' इत्यनेन उ प्रत्यय । त्वा मथुरामानेतुमिच्छु **अगुण** गुणरहित वात्सल्यादि-भावशून्य **क्रूरो** निर्दय कस । **वा** युवा बलकृष्णौ **अङ्कस्थौ** उत्सङ्गस्थितौ अर्थात् शिशुमन्तौ एव **न सहन्** अक्षममाण । सहन्निति 'षह मर्षणे' इत्यस्मात् शत्रन्तम्। यद्यप्यय धातु आत्मनेपदी सहते। तथापि चुरादित्वात् साहयति सहति इति परस्मैपदी। 'स एवाय नाग सहति कलभेभ्य परिभवमितिवत् । अतो युवामक्षममाण कस **सगुण चाप** मौर्वीयुक्त धनु । **मा सगुणामक्रूर च** वात्सल्यादि-गुणयुक्त क्रौर्यरहित शान्त मामक्रूरम् एतन्नामान च। **मध्यस्थमातनोत्**। मध्ये तिष्ठतीति मध्यस्थ तम्। 'सुपिस्थ' इत्यनेन क प्रत्यय । धनुर्मध्यस्थमातनोत् विहितवान् अर्थात् धनुर्यज्ञमिषेण त्वा मथुरामानेतु विहितवान्। पक्षे मा च मध्यस्थ-मातनोत् अर्थात् कस भवद्वेषी क्रूरोपि निज क्रौर्य मम द्वारा निमन्त्रणेनाच्छादयन् कपटेन स्वस्य गुणैकलुब्धता प्रदर्शयन् त्वामानेतुमुदरसङ्गत मा नियुक्तवान् इत्यर्थ ॥ अनुष्टुप् छन्द ॥४५॥

**अभाणीत्थ तदा वाणी माणिक्यैरिव घट्टिता ॥**
**सुवर्णकीर्णाऽक्रूरेण भुक्त्वा ताम्बूलसेविना ॥४६॥**

**अन्वय**—तदा भुक्त्वा ताम्बूलसेविना अक्रूरेण माणिक्यै घट्टिता इव सुवर्णकीर्णा वाणी अभाणि ॥

**व्याख्या—अभाणीति ॥ तदा** क्षेमसौस्थ्यादिकुशलप्रश्नानन्तरम् । **भुक्त्वा** भोजनं कृत्वा **ताम्बूलसेविना** मुखशुध्यर्थं ताम्बूलचर्वणं कृतवताऽक्रूरेण **माणिक्यै** एतत् सञ्ज्ञैरारक्तनगै **घट्टिता इव** जटितेव । **सुवर्णकीर्णा** सुष्ठु वर्णैं शोभनाक्षरै कीर्णा विस्तृता व्याप्ता वा अथच सुवर्णेन हाटकेन व्याप्ता **वाणी** गी **अभाणि** उक्ता । माणिक्यैर्घट्टिता इव इत्यनेन वचन समये ताम्बूलरागदर्शनमुत्प्रेक्षते कवि ॥ अनुष्टुब्छन्द ॥ ४६ ॥

**पुर्यां शरासनमखोत्सवदर्शनाय**
**क्षत्राज्ञया व्रजपते पटहोऽथ तत्र ॥**
**आघोषित प्रतिगृहं नवदुर्विलाप**
**स्वाध्यायदैशिक इवाभवदङ्गनानाम् ॥४७॥**

**अन्वय**—क्षत्राज्ञया पुर्यां शरासनमखोत्सवदर्शनाय व्रजपते पटह आघोषित अथ तत्र प्रतिगृहं अङ्गनाना नवदुर्विलाप स्वाध्यायदैशिक इव अभवत ॥

**व्याख्या—पुर्यामिति ॥ क्षत्राज्ञया** क्षतात् त्रायते इति क्षत्र । क्षत्रस्य भूपते कंसस्य आज्ञया अनुशासनेन । **पुर्यां** मधुपुर्याम् । **शरासनमखोत्सव दर्शनाय** शरस्य आसन धनु तस्य मखो यज्ञ तस्य उत्सव तस्य दर्शन तस्मै । धनुर्यज्ञद्रष्टुम् । **व्रजपतेर्नन्दस्य पटह आघोषित** । ढक्का उच्चैराघोषिता । **अथ** किन्तु स आघोषितपटह । **तत्र** व्रजे **प्रतिगृहम् अङ्गनाना** व्रजवधूना **नवदुर्विलापोऽभवत्** नवीन रोदनस्य कारणमभवत् । कथमभवत् ? **स्वध्यायदैशिक इव** स्वस्मिन् आत्मनि पुन पुन आध्यायतीति स्वाध्याय 'दिश अतिसर्जने' अतिसर्जन दानम् । स्वाध्याय दिशति दान करोति तस्मात् ठञ् स्वाध्यायदैशिक अध्यापक इव अभवत् । यथा स्वाध्यायदैशिकेन गुरुणा पठनार्थं प्रेरिता बालका अरुच्या तदादेश नाद्रियन्ते एवमेव स पुन पुनराघोषित पटहो व्रजाङ्गनाना **नवदुर्विलापो** नवीनस्य रोदनस्य कारणमभवदित्यर्थ । पक्षे स आघोषित पटहो डिंडिमध्वनिरङ्गनाना व्रजस्त्रीणा **प्रतिगृह** गृहगृह प्रति **नवदुर्विलापस्वाध्यायदैशिक इव** खर्परे शरि वा विसर्गलोपो वक्तव्य इत्यनेन विसर्गलोप । नवोढापिपर्यन्तमननुभूतो यो दुर्विलाप दु खरोदन स एव स्वाध्याय विहितनित्यकर्म तस्य दैशिक उपदेष्टाऽभवत् बभूव । अत पर युष्माभिर्गोपस्त्रीभिश्चिराय कृष्णसहवासाभावकारणात्प्रत्यह विहितकर्मवदस्य दुर्विलाप स्यापि कारणमावश्यक भवतीति भाव. । वसन्ततिलकावृत्तम् ॥४७॥

**दोषान्धकागमनहेतुविदो विदोषा-**
**योषा व्रजस्थिति भृतो निभृतोत्थितानाम् ।।**
**गन्तु बर्हिनियमनाय नु हृद्यसूना**
**चिन्तामुपर्यतिभराम्बिभराम्बभूवु ।।४८।।**

**अन्वय**—दोषान्धकागमनहेतुविद व्रजस्थितिभृत विदोषा योषा बहिर्गन्तु निभृतोत्थितानाम् असूना नियमनाय नु हृदि उपरि अतिभरा चिन्ता बिभरा बभूवु ।।

**व्याख्या**— **दोषान्धकस्य** दुष्टस्याक्रूरस्य आगमनहेतु विदन्ति ता **दोषान्धकागमनहेतुविद** । इति क्विप् । दोषान्वकक्कुलविशिष्टयादवस्य इत्यर्थ । अक्रूरस्यागमनकारण जानाना । **व्रजस्थितिभृत** व्रजस्य स्थिति मर्यादा बिभ्रति ता । व्रजस्थितिभृत इति क्विप् । व्रजमर्यादाधारिण्य । 'मर्यादा धारणा स्थिति' इत्यमर । विदोषा सुज्ञा । योषा व्रजस्त्रीवर्ग । **बहिर्गन्तु निभृतोत्थिताना** निभृतेन विनीतेन इव गुप्तरूपेण वा उत्थितानाम् **असूना नियमनाय** निरोधाय । समस्त व्रजस्य प्राण इव श्रीकृष्णवियोगात् गुप्तरीत्या शरीरात् बहिर्गन्तु उद्युक्ताना प्राणाना निरोधायेत्यर्थ । **हृदि उपरि** । **अतिभराम्** अतिभारवती **चिंता बिभरा** बभूवु महतीं चिता दध्रु । नु इति कि न अस्तीत्यर्थ । बिभराम्बभूवु इति 'भीह्रीभृहुवा श्लुवच्च' इत्यनेन लिटि आम् । 'भृञ् धारणपोषणयो' इत्यस्मात् ।। वसन्त तिलकाछन्द ।।४८।।

**मूर्धस्वाहितसम्भृतामृतघटा स्नातोद्गता यामुना-**
**द्वार किञ्च तदूर्मित परिचिताहम्पूविकासम्भ्रमा ।**
**कर्तु केशवमात्मसादतितरामुद्योगिन गान्दिनी-**
**सूनु विघ्नयितु ययु कृतधियो गोप्यो न ता सिद्धय ।।४९।।**

**अन्वय**—यामुनात् किञ्च तदूर्मित वार स्नातोद्गता मूर्धसु आहितसम्भृतामृतघटा परिचिताहम्पूविकासम्भ्रमा गोप्य केशव अतितराम् आत्मसात् कर्तु, उद्योगिन गान्दिनीसूनु विघ्नयितु कृत-धिय ययु : ता सिद्धय न ।।

**व्याख्या**—**मूर्धस्विति ।। यामुनात्** यमुनाया इद यामुनम् । 'तस्येदम्' इत्यनेन अण् । तस्मात् यामुनात् यमुनातटादित्यर्थ । **किञ्च** न केवल तटात् अपितु । **तदूर्मित** तस्या ऊर्मिर्लहरि तस्मात् तसि । यमुनायास्तरङ्गोत्थितात् । **वारो**

जलात् । **स्नातोद्गता** पूर्वं स्नाता पश्चादुद्गता स्नातोद्गता 'पूर्वकालैकसर्वजरत्पुराणनवकेवला समानाधिकरणेन' इत्यनेन पूर्वकालोऽपरकालेन समस्यते । **मूर्धसु** शिरस्सु । **आहितसम्भृतामृतघटा** आहित स्थापित सम्भृत पूर्णम् अमृतघट जलकुम्भ याभि ता । जलपूर्णकुम्भधारिण्य । **परिचिताहम्पूर्विकासम्भ्रमा** परिचित ज्ञातम् अह पूर्वमह पूर्वं यस्मिन् कर्मणि यासा ता परिचिताहम्पूर्विका ता एव सम्भ्रमा वेगवत्य । अहमग्रे, अहमग्रे इति परिचिताहमहमिकया स्पर्धया निजकर्मसु त्वरयान्विता इत्यर्थ । **गोप्य केशव** श्रीकृष्णम् **अतितराम् आत्मसात् कर्तु** अतिशयेन आत्मनि अधीन कर्तु । साकल्येन आत्मनीन कर्तुमित्यर्थ 'तदधीनवचने' इति सूत्रेण कृभ्वस्ति योगे साति स्यात् । तथा **उद्योगिन गान्दिनीसूनु विघ्नयितु** कृष्णापसरणविधानाद् अक्रूर परावर्तयितु **कृतधिय** कृतसकल्पा **ययुर्जग्मु** । **न ता सिद्धय** ? ता गोप्य किं सिद्धयो न इति शङ्कते कवि ॥ काकूत्प्रेक्षा ॥ शार्दूलविक्रीडितवृत्तम् ॥४९॥

**ता सङ्घशोऽथ मिलितागिलिता हठेन**
**स्मारेण षण्ढतिलितात्मकुलादिलज्जा**
**सज्जा निवारयितुमीश्वरमिन्दिराया**
**स्वच्छन्दक दलदमन्दगिरो जजल्पु** ॥५०॥

**अन्वय** —अथ ता सङ्घश मिलिता, हठेन गिलिता, स्मारेण षण्ढतिलितात्मकुलादिलज्जा, इन्दिराया ईश्वर निवारयितु सज्जा, स्वच्छन्दक दलदमन्दगिर जजल्पु ॥

**व्याख्या—ता इति ॥ अथ ता** गोप्य **सङ्घश** समूहेन । बह्वल्पार्थात् शस् । **मिलिता** एकत्रीभूता । **हठेन गिलिता** हठ कृता । **स्मारेण षण्ढतिलितात्मकुलादिलज्जा** । षण्ढो नि सत्व त्यक्तुयोग्यम् । तिल स्नेहधान्यविशेष क्षुद्र धान्यमित्यर्थ । षण्ढतिलो निसत्व त्यक्तु योग्य । षण्ढतिलस्य भाव षण्ढतिलिता भावे तल् स्त्रियाम् षण्ढतिलिता अनादरणीयकृता आत्मकुलादिलज्जा यै ता । स्मारेण कन्दर्पेण षण्ढतिलितात्मकुलादिलज्जा कामविकारवशादात्मन कुलस्य च मान सम्मानादिरक्षाभावरहितत्वात् निर्लज्जीभूता इत्यर्थ । **इन्दिराया ईश्वर** लक्ष्मीपतिं श्रीकृष्णम् मथुरागमनात् **निवारयितु सज्जा** । **स्वच्छन्दक** यथास्यात तथा स्वच्छन्देन लज्जाभीतिरहितमुक्तकण्ठेन । **दलदमन्दगिरो जजल्पु** । 'दल विशरणे' इत्यस्मात् दलतीति दलन् । स्त्रियाम् दलन्ती । दलन्ती च अमन्दाच गीर्या । ता दलदमन्दगिर ता । स्फुटमुदात्तवाच ऊचु । स्फुटव्यक्तशब्दै रूचु । किमूचुस्तदग्रिमश्लोके कथयति कवि ॥ वसन्ततिलकावृत्तम् ॥५०॥

**भो धात किमिद विचित्रमिह यज्जन्मार्पित नो व्रजे**
**स्त्रीत्व तत्र च नन्दनन्दनपदासक्तिस्तथान्यादृशी ।।**
**किञ्चाऽय विरहोऽधुनाथ च बलादायुर्वृथा पोषित**
**किम्वाच्य न पितामहेदृगुचित केशै शिर कर्तनम् ।।५१।।**

**अन्वय** —भो धात ! इद कि विचित्र यत् इह व्रजे न जन्म स्त्रीत्वमर्पितम् । तत्र च तथा अन्यादृशी नन्दनन्दनपदासक्ति किञ्च अधुना अय विरह, अथ च आयु बलात् वृथा पोषितम् । किम्वाच्यम् ? हे पितामह ! शिर कर्तन ईदृक् केशै उचित न ।।

व्याख्या—**भो इति ।। भो धात** हे परमेष्ठिन् । **इद किं विचित्र** किमघटित मद्भुत वा इद त्वया कृत **यदिहास्मिन् व्रजे** वृन्दावने **नो**ऽस्माक **जन्म** तथात्वे **स्त्रीत्वमर्पितम्,** त्वया वय स्त्रिय सृष्टा । **तत्र च** स्त्रीत्वेपि । **तथाऽन्यादृशी नन्दनन्दनपदासक्ति** एतत् प्रकारेण स्त्रीत्व गतेपि श्रीकृष्णचरणकमले वयम् एवम् आसक्ता यदोपमैव नास्ति । एतत्सर्वमस्माभिरनिच्छया सोढम् । **किञ्च** न केवल मिदमपितु । **अधुनाऽय विरह,** अक्रूरागमनेन कृष्णनयनरूपोऽय प्रभोर्विरहोत्पादित । **अथ च आयुर्बलाद् वृथा पोषितम्**-तस्मात् जीवन वृथा सवर्धित मस्माभि । **किम्वाच्यम्** वक्तुमसमर्था वयम् । **हे पितामह ! शिर कर्तनम्**-अस्माक वधोपाय **ईदृक् केशैरुचित** योग्य **न** । एव प्रकारेण कृतोघातस्तव न ह्येव शोभते इत्यर्थ ।। आक्षेपालङ्कार । वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये निषेधाभास आक्षेप ।। शार्दूलविक्रीडित वृत्तम् ।। ५१ ।।

**यासामासाद्य दोहस्थलमपि च महत्पात्रमापूर्य मात्रा-**
**धिक्षिप्तो योपि नित्य स कपटरुदित द्राक्कणेहत्य दुग्धम्**
**यावत्त्वद्याप्यपास्त्व स कथमिह दृढाभक्तिरेता स्वधेनू**
**पीनोध्नीर्हा जिहासन्नघृण इव विभो याहि याहीति यासि ।।५२।।**

**अन्वय** —यासा दोहस्थलम् आसाद्य, अपि च महत्पात्रम् आपूर्य यो मात्राऽधिक्षिप्तोपि सकपटरुदित द्राक् दुग्ध कणेहत्य त्व तु अद्यापि यावत् अपा । हे विभो ! इह दृढाभक्ति स त्वम् अघृण इव एता पीनोध्नी स्वधेनू जिहासन् कथ याहि याहि इति यासि । हा !

**व्याख्या —यासामिति॥ यासा** धेनूना **दोहस्थलम् आसाद्य** प्राप्य, **अपि च महत्पात्रम् आपूय** महद्दुग्धपात्रम् आकण्ठ पूरयित्वा, **यो मात्रा** यशोदया **अधिक्षिप्तोपि** क्रोधेन भर्त्सितोपि, **सकपटरुदित द्राक् दुग्ध कणे हत्य** सकपटरुदित यथा स्यात् तथा मिथ्या रोदन प्रसार्य प्रतिदिन झटित्याकण्ठ पिबति। कणे हत्य इति 'कणे मनसी श्रद्धाप्रतीघाते' इत्यनेन कणे शब्द सप्तमीप्रतिरूपको निपात। अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्त पिबतीत्यर्थ। **त्वन्त्वद्यापि यावत् अपा** तासा दुग्धेन त्वमधुनापि अन्त्यदिनपर्यन्तम् अपा अपिब। पीतवानसि इत्यर्थ। हे विभो! **इह दृढाभक्ति स त्व**—दृढा भक्तिर्यस्य स। तस्मात् हे विभो यतस्तवभक्तिरासु गोपु दृढा आसीत् अतस्त्वम् **अघृण इव** निर्दय इव **एता पीनोध्नीर्वटोध्नी स्वधेनूर्जिहासन्** त्यक्तुमिच्छन् **याहि याहीति कथ यासि**— मथुरा कथ गच्छसि? गच्छसि किम् तर्हि गच्छ। हा इति खेदे॥ व्यङ्ग्यध्वनिरलङ्कार। पीनोध्नी पीनानि स्थलानि पुष्टानि वा ऊधासि यासा ता पीनोध्न्य ता पीनोध्नी। 'ऊधसोऽनङ्' इत्यनेन अनङ्। 'बहुव्रीहेरूधसो ङीष्' इत्यनेन स्त्रियाम् ङीप्। जिहासन् 'ओहाक् त्यागे' सन्नन्तात् हातुम इच्छति जिहासति तस्मात् शतृप्रत्यय। याहि याहीति यासि इति 'क्रियासमभिहारे लोड्लोटोहिस्वौवाचतध्वमो' इत्यनेन पौन पुन्ये भृशार्थे च धातोर्लोट् स्यात्। तथा 'क्रियासमभिहारे द्वेवाच्ये' इति द्विरुक्ति। 'दृढाभक्ति' इत्यत्र स्त्रीत्वविवक्षाया 'स्त्रिया पुवद्भाषित पुस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी प्रियादिषु' इत्यनेन प्रियादि पर्युदासात् पुवद्भाव प्रतिषेध.॥ स्रग्धरावृत्तम्॥५२॥

**गोष्ठश्वै सह पश्य धेन्वनडुहानाक्रोशबद्धादरा—**
**न्नैवाक्षिभ्रुवनर्तन विदधते नक्त दिव सारिका॥**
**ताताक्रूर मुकुन्दमर्पय सखे चेलाञ्चलै प्रार्थ्यते**
**सर्वासा पुरुषायुष भवतु ते न द्व्यायुष त्र्यायुषम्॥५३॥**

**अन्वय**—हे तात अक्रूर! गोष्ठश्वै सह नक्त दिवम आक्रोश-बद्धादरान् धेन्वनडुहान् पश्य, सारिका पश्य, अक्षिभ्रुवनर्तन नैव विदधते। हे तात! मुकुन्दम् अर्पय, चेलाञ्चलै प्रार्थ्यते। न (केवल) द्व्यायुष त्र्यायुष ते भवतु (अपि तु) सर्वासा पुरुषायुष ते भवतु॥

**व्याख्या—गोष्ठश्वैरिति॥ हे तात अक्रूर! गोष्ठश्वै** गोष्ठे श्वान गोष्ठश्वा तै। 'अचतुरविचतुर' इत्यनेन अजन्तो निपात्यते। गोस्थानस्थित-श्वभि. सह। **नक्तन्दिव** नक्त च दिवाच नक्तन्दिवम्। अजन्तो निपात्यत। अहो-

रात्रम्। **आक्रोशवद्धादरान्** आक्रोशे सततविलापे बद्ध आदर आग्रहो यै ते। तान्। सततविलापेन गतावधानत्वादाक्रोशत। **धेन्वनडुहान्** धेनवश्च अनड्वाहश्च धेन्वनडुहा तान्। अजन्तो निपात्यते। गोवृषभान् पशून् पश्य। तथा **सारिका** पक्षिणी पश्य। **अक्षिभ्रुवनर्तन नैव विदधते**-अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। प्राण्यगत्वात् एकवत्। तस्य नर्तन सञ्चलम् अक्षिभ्रुवनर्तन तत्। अजन्तो निपात्यते। पञ्जरे स्थिता सारिका अपि श्रीकृष्णवियोगादक्षिनर्तनमपि न कुर्वन्ति। तस्मात् **हे तात** अक्रूर! **मुकुन्द** श्रीकृष्ण**मर्पय** देहि। **चेलाञ्चलै प्राथ्यते** 'श्रीकृष्ण देहि' इति अञ्चलप्रसारणेन त्वा प्रार्थयामहे। **न द्व्यायुष त्र्यायुष ते भवतु** अपि तु **सर्वासा पुरुषायुष ते भवतु**। आयुर्जीवितकाल। पुरुषस्य आयु पुरुषायुषम्। अजन्तो निपात्यते। शत वर्षाणि इत्यर्थ। तस्मात् न केवल द्वित्रिशतमायुस्ते भवतु किं तु अस्माक सर्वासा व्रजवधूना पुरुषायुषम् आयुर्युक्त त्व भूया। अथात् अगणितकालायुस्ते भवतु इति वयम् आशास्महे इत्यर्थ॥

अस्मिन् पद्ये गोष्ठश्वै, धेन्वनडुहान् अक्षिभ्रुवम्, नक्तन्दिवम्, पुरुषायुषम्, द्व्यायुषम्, त्र्यायुषम्, एते 'अचतुरविचतुरसुचतुर स्त्रीपुसधेन्वनडुहर्क्साम वाङ्मनसाक्षिभ्रुवदारगवो ' इत्यादि सूत्रेण समासान्ते अजन्तानि अत्र कविना साकल्येन सूत्रोदाहरणानि ग्रथितानीति चित्रम्॥ शार्दूलविक्रीडत वृत्तम्॥५३॥

**दध्यङ्देहास्थिशम्बादितरदिह परप्राणलोपक्रियायै**
**त्रासादिन्द्रो मुकुन्दोत्कटविरहशताघाततोऽप्यक्षतानि॥**
**तीक्ष्ण वज्र विधित्सुर्यदि हृदयगतास्थीनि याचेत तस्मै**
**सन्दायामूनि मोदेमहि न हि शुभदा या मुधा स्वात्महत्या॥५४॥**

**अन्वय**—त्रासात् परप्राणलोपक्रियायै दध्यङ्देहास्थिशम्बात् इतरत् इह तीक्ष्ण वज्र विधित्सु इन्द्र मुकुन्दोत्कटविरहशताघातत अपि अक्षतानि हृदयगतास्थीनि यदि याचेत, अमूनि सन्दाय मोदेमहि। या मुधा स्वात्महत्या (सा) शुभदा न हि॥

**व्याख्या**—दध्यङिति॥ **त्रासात्** दैत्यादिभ्यो भयात्। **परप्राणलोपक्रियायै** परेषा शत्रूणा प्राणा परप्राणा तेषा लोपक्रिया विनाश तस्यै। शत्रुवधाय। **दध्यङ्देहास्थिशम्बात्** दधीच दधीचिऋषेर्देहो दध्यङ्देह तस्य अस्थ्नो शम्बो वज्र तस्मात्। 'शम्बोदम्भोलिरशनिर्द्वयो' इत्यमर। **इतरत्** अन्यत् भिन्नमित्यर्थ। **इह तीक्ष्ण** निशित **वज्रम्**। **विधित्सुर्**विधातुमिच्छु। धा धातो, 'दा धा घ्वदाप्' इत्यनेन घु सज्ञा, तत, 'सनि मीमाघुरभलभशकपतपदामच

इस्' इत्यनेन इस् तत सन्नन्तात् उ प्रत्यय । **इन्द्र** । **मुकुन्दोत्कटविरह-शताघातत** शतम् आघाता शताघाता । मुकुन्दस्य उत्कटविरहस्य शताघाता तस्मात् तसि । श्रीकृष्णस्य आत्यतिकविरहस्यामितप्रहारात् । **अक्षतानि** अविच्छिन्नानि अभङ्गानि अस्माक **हृदयगतास्थीनि** हृदये गतानि यानि अस्थीनि तानि । **यदि याचेत** । तर्हि **अमूनि** अस्थीनि **सन्दाय** दत्वा । दा धातो ल्यप् । **मोदेमहि** तुष्येम हर्षेण दद्याम इत्यर्थ । किं कारणम् ? **या मुधा** वृथा, **स्वात्महत्या** निजप्राणघात सा **शुभदा न हि**, निरर्थक आत्मघात श्रेयस्करो न भवतीति भावात् ।

प्रभुविरहात् स्वप्राणोत्सर्जनतत्परा गोप्यो दैत्यवधाय अन्यत् तीक्ष्ण वज्र विचित्सुम् इन्द्र स्वहृत्पास्थिकाठिन्य दर्शयन्त्य स्वप्राणान् हर्तु प्रलोभयतीति भाव ॥ अर्थान्तरन्यास सामान्येन विशेषसमर्थनरूप ॥ स्रग्धरा वृत्तम् ॥५४॥

**इत्यादिभाषणपरा न परान्पुरस्तात्–**
**वृद्धान्पतीनपि निरोद्धुमुपागतान्स्वान् ॥**
**गोप्यो विदु परममेवमिमा विलाप**
**गोविन्दमाधवमुकुन्दजनार्दनेति ॥५५॥**

**अन्वय** —–इत्यादिभाषणपरा पुरस्तात् निरोद्धमुपागतान् परान् वृद्धान् स्वान् पतीनपि गोप्य न विदु । इमा गोविन्दमाधवमुकुन्द-जनार्दनेति परम विलापमेव विदु ॥

**व्याख्या—इत्यादीति** ॥ **इत्यादिभाषणपरा** यथापूर्वं कथितम्, तादृक् भाषमाणा व्रजवध्व । **पुरस्तात्** सम्मुखे । **निरोद्धुमुपागतान्** निवारयितुमागतान् । **परान्** अन्यान् **वृद्धान्** वृद्धपुरुषान्, **स्वान् पतीन् अपि** गोप्यो न विदुर्नाजानन् । किन्तु **इमा** गोप्यो हे **गोविन्द, माधव, मुकुन्द, जनार्दन' इति परम विलापम् एव विदु** । ता गोप्य प्रभोर्नामग्रहणपूर्वकम् अत्यन्त विलाप चक्रु ।

अन्यपुरुषाग्रत एव विलपन्तीर्गोपीर्निवारयितुमागतान् किञ्च निजपतीनपि दुर्लक्ष्य ता गोप्य श्रीकृष्णनामभिरत्यन्त विलाप चक्रुरिति भाव ॥ वसन्ततिलका वृत्तम् ॥४५॥

**योऽय व्रजप्राणहरोऽन्धकाख्य कृष्णानन स्तादृतकश्चिराय**
**एतान्दुरुक्त व्रजसुन्दरीणामाशीर्विधि निस्त्रपवत्स मेने ॥५६॥**

**अन्वय**—य अन्धकाग्र्य अय व्रजप्राणहर हतक चिराय कृष्णानन स्तात्। व्रजसुन्दरीणाम् एता दुरुक्ति स निस्त्रपवत् आशीर्विधि मेने ॥

**व्याख्या—योऽयमिति** ॥ **योऽन्धकाग्र्य** अन्धकाना यदूना अग्र्य श्रेष्ठ । दुरुक्तिपक्षे अन्धकाना दृष्टिहीनानाम् अग्र्य । महान्ध । **अय व्रजप्राणहरो** व्रजस्य प्राणमिव श्रीकृष्ण हरतीति । 'हरतेरनुद्यमनेऽच्' इत्यनेन अच् प्रत्यय । **हतकोऽय** घातुक**श्चिराय** चिरकालपर्यन्तम् । **कृष्णानन स्तात्** कृष्णमुखो भवतु । अय सदैव कृष्णमुख श्याममुखो भवतु इति भाव । **व्रजसुन्दरीणाम् एता दुरुक्तिम्** अपशब्द गालिदान वा सोऽक्रूरो **निस्त्रपवत्** निर्लज्जवत् **आशीर्विधिम्** आशीर्वचन **मेने** अमन्यत ॥ इन्द्रवज्रावृत्तम् ॥५६॥

**ताभिर्दृढ साञ्जनशोकवार्भि श्यामीकृता जह्नुसुतासपत्नी ॥**
**ईदृग्रवेर्भास्वरशोचिषोऽपि कन्याऽतिधन्या कथमन्यथैषा ॥५७॥**

**अन्वय**—जह्नुसुतासपत्नी ताभि साञ्जनशोकवार्भि दृढ श्यामीकृता अन्यथा भास्वरशोचिषोऽपि रवे अतिधन्या कन्या ईदृक् कथम् ?

**व्याख्या—ताभिरिति** ॥ **जह्नुसुतासपत्नी** जह्नुसुता गङ्गा तस्या सपत्नी । समान. पतिर्यस्या सा सपत्नी । यमुनानदी । **ताभिर्गोपीभि** । **साञ्जनशोकवार्भि** अञ्जनेन नेत्राञ्जनेन सह साञ्जनम् । शोकस्य दु खस्य वारि शोकवारि साञ्जनानि शोकवारि तै । अत्र 'वारि' इति वार्शब्दस्य बहुवचनम् 'आपस्त्री भूम्नि वार्वारि' इत्यमर । कज्जलमिश्रितशोकाश्रुभि । **दृढमतितरम्** । **श्यामीकृता** न श्यामा अ श्यामा अश्यामा श्यामा सपद्यते सा कृता श्यामीकृता । 'अभूत तद्भावे च्वि' । कृष्णीकृता । **अन्यथा** नो चेत् । **भास्वरशोचिष** भास्वराणि कान्तियुक्तानि प्रकाशवन्ति शोचीषि यस्य स भास्वरशोचि तस्य **रवे** सूर्यस्यापि **अतिधन्या** अतिश्लाघ्या । **कन्या** दुहिता **ईदृक्** कृष्णत्व **कथ** गता?

अत्र कविर्यमुनाया कृष्णत्वे हेतुम् उत्प्रेक्षते । यत्रापि यमुना जन्मत एव गौरी प्रखरप्रकाशयुक्तसूर्यापत्यत्वात् । तथा च अस्या सपत्नी गङ्गा सापि गौरी, तथापि सा यमुना कृष्णैव दृश्यते । तस्मादिदमनुमीयते यत् उत्पस्यमानकृष्णविरहशोकमग्नाभि गोपीभिर्यत्प्रभूत रोदन कृत तस्मिन् कर्मण्यश्रुपूरोपि नेत्रेभ्यो बहिरगात् तेन सहाञ्जित नेत्रकज्जलमपि अश्रुपूरेण सह बहिर्निष्क्रम्य यमुनाजलेन सङ्गम्य ता सवर्णतामनयत् इति हेतूत्प्रेक्षा ॥ इन्द्रवज्रा वृत्तम् ॥५७॥

**गौराङ्गीर्गर्हमाणा गरलगुरुतया गेहधर्मं गरिष्ठं**
**गङ्गागम्भीरशुद्धालपितगगनगुणो ग्राहयन्नाग्रहेण ।।**
**ग्रीवां गृह्णन्निगूढं गलितधृति गृणन् स्वागतेर्गुह्यवार्ता**
**गोविन्दो गोकुलान्ताज्झगिति न निरगादग्रगाम्यग्रजन्मा ।।५८।।**

**अन्वय**—गोविन्द अग्रगाम्यग्रजन्मा गङ्गागम्भीरशुद्धालपित-गगनगुण गरलगुरुतया गर्हमाणा गौराङ्गी गरिष्ठ गेहधर्मम् आग्रहेण ग्राहयन्, स्वागते गुह्यवार्ता गलितधृति गृणन् ग्रीवा निगूढ गृह्णन् गोकुलान्तात् झगिति न निरगात् ।।

**व्याख्या—गौराङ्गीरिति ॥** निजविरहाकुला रुदन्तीर्गोपीर्दृष्ट्वा **गोविन्द** श्रीकृष्ण **अग्रगाम्यग्रजन्मा** अग्रे गन्तु शीलमस्य स अग्रगामी । ताच्छील्ये णिनि । अग्रगामी अग्रज मा ज्येष्ठो भ्राता, बलरामो यस्य स । अनेन सत्वरगमनस्य हेतुर्ध्वन्यते । अर्थात् बलरामस्तु पुरत अस्य प्रतीक्षाङ्करोति, अतोऽसौ सत्वर गमनायोद्युक्तोपीति भाव । **गङ्गागम्भीरशुद्धालपितगगनगुण** गङ्गेव गम्भीर अगाध शुद्धो निर्मलो विशदो वा अलपित स्तोकत्व नीत गगनस्याऽऽकाशस्य गुण शब्दो येन स । अर्थात् विशदेन स्पष्टशब्दविवेचनेन भाषणकर्ता श्रीकृष्ण । **गरलगुरुतया** गरलस्य विषस्य गुरुता आधिक्य तया । अर्थात् कृष्णविरहजन्यखेदस्याधिक्येन । **गर्हमाणा** 'गर्ह कुत्सायाम्' गर्हते, तस्मात् शानच् । गर्हन्ते इति गर्हमाणा । ता । वाचाला, कुत्सयन्ती **गौराङ्गी** गौरवर्णगोपी प्रति **गरिष्ठ** गुरुतरम् अनुल्लङ्घनीयमित्यर्थ । **गेहधर्म** गार्हस्थ्य-धर्मम् अर्थात् वृद्धापत्यपतीना सङ्गोपनात्मक कर्म इत्यर्थ । **आग्रहेण** दृढनिश्चयेन **ग्राहयन्** ग्रहीतु स्वीकर्तु प्रेरयन्, उपदेशेन बोधयन्नित्यर्थ । ग्राहयन् इति 'ग्रह उपादाने'। णिजन्तात् शत्रन्तम् । ग्राहयतीति ग्राहयन् बोधयन्नित्यर्थ । बुध्यर्थत्वेन 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति सूत्रेण गौराङ्गीणा कर्मत्वम् । णिच् भिन्नप्रयोगे शुद्धधातुवाच्या क्रिया प्रति य कर्ता स ण्यन्तधातुवाच्या क्रिया प्रति कर्मसज्ञ । यथा गौराङ्गी गेहधर्म गृह्णाति इत्येव बुध्यर्थत्वेन णिच् प्रयोगे गौराङ्गी गेहधर्म ग्राहयति । **स्वागते** स्वस्य आगति आगमन तस्या । निजागमनस्य **गुह्यवार्ता** गुप्तसन्देश । **गलितधृति** गलिता धृति धैर्य यस्मिन् कर्मणि तत् यथा स्यात् तथा, गृणन् उच्चारयन् । 'गॄ शब्दे' गृणातीति गृणन् शत्रन्तम् । 'धृतिर्धारणधैर्ययो' इत्यमर ।। निजस्य पुनरागमनस्य गुप्तवार्ता धैर्यहीनत्वात् कथमपि उच्चारयन् । असत्यकपटभाषणेनेति भाव । पुनरपि विश्वास जनयितु **ग्रीवा** कण्ठ **निगूढ** यथा स्यात् तथा **गृह्णन्** अर्थात् तासा सन्तोषाय गुप्तरीत्या आलिङ्गन कुर्वन् । एतादृगसौ श्रीकृष्ण **गोकुलान्तात्** व्रज

प्रदेशात् **झगिति** शीघ्र **न निरगात्** न जगाम। अर्थात् गोपीना स्नहानुब धनात् गोष्ठस्थान कष्टेन त्यक्तवान् इति भाव ॥ स्रग्धरा वृत्तम् ॥५८॥

**यदि मणिरिवाभक्तायापि प्रसह्य विवस्वता**
**निजरथवहावाहा सूतोप्यनूरुरदास्यत ॥**
**यदपि च रथेऽयोक्ष्यन्तास्मिस्तथाप्यबलागणो**
**हृदि यदि रुषाऽधास्यद्बाढ तदैनमरोत्स्यत ॥५९॥**

**अन्वय**—मणिरिव विवस्वता यदि इह अभक्तायापि प्रसह्य निजरथवहावाहा, सूत अनूरु अपि अदास्यत, यदपि च अस्मिन् रथे अयोक्ष्यन्त, तथापि यदि अबलागण हृदि रुषा अधास्यत् तदा एन बाढम् अरोत्स्यत ॥

**व्याख्या—यदीति ॥ मणिरिव** यथा **विवस्वता** सूर्येण भक्ताय सत्राजिते स्यमन्तकमणिरदास्यत, दत्त। तत्सदृशमेव **इहास्मिन्** समये **यदि अभक्ताया-** क्रूरायापि **प्रसह्य** हठात्। यद्यपि अक्रूर सूर्यभक्तो न तथाप्यनुमानपक्षे यदि तस्मै। **निजरथवहावाहा** निजरथ वहति त निजरथवहा ते एव वाहा अश्वा ते, निजरथवहावाहा। 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय' इत्यमर। सूर्यस्य रथवहा सप्ताश्वा। अपि च **सूत** सारथि, **अनूरुररुणोऽपि अदास्यत** दत्त। **यदपि च अस्मिन्** अक्रूरस्य रथे **अयोक्ष्यन्त**। सूर्याश्वानाम् अप्रतिहत गतिरिति भाव। **तथापि यद्यबलागणो** व्रजस्त्रीवर्गो **हृदि रुषा अधास्यत्** हृदि क्रोधमकरिष्यत् चेत्, **तदा एनम्** अक्रूर **बाढ अरोत्स्यत** गमनाद् रोद्धु निश्चयेन अशक्ष्यत। अस्मिन् पद्ये हेतुहेतुमद्भावे णिजन्तस्य लृङ्लकारस्य प्रयोग।

मणिरिव यदि सूर्यो निजसूतमश्वाश्च तस्मै अभक्ताय अक्रूराय दास्यति चेत्, अस्य रथे तान् योक्ष्यति चेत्, तदपि यदि ता गोप्यो मनसि क्रोध धास्यन्ति तदा एनम् अक्रूर रोद्धु खलु समर्था भविष्यन्ति इति भाव ॥

असम्भवद्वस्तुसम्बन्धरूपबिम्बानुबिम्बत्व निदर्शनालङ्कार। हरिणी छन्द ॥६०॥

**श्रीकृष्णे सबले व्रजात्प्रचलिते गोपाङ्गना स्यन्दने**
**स्वान्दृष्टिन्निदधुस्तत परमरङ्कौ तदूर्ध्वङक्षणात् ॥**
**रेणौ तु खमहाब्धिशोषणकृते सोप्यस्रपूरान्तरे–**
**पङ्कीभूय दृढन्यमज्जयदिमा हा हन्त हन्ताबला ॥६०॥**

**अन्वय** —श्रीकृष्णे सबले व्रजात् प्रचलिते, गोपाङ्गना स्वा दृष्टि स्यन्दने निदधु । तत परम् अर केतौ, क्षणात् तदूर्ध्व रेणौ, दु खमहाब्धिशोषणकृते सोऽपि अस्रपूरान्तरे पङ्कीभूय इमा अबला दृढ न्यमज्जयत् । हा हन्त हन्त ! ॥

**व्याख्या—श्रीकृष्ण इति ॥ श्रीकृष्णे सबले व्रजात् प्रचलिते** बलरामेण सह श्रीकृष्णे वृन्दावनाद् मथुरा प्रति निर्गते सति । **गोपाङ्गना स्वा दृष्टिं स्यन्दने** रथोपरि एव **निदधु** स्तस्थु । **तत पर** तदनन्तरम्, तासा दृष्टि **अर द्रुत केतौ** रथस्यात्युन्नते ध्वजे अतिष्ठत् । **क्षणात् तदूर्ध्व रेणौ** क्षणादेव तासा दृष्टिस्तत्केतोरुपरि गते रेणौ अगच्छत् । **दु खमहाब्धिशोषणकृते** दु खमेव महाब्धि सागर तस्य शोषणस्य कृते दु खमहाब्धिशोषणकृते (अव्ययम्) । रथचक्रादुत्थित रेणुना गोपीना दु खसागरशोषण कर्तुम् । **सोऽपि अस्रपूरान्तरे पङ्कीभूय** स रेणुरपि रुदन्तीना गोपीनाम् अश्रुप्रवाहे पङ्कीभूय, पङ्क कर्दम स भूत्वा, **इमा** अबला **दृढन्न्यमज्जयत् ।** तस्मिन् कर्दमे एता गोपीर्भृशम् आप्लावयत् । महादु खिता रुदन्त्यो गोप्यो रथादुत्थितपासुना रेणुलिप्ता अभूवन्नित्यर्थ । हा हन्त हन्त इति खेदे ॥ शार्दूलविक्रीडित वृत्तम् ॥६०॥

**तदनु सुदृशाम्भूमेरश पलात्प्रलयङ्गतो**
**नयनयुगलादम्भस्तेजो मुखादपि चानिल**
**हृदयसदनाघात चक्रु सहैव सुनिश्चय**
**ध्रुवमविभुता स्थातुम्भूतैश्चतुर्भिरदर्शि सा ॥६१॥**

**अन्वय** —तदनु सुदृशा भूमेरश , तथा च नयनयुगलात् अम्भ , मुखात् तेज अपि च अनिल पलात् प्रलय गत । (एते चत्वारोंशा ) सुनिश्चय सहैव स्थातु हृदयसदनाघात चक्रु । (अत ) चतुर्भि भूतै सा अविभुता ध्रुव अदर्शि ॥

**व्याख्या—तदनु इति ॥ तदनु** श्रीकृष्णगमनानन्तरम् । **सुदृशाम्भूमेरश** यत पञ्चभूतात्मकोऽय देहस्तस्मात् सुदृशा गोपीना शरीरे ये पञ्चभूतात्मकभागा आसन् तेषा भूमेर्भाग **पलात् प्रलय गत** क्षणादेव विनष्टोऽभूत् । **तथैव नयनयुगलादम्भो** जलतत्व नष्टम् । **मुखात् तेजोपि चानिलो** वायुश्चोभावपि नष्टौ । शरीराद्बहिरागतान्येतानि चतुस्तत्वानि । **सुनिश्चय** यथा स्यात् तथा दृढसङ्कल्पेन **सहैव स्थातुम्** एकत्रस्थित्वा **हृदयसदनाघात चक्रु** पञ्चमतत्वे हृदयाकाशे अयतन्त । तेषा प्रयत्नेनोत्पन्न आघातस्तासा हृदयानि सदैवाच्छिनत् । इत्थ

**चतुर्भि**श्चतुस्सङ्ख्याकै**र्भूतै**र्भूम्यम्ब्वाणतेजोभि सा अनिरूप्या अनिवचनीया **अविभुता** विभूतिरहिता अर्थात् अपार्थिवत्वम् अमूर्तत्वम्। ध्रुवम अदर्शि दृष्टा ॥ श्रीकृष्ण गमनानन्तर गोप्योपि कृष्ण विना शरीरधारण कुर्वन्त्योपि अमूर्ता एव तस्थुरिति भाव ॥ भावितमलङ्कार । लक्षणम् यथा अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यत । यत्प्रत्यक्षायप्रमाणत्व तद्भावितमुदाहृतम् ॥ हरिणी छन्द ॥६१॥

**त स्वर्द्रुपल्लवगणप्रतिमल्लवर्य-**
**पाद निधाय हृदि बल्लवमुग्धवध्व ॥**
**शीतोष्मवातजविपल्लवभावनार्त्याऽ-**
**नुत्फुल्लगल्लवदना सदनानि जग्मु ॥६२॥**

**अन्वय**—बल्लवमुग्धवध्व त स्वर्द्रुपल्लवगणप्रतिमल्लवर्यपाद हृदि निधाय शीतोष्मवातजविपल्लवभावनार्त्या अनुत्फुल्लगल्लवदना सदनानि जग्मु ॥

**व्याख्या—तमिति** ॥ बल्लवाना गोपाना मुग्धा सुन्दर्यो वध्व, **बल्लवमुग्ध वध्व** गोपाङ्गना इति भाव । **त स्वर्द्रुपल्लवगणप्रतिमल्लवर्यपादम्,** स्वर्द्रो कल्पवृक्षस्य पल्लवगण किसलयसमूहस्तेषा प्रतिमल्लवर्यौ प्रतिस्पर्धिनौ अतिसुन्दरौ कोमलौ पादौ यस्य स तम्। एतादृशम् त श्रीकृष्ण **हृदि निधाय** स्थापयित्वा। **शीतोष्मवातजविपल्लवभावनार्त्या** शीतोष्मवातजैर्विपल्लवा शुष्कताङ्गता म्लाना भावना मनोविकारास्तासाम् आर्ति पीडा तया। यथा शीतोष्मवातैस्त्रिभिस्तत्वै-र्वनस्पतिसमूह शुष्कतागच्छति तद्वत् श्रीकृष्णवियोगाज्जनितदु खेन इति भाव । ता गोप्य । **अनुत्फुल्लगल्लवदना,** गल्लाश्च वदनानि च गल्लवदनानि, अनुत्फुल्लानि म्लानानि गल्लवदनानि यासा ता । म्लानवदना सन्त्य **सदनानि जग्मु** स्व स्व गेहमगच्छन् ॥

यमकालङ्कार ॥ वसन्ततिलका छन्द ॥ ६२ ॥

इति श्रीमता वत्सगोत्रान्तर्गतेन काळेकुलोत्पन्नेन श्रीढुण्ढिराजरामचन्द्रशास्त्रिणा विरचितस्य भागवतव्यञ्जनस्य तस्यैव कविवरस्य पौत्राभ्या गोविन्दकाशीनाथशर्मभ्या कृताया व्यञ्जनसुबोधिनीव्याख्याया तृतीयोल्लास ॥

---

# महाकविढुण्ढिराजशास्त्रिणा कृतम्
# श्रीमद्भागवतव्यञ्जनम्

---

## चतुर्थोल्लासः

**अथ निनाय विना यदुसत्तमोऽनुमतिमर्कसुताम्प्रमदातते ।।**
**कलहरीतिभयादिव सत्वर बलहरी लहरीशतशोभिताम् ।।१।।**

**अन्वय** —अथ यदुसत्तम कलहरीतिभयादिव प्रमदातते अनुमति विना लहरीशतशोभिताम् अर्कसुता सत्वर बलहरी निनाय।

**व्याख्या—अथेति** ।। **अथ यदुसत्तमोऽक्रूर** । **कलहरीतिभयादिव** कलहस्य रीति कलहरीतिर्विग्रहरीति तस्या भय तस्मात्। कलहो भविष्यतीति किम् इति भयात्। **प्रमदातते** प्रमदाना व्रजस्त्रीणा तति सहतिस्तस्या । व्रजस्त्रीवर्गस्य। **अनुमतिम्** अनुज्ञा **विना लहरीशतशोभिताम्**। लहरीशतै शोभिता ताम्, असङ्ख्यदुष्पार तरङ्गै सङ्कुलाम्। **अर्कसुता** सूर्यतनया यमुनानदीम्। **सत्वर** शीघ्रत्वेन यथा स्यात् तथा। **बलहरी निनाय** बलश्च हरिश्च बलहरी तौ बलहरी बलकृष्णौ अनयत्। कलहो भविष्यतीति भयादेव सोऽक्रूरो व्रजस्त्रीणा मनुमति विना सत्वर बलकृष्णौ यमुनातट निनाय इति भाव । नी धातुर्द्विकर्मक । द्रुतविलम्बित वृत्तम् ।।१।।

**अकठिन स तदप्स्वघमर्षण व्यधित तौ तु हलायुधचक्रिणौ ।।**
**कुमतिमन्त्रकृते नयत पुरी रथगतावपि चक्रतुरस्य ताम् ।।२।।**

**अन्वय**—स अकठिन तदप्सु अघमर्षण व्यधित। तौ तु हलयुधचक्रिणौ रथगतौ अपि कुमतिमन्त्रकृते नयत अस्य ता पुरी तदप्सु चक्रतु ।।

**व्याख्या—अकठिनेति ॥ सोऽकठिन** न कठिन क्रूर अकठिन अक्रूर । एतत् सञ्ज्ञको यादव , कोमलहृत पापभीरुश्च । **तदप्सु** तस्या यमुनाया अप्सु यमुनाजले । 'आप स्त्री भूम्नि' इत्यमर । **अघमर्षण व्यधित** अघस्य पापस्य मर्षण मर्शनमकरोत् अघमर्षणविधानमकरोत् । सर्वपापघ्नाय सूर्याय अर्घ्य ददौ इत्यर्थ । **तौ तु हलायुधचक्रिणौ** बलकृष्णौ तु । **रथगतावपि** रथे तिष्ठन्तावपि । **कुमतिमन्त्रकृते नयत** कुमतेर्मन्त्र कुमतिमन्त्रो दुष्टगुप्तवाद कुमतिमन्त्रस्य कृते । अव्ययम् । कसस्य गुप्तवादाभिलाषपूरणार्थ नयत । एतौ बलकृष्णौ मथुरा नयमानस्य अस्याक्रूरस्य **ता पुरी** मथुरापुरी तदप्सु **चक्रतु** । यमुनाजले स मथुरानगरीमेवापश्यत् इत्यर्थ । अथवा अनेनाक्रूरेणाभिलषिता ता वैकुण्ठपुरीम् अत्रैव यमुनाजले तौ बलकृष्णौ अकुरुताम् । द्रुतविलम्बित छन्द ॥२॥

**जलस्थौ रथस्थौ सम वीक्ष्य देवौ**
**श्वफल्काङ्गभू रङ्गभू कर्मलक्ष्म्या ॥**
**न वै केवल भानुकन्याकबन्धे**
**प्रबन्धेऽपि शङ्काशताना ममज्ज ॥३॥**

**अन्वय**—श्वफल्काङ्गभू कर्मलक्ष्म्या रङ्गभू जलस्थौ रथस्थौ देवौ सम वीक्ष्य न केवल भानुकन्याकबन्धे ममज्ज, शङ्काशताना प्रबन्धेऽपि ॥

**व्याख्या—जलस्थाविति ॥ श्वफल्काङ्गभू** अङ्गाद् भवतीत्यङ्गभू । इति क्विप् । **श्वफल्कस्याङ्गभू** पुत्र । अक्रूर इत्यर्थ । **कर्मलक्ष्म्या रङ्गभू** कर्मणो लक्ष्मी कर्मलक्ष्मीर्भाग्यनियन्त्री इत्यर्थ । अथवा कर्म एव लक्ष्मी तस्या रङ्गभू क्रीडास्थानम्, भाग्यवान् इत्यर्थ । अथवा कर्मकर्ता । **जलस्थौ रथस्थौ देवौ** बलकृष्णौ **सम वीक्ष्य** सदृशौ निरीक्ष्य, स भाग्यवानक्रूरो जले च स्थले च द्वयोरपि स्थानयो समकालम् एकेनैव रूपत्वेन तावुभौ बलकृष्णौ दृष्ट्वा । **न केवल भानुकन्याकबन्धे** भानो रवे कन्या यमुनानदी तस्या कबन्धे जले । "कालिन्दी सूर्यतनया यमुना शमन स्वसा" इत्यमर "कबन्धमुदक पाथ" इत्यमर । **ममज्ज** । किन्तु **शङ्काशताना प्रबन्धेऽपि,** शङ्काना शत तेषा प्रबन्धे कल्पनातरङ्गे अपि ममज्ज जगाहे । "प्रबन्धकल्पनाकथा" इत्यमर । स कर्मणा प्रेरितोऽक्रूरो जले च स्थले च उभयोरपि स्थानयोस्तौ देवौ एकसमयावच्छेदेन सदृश दृष्ट्वा मनस्युद्भूतैर्बहुविधसन्देहैर्व्याप्त सन् यमुनाजले ममज्ज इत्यर्थ ॥

अनुप्रासालङ्कार । भुजङ्गप्रयातम् छन्द ॥३॥

**दृष्ट्वैश्वर्यं वीतशङ्कस्तयोस्तत्स्व सोपानस्यन्दन भिन्नमाद्यम्**
**आरुह्यासौ पुण्यवान्प्रापसद्यो देवोद्यान पत्तनोद्यानरूपम् ।।४।।**

**अन्वय** —तयो तत् ऐश्वर्यम् दृष्ट्वा वीतशङ्क स्व सोपानस्यन्दनम् भिन्न दृष्ट्वा असौ पुण्यवान् आद्यम् आरुह्य सद्य पत्तनोद्यानरूप देवोद्यान प्राप ।।

**व्याख्या—दृष्ट्वेति ॥ तयो** रामकृष्णयो । **तदैश्वर्य दृष्ट्वा** तयो सर्वव्यापकत्व महत्व दृष्ट्वा । जलस्थौ रथस्थौ सम वीक्ष्य, तथा यमुनाजले निखिला मथुरापुरीमपश्यदिति सबन्धात् । **वीतशङ्को** वीता निर्गता शङ्का सन्देहो यस्य स । 'कससम्मुखे एतौ कथ स्थास्यत' इति मनस पीडाजनकेन सन्देहेन रहितोऽक्रूर । **स्व सोपानस्यन्दन भिन्न दृष्ट्वा,** स्व अव्ययम् । स्व स्वर्गस्य गमनसाधनाय स्यन्दनो रथ स्व सोपानस्यन्दन तम् । स्वर्गगतिप्रापणार्थमभिलाषपरिपूर्ण मनोरथ भिन्न यथास्यात् तथा खण्डित दृष्ट्वा, ताभ्या सकलाभिलाषा अत्रैव पूरिता इत्यर्थ तयोर्दृष्टैश्वर्यत्वात् । **असौ पुण्यवान्** । **आद्यम् आरुह्य** आद्य भोजराजेन कसेन दत्त लौकिकरथमारुह्य । **सद्य** तत्कालमेव **पत्तनोद्यानरूप** पत्तनस्य राजधान्या मथुराया उद्यानरूपम उपवनम् । लतापुष्पादिभि सुशोभित क्रीडार्थनिर्मितमुद्यानम् इत्यर्थ । **देवोद्यान प्राप** राजोद्यानमाजगाम । राजा भट्टारको देव इत्यमर ।। शालिनी छन्द । शालिन्युक्ताम्तौतगौगोब्धि लोकै इति ।।४।।

**तत्पूर्वमेव शकटै सह गारसाढ्यै**
**प्राप स्थल निजजनैश्च तदैव नन्द ।।**
**तस्मादपि प्रथममलिपतनाकिपौर-**
**स्वान्तान्तराण्यविशदाङसहित स एव ।।५।।**

**अन्वय**—तदैव नन्द तत्पूर्वमेव निजजनै गोरसाढ्यै शकटैश्च सह स्थल प्राप । स तस्मादपि प्रथममेव अलिपतनाकिपौरस्वान्तान्तराणि आङसहित अविशत् ।।

**व्याख्या—तत्पूर्वमिति ॥ तदैव नन्द** श्रीकृष्णजनकोपि । **तत्पूर्वमेव** तस्य अक्रूरस्य अग्रे एव । **निजजनै** स्वपरिवारै**र्गोरसाढ्यै शकटैश्च सह** गव्यपूर्णशकटै. सह । **स्थल प्राप** मथुराया निवासस्थानम् आजगाम । **स** श्रीकृष्ण । **तस्मादपि प्रथममेव**-नन्दस्यागमनादपि पूर्वम् । **अलिपतनाकिपौरस्वान्तान्तराणि आङ्सहित अविशत्** । नाक स्वर्ग । पुरे भवा पौरा । अलिपिता लघुत्व नीता नाकिन

पौरा देवा इत्यर्थ , यैस्ते अलिपतनाकिपौरा , तेषा स्वान्तान्तराणि, अलिपतनाकिपौर स्वान्तान्तराणि-मथुरावासिना मनासि । स्वान्ताना मनसा अन्तराणि अवकाशान् । 'स्वान्त हृन्मानस मन ' तथा 'अन्तरमवकाशावधि ' इत्यमर । आङ्सहित अविशत् आविशदित्यर्थ । मथुरापुरवासिना हृदये नन्दागमनात्पूर्वमेवाविशत् । कृष्णदर्शनोत्सुका पुरवासिन कृष्णागमनवार्त्तया अभूवन्नित्यर्थ ।

अथ च स श्रीकृष्ण तस्मादपि प्रथममेव नन्दस्यागमनात्पूर्वमेव तेषा पुरवासिना स्वान्तान्तराणि मनासि आङ्सहितो नन्द स एव आनन्द अविशत् । आनन्दरूपो बभूव । मथुरावासिना मनासि सानन्दानि बभूवुरित्यर्थ ॥ वसन्ततिलका वृत्तम् ॥५॥

**कृष्णविप्रियवहा नगरी ता वीक्ष्य शासितुमनोभिरनोभि ॥**
**ऊढतत्प्रियरसै रचितास्या अर्धचन्द्रकृतिराकृतिदम्भात् ॥६॥**

**अन्वय**—कृष्णविप्रियवहा ता नगरी वीक्ष्य, शासितुमनोभि ऊढतत्प्रियरसै अनोभि अस्या आकृतिदम्भात् अर्धचन्द्रकृति रचिता ॥

**व्याख्या—कृष्णेति ॥ कृष्णविप्रियवहा** कृष्णस्य विप्रिय द्वेष्टार कस वहति धारयति या सा ताम्। **ता** मथुरानगरीं **वीक्ष्य। शासितुमनोभि** शासितु दण्डयितु मन इच्छा येषा तानि शासितुमनासि तै । **ऊढतत्प्रियरसै** उढ धृत तस्य कृष्णस्य प्रिय तत्प्रियो रसो दुग्धादि यानि तै । **अनोभि** शकटै । **अस्या** मथुराया **आकृतिदम्भात्** रचनामिषात् । **अर्धचन्द्रकृति** वलयार्धरूपा **रचिता** कृता ॥

असौ मथुरानगरी कृष्णद्वेष्टार कस धारयति, पुन अस्या रचना तु यमुनातटाके सति अर्धवलयाकृति , अतस्तत्सादृश्यात् ता दण्डयितु कामै एभि शकटै तत्र निज निजार्धचन्द्राकृतिरचनया अर्थात् अङ्गुष्ठतर्जनीमध्यप्रदेशेन ताडन प्रदर्शितमिति भाव ॥ उत्प्रेक्षालङ्कार । स्वागता छन्द ॥६॥

**अप्राप्त कृतकृत्यताममिलितस्वज्ञातिरद्यद्वयो-**
**रेकेनापि न सङ्गतोऽस्मि सुमते हन्तोद्धवेनेदृश ॥**
**आगच्छामि निरुद्धव कथमतो गेह निज क्षम्यता**
**स्वल्पङ्कालमिति ब्रुवन् प्रभुवरोऽक्रूर पुर प्राहिणोत् ॥७॥**

**अन्वय**—हे सुमते ! अद्य कृतकृत्यताम् अप्राप्त अमिलित-स्वज्ञाति द्वयो एकेनापि उद्धवेन सङ्गत न अस्मि, हन्त ! ईदृश

निरुद्धव कथ निज गेहम् आगच्छामि । अत स्वल्प काल क्षम्यताम्
इति ब्रुवन् प्रभुवर अक्रूर पुर प्राहिणोत् ॥

**व्याख्या—अप्राप्त इति॥ हे सुमते** अक्रूर । **अद्य** अधुना **कृतकृत्यता-मप्राप्त** कृतानि कृत्यानि येन स कृतकृत्य तस्य भाव कृतकृत्यता ताम् । भावे तल् । मम कर्तव्यकर्मपूर्तिमकृत्वैवाहम् । कसवधमिति भाव । तथा **अमिलित स्वज्ञाति** अमिलिता स्वज्ञातिर्येन स । निजबान्धवाना समागम न प्राप्तवानहम् । **द्वयोरेतयो** प्राप्तोद्धवयोर्मध्ये **एकेनापि उद्धवेन न सङ्गतोऽस्मि** एक स्वय उद्धवो मे पितृव्य, अन्यस्तु महोत्सव । 'महउद्धवउत्सव' इत्यमर । एतयोर्द्वयो मध्ये मया नतूद्धवो दृष्टो न चापि महोत्सवो, यदर्थमहमागत इत्यर्थ । **हन्त** इति खेदम् । **ईदृशो निरुद्धवो निज गेह कथमागच्छामि** । ईदृक् युग्मम् उद्धव विहाय तव गृहे कथ यामि । **अत स्वल्प काल** कञ्चित् काल **क्षम्यता** 'काला ध्वनोरत्यन्तसयोगे' इति द्वितीया । अल्प कालपर्यन्तमवसर दत्त्वा क्षमस्व, **इति ब्रुवन्** कथयन् । **प्रभुवर** श्रीकृष्णोऽक्रूर **पुर प्राहिणोत्** अक्रूरम् आदौ प्रस्थापयामास ॥ श्लेषालङ्कार । शार्दूलविक्रीडित वृत्तम् ॥७॥

**आस्ता नाक सत्यलोकोऽपि दूरे वैकुण्ठोऽल वृष्णिपुर्या न साम्ये ॥**
**तस्यापीश श्रीधरोऽसौ यदस्या शोभा द्रष्टु दत्तचक्षुर्बभूव ॥८॥**

**अन्वय**—नाक सत्यलोकोऽपि दूरे आस्ताम् । वृष्णिपुर्या साम्ये वैकुण्ठोऽल न, यत्तस्यापीश श्रीधरोऽसौ अस्या शोभा द्रष्टु दत्तचक्षुर्बभूव ॥

**व्याख्या—आस्तामिति॥ नाक सत्यलोकोऽपि दूरे आस्ता** नाक स्वर्गलोक, सत्यलोको ब्रह्मणो धाम । एतौ द्वौ लोकौ दूरे भवेत्ता । तयो का कथा । **वृष्णिपुर्या साम्ये** मथुराया सादृश्ये **वैकुण्ठो** वैकुण्ठलोकोपि यदस्य निजधाम । **अल न** सोपि अस्या समानत्वे पर्याप्तो न । **यत्** यस्मात् कारणात् । **तस्यापीश, तस्य** वैकुण्ठस्यापि ईश स्वामी **असौ श्रीधर** श्रीकृष्ण । **अस्या** मथुराया **शोभा द्रष्टु दत्तचक्षुर्बभूव** । दत्त चक्षुर्येन स । एकाग्रमना । स तस्या मथुराया शोभा एकाग्रमनसा ददर्श इत्यर्थ ॥ [illegible] व्यतिरेका लङ्कार । शालिनी वृत्तम् ॥८॥

**तदाऽसूर्यम्पश्या अपि नगरनार्य खलु विभो-**
**दिदृक्षैकव्याजादकरुणललाटन्तपरवे ॥**

**अन्वय**—यो रजक परस्य पट आत्मीयमिव अमल विधाय किल न ? तथा अपरानपि वसनघटितान् कोशान् भक्त्या वर्णै अर किल न अरञ्जयत् ? (एव)। अच्युत पटमिव अस्य परस्य मन आत्मीयमिव अमल विधाय भक्त्या वर्णै इव अस्य वसनघटितान् ससृते विवरणपटून् पञ्चकोशान् पञ्चापरानपि सतृष्ण इव अहार्षीत ॥

**व्याख्या—पटमिति** ॥ **यो** रजको वस्त्रधावक । **परस्य पटम्** अन्यपुरुषस्य वस्त्रम्। **आत्मीयमिवामल विधाय किल न** ? स्वकीयमिव मत्वा तद्वस्त्रस्य किट्ट किन्न धौति स्म ? धौतीति खलु। **तथाऽपरानपि वसनघटितान् कोशान्** अन्यपुरुषाणा वस्त्रादीन् कौशेयानपि। **भक्त्या** प्रीतियुक्तेन मनसा **वर्णै** पीतकृष्णलोहितादिभिर्नाना वर्णै । **अर** द्रुत **किल नाऽरञ्जयत्** ? किल न रञ्जयति स्म ? अपि तु रञ्जयति इत्यर्थ । एवमसौ **अच्युत** श्रीकृष्ण । **पटमिव** वस्त्रसदृशम् ? **अस्य परस्य**-अस्याभक्तस्य रजकस्य **मन** रजस्तमसावृतम् अज्ञानरूप चतसो मल। **आत्मीयमिव अमल विधाय**। आत्मीयत्वेन त निर्मलङ्कृत्वा, त रजक स्वकीय भक्त मत्वा। **भक्त्या वर्णैरिव** भक्तिरूपवर्णेनाच्छादयन्निव। त श्रद्धापर कुर्वन्निव इत्यर्थ । **अस्य** रजकस्य **वसनघटितान्** वसन वासो गृह देह इत्यर्थ । वसने घटितान् निर्मितान्। शरीरे स्थितान्नित्यर्थ । आत्मा य क्षेत्रज्ञस्तस्योपरि परिवेष्टितान्। **ससृते** ससारस्य **विवरणपटून्**-विवेचनदक्षान्। ससारविषयेषु लिप्तान्नित्यर्थ । **पञ्चकोशान्** पञ्चपेशी अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयान् पञ्चावरण कोशान्। तथा **पञ्चापरानपि** जीवितद्योतकानपरानन्यान् पञ्चवसनघटितान् शरीरस्थितान् प्राणान्, प्राणापानव्यानोदानसमानाश्चाप्यसौ श्रीकृष्ण **सतृष्ण** तृष्णया सहितो लोलुप **इव अहार्षीत्** जहार ॥ श्लिष्टोपमापरम्परितोत्प्रेक्षालङ्कार ॥ हरिणी छन्द ॥१०॥

**विद्वद्वन्द्योपि कटचा उपरितनमधो बिभ्रदूर्ध्वन्त्यध स्थ**
**तस्या सवेष्टनार्ह पटमपि च शिरस्त्राणमन्योन्यदेशे ॥**
**तादृक्षेभ्यो दिदृक्षाकुतुकसमुदितात्सम्भ्रमादागतेभ्य**
**पौरेभ्यो लब्धशिक्ष स कपटमनुजो हासयत्यम्बुजाक्षी ॥११॥**

**अन्वय**—विद्वद्वन्द्योऽपि कटचा उपरितनम् अध बिभ्रत्। अध स्थन्तु ऊर्ध्व बिभ्रत्। तस्या सवेष्टनार्ह पटमपि च शिरस्त्राणम्।

अन्योऽन्यदेशेपि । तादृक्षेभ्य , दिदृक्षाकुतुकसमुदितात् सम्भ्रमादागतेभ्य पौरेभ्य लब्धशिक्ष स कपटमनुज अम्बुजाक्षी हासयति ॥

**व्याख्या—विद्वदिति ॥ विद्वद्वन्द्योऽपि** विदुषा वन्द्यो विद्वद्वन्द्य पण्डितपूज्य । अपीत्यनेन न केवल जनसाधारणपौरजनेन किन्तु सुज्ञेन पडितेनापि वन्द्य श्रीकृष्ण । **कट्या उपरितनम् अधो बिभ्रत्** कटिप्रदेशादुपरि वलयितु योग्य वस्त्र तस्या अधोभागे दधत् । **अध स्थन्तु ऊर्ध्व बिभ्रत्** तस्या कट्या अधो भागे सधारणार्थ वस्त्रम् ऊर्ध्वभागे परिदधत् । **तस्या सवेष्टनार्ह पटमपि च शिरस्त्राण** तस्या कट्या सवेष्टनार्थ वस्त्र शिरोवेष्टनमकरोत् । **अन्योन्यदेशेऽपि** शिरस्त्राण तु कट्यामुपरि, एव विपर्यस्त दधत् श्रीकृष्ण । **तादृक्षेभ्यो** विपर्यस्त वेषधारिण द्रष्टुकामेभ्य । **दिदृक्षाकुतुकसमुदितात्** द्रष्टुमिच्छा दिदृक्षा । 'दृशिर् प्रेक्षणे' सन्नतात् द्रष्टुमिच्छति दिदृक्षति, तस्मात् स्त्रियाम् टाप् । दिदृक्षाया कुतुकेन कौतूहलेन समुदित समुद्भूत तस्मात् । श्रीकृष्णस्य दर्शनाभिलाषस्य कौतूहलेन । **सम्भ्रमात्** शीघ्रम् **आगतेभ्य पौरेभ्यो** मथुरानिवासिभ्य । **लब्धशिक्ष** तेभ्य पुरवासिभ्यो वस्त्रसधारणे प्राप्तशिक्ष । **कपटमनुज** कैतवेन मानुषत्वङ्गत **स** श्रीकृष्ण **अम्बुजाक्षी** पुरनारीर्विपर्यस्तवस्त्रसधारणेन **हासयति** हास कर्तु प्रेरयति । 'गतिबुद्धिप्रत्यवसानार्थ शब्द कर्माकर्मकाणा मणिकर्ता स णौ' इति सूत्रेण अम्बुजाक्षीणा कर्मत्वम् । स्रग्धरा वृत्तम् ॥११॥

**तैरम्बरैर्वायकतो विचित्रैरविन्दता वेषमशेषलाल्यम् ॥**
**श्रीरामकृष्णौ स च लघ्वमूभ्या श्रियञ्च सारूप्यमिह स्मृतिञ्च ॥१२॥**

**अन्वय**—श्रीरामकृष्णौ वायकत तै विचित्रै अम्बरै अशेषलाल्य वेषम् अविन्दताम् । स च लघु अमूभ्याम् इह श्रिय स्मृति सारूप्य च प्रापेति शेष ॥

**व्याख्या—तैरिति ॥ श्रीरामकृष्णौ । वायकत** कुविन्दात् । **तैर्विचित्रै रद्भुतै**र्महार्हैरितिभाव । **अम्बरै**र्वस्त्रै । **अशेषलाल्य वेष** न शेषमशेष समग्र लाल्यम् ईप्सितम् प्रसाधनयुक्त वेषम् । **अविन्दता** प्राप्नुताम् । 'लल ईप्सायाम्' लल्यते इति लाल्यम्, इति ण्यत् । 'विद्लृ लाभे' लङि अविन्दताम् । **स च** सोपि वायक । **लघु** शीघ्रम् **अमूभ्या** रामकृष्णाभ्याम् **इहास्मिन्** लोके **श्रिय** परमा सम्पदम् । **स्मृति** तस्य प्रभो स्मरण, तस्य भक्ति चेत्यर्थ । तथा **सारूप्यम्** अवसाने सारूप्यमुक्ति च प्राप ॥ उपजाति छन्द ॥१२॥

**श्रीकृष्ण ससुहृद्व्रजन्त्सुमनसा दाम्ना सुदाम्नाञ्चित**
**कुब्जासङ्गतिकामुको वरमिषात्तत्सौमनस्याढचताम् ॥**
**वीक्ष्य श्रीरमणी तदीयनिलये विन्यास तत्प्राड ननु**
**ज्ञात्वाऽसौ हृदयस्थया बत तया चेलेऽपि नि स्वीकृत ॥१३॥**

**अन्वय**—श्रीकृष्ण ससुहृद्व्रजन् सुमनसा दाम्ना सुदाम्ना अञ्चित (तत) कुब्जासङ्गतिकामुक तत्सौमनस्याढचता श्रीरमणी च वीक्ष्य वरमिषात् तदीयनिलये विन्यास। तया हृदयस्थया ननु तत् प्राक् ज्ञात्वा असौ चेले अपि नि स्वीकृत । बत !

व्याख्या—**श्रीकृष्णेति ॥ श्रीकृष्ण ससुहृत् व्रजन्** सुहृद्भि सहित ससुहृत्, वयस्यैर्गोपै सह मथुराया राजपथे श्रीकृष्णो गच्छन्। **सुमनसा दाम्ना** पुष्पाणा स्रजा, मालया। **सुदाम्नाऽचित** सुदामा नाम मालाकारेण सत्कृत। तत **कुब्जासङ्गतिकामुक** कुब्जाया कसदास्या सङ्गति समागम कामयतेऽसौ। 'लषपतपदेत्यादिना' उकञ् प्रत्यय। तत कुब्जासमागमेच्छु। **तत्सौमनस्याढ्यता** सुमनस भाव सौमनस्य सौहृद सौमनस्यस्य आढयता ताम्। सौमनस्याढय ताम्। तस्या कुब्जाया शुद्धान्त करणे, सुहृद्भावहृदये। आढयता वीक्ष्य आढयस्य भावे तल् स्त्रियाम् आढयता ताम्। स्वामित्वस्य श्रेष्ठत्वस्य योग्यता वीक्ष्य। ता सुहृद्भावेन शोभिता, स्वामित्वस्य योग्यता च वीक्ष्य। पुन ता **श्रीरमणीं च वीक्ष्य** श्रिया विराजिता, रन्तु योग्या, प्रमदोत्तमा च वीक्ष्य। **वरमिषात्** वरस्य वरदानस्य मिष व्याज तस्मात्, तस्यै वर दातुमित्येवहेतु तस्मात्। तस्या कामनातृप्त्यर्थमित्यर्थ। **तदीयनिलये विन्यास** तस्या अय तदीय, तदीय निलय गृहम् तस्मिन्। तस्या गृहे न्युषितु जगाम। **तया हृदयस्थया** हृदये तिष्ठति या सा हृदयस्था तया। कुब्जया हृदयवर्तिन्या। **ननु तत्प्राङ्ज्ञात्वा** हृदयस्थत्वादस्य श्रीकृष्णस्येष्टदातृत्व खलु पूर्वमेव ज्ञात्वा। **असौ** श्रीकृष्ण। **चेले अपि** वस्त्रेऽपि। **नि स्वीकृत** स्वामित्वराहित्य गमित। तस्य वस्त्राण्युपाजहार। **बत** इदमाश्चर्यम् ॥ सा कुब्जा श्रीकृष्णस्य दातृभाव ज्ञात्वा तस्य वस्त्राण्यप्याजहारेत्याश्चर्यम्। काव्य लिङ्गमलङ्कार। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम् ॥ शार्दूलविक्रीडित छन्द ॥१३॥

**रम्य रूप ययाऽसौ वरदवरविभुर्गन्धमात्रेण तुष्यन्**
**मार्गे सयच्छते स्म त्रिपदकुटिलयाऽनर्हया कसदास्या ॥**
**दृष्ट्वा ता विस्मितोऽभूदविदितविलसत्तद्विभक्तिप्रकारो-**
**ग्राम्योलोकस्तृतीयामिव सपदि चतुर्थ्यर्थहेतो प्रयुक्ताम् ॥१४॥**

**अन्वय**—असौ वरदवरविभु गन्धमात्रेण तुष्यन् मार्गे यया त्रिपदकुटिलया अनर्हया कसदास्या रम्य रूप सयच्छते स्म । चतुर्थ्यर्थहेता प्रयुक्ता तृतीयामिव ता दृष्ट्वा अविदितविलसत्तद्विभक्तिप्रकार ग्राम्यो लोक सपदि विस्मितोऽभूत् ॥

**व्याख्या– रम्यमिति ॥ असौ वरदवरविभु** वर ददातीति वरद वरदाना वर श्रेष्ठस्तेषामपि विभुरीश्वर । सकलसम्पत्तिमान् वरदाताऽसौ कामुकोऽपि श्रीकृष्णो वरमिषात् । **गन्धमात्रेण तुष्यन्** तयार्पितचन्दनेनैव तुष्ट सन् । **मार्गे** राजपथे । '**यया त्रिपदकुटिलया** त्रिपदे त्रिस्थाने कुटिला वक्रा त्रिपदकुटिला तया । **अनर्हया** दासीभूतत्वेनाऽवमानितया **कसदास्या** कुब्जया इत्यर्थ । **रम्य रूप सयच्छते स्म** अनुपमसौदर्य ददौ । इति राजपथे एव परस्त्रिया सहाऽशिष्टव्यवहारमकरोदिति भाव । **चतुर्थ्यर्थहेतो प्रयुक्ता ता तृतीयामिव दृष्ट्वा** अत्र चतुर्थी स्थाने तृतीया विभक्ते प्रयोग दृष्ट्वा 'यस्यै त्रिपदकुटिलायै रम्य रूप सयच्छते' इत्यत्र 'यया त्रिपदकुटिलया' इति तृतीयान्त पद दृष्ट्वा । **ग्राम्यो लोक**, अवैय्याकरणो **विस्मितोऽभूत्** । कीदृशो ग्राम्यो लोक ? **अविदितविलसत्तद्विभक्तिप्रकार** । विदितो ज्ञात । न विदित अविदित अज्ञात । तस्या विभक्ते कारकस्य प्रकार प्रयोग तद्विभक्तिप्रकार । विलसन् तद्विभक्तिप्रकार, विलसत्तद्विभक्तिप्रकार । अविदितो विलसत्तद्विभक्तिप्रकारो येन स । अविदितविलसत्तद्विभक्तिप्रकार । एतादृक् अवैयाकरण । 'दाणश्चसाचेच्चतुर्थ्यर्थे' 'अशिष्ट व्यवहारे दाण प्रयोगे चतुर्थ्यर्थे तृतीया योज्या' इति पाणिन्यादिष्ट प्रकारो यस्याऽविदित स **सपदि विस्मितोऽभू**दन्यथा पण्डितो नेतिभाव । तथा च कुब्जापक्षे । **तृतीयामिव** तृतीया सम्पदमिव, यथा धर्मार्थकाममोक्षाणा तृतीया सम्पद् काम ता सम्पद पूर्वमेव प्राप्ता कुब्जा पुनश्च **चतुर्थ्यर्थहेतो प्रयुक्ताम्** । चतुर्थी सम्पद् 'मुक्ति' ता सम्पादयितु प्रयत्नशीला कुब्जा दृष्ट्वा । **अविदितविलसत्तद्विभक्तिप्रकार** विशिष्टा भक्तिर्विभक्ति । तस्या कुब्जाया विभक्तिस्तद्विभक्ति । विलसन्ती तद्विभक्तिर्विलसत्तद्विभक्ति । तस्या प्रकारो विलसत्तद्विभक्तिप्रकार । अविदितो विलसत्तद्विभक्तिप्रकारो येन स । तस्या विशिष्टा भक्तिम् अजानानो ग्राम्यो लोको जनसाधारण सपदि विस्मितोऽभूत् । श्लेषालङ्कार । स्रग्धरावृत्तम् ॥१४॥

**प्राग्वृत्तसप्तदिनवर्षसहायताभा–**
**गेन्द्र विशङ्कय सुमहन्ननु चित्रवर्णम् ॥**
**कसस्य कञ्जनयनो धनुरूढरोषो**
**मध्येसभ जनसमक्षमसौ बभञ्ज ॥१५॥**

**अन्वय** —कञ्जनयन स कसस्य चित्रवर्ण सुमहद्धनु प्राग्वृत्त-सप्तदिनवर्षसहायताभाक् ऐन्द्र विशङ्क्य, असौ ऊढरोष मध्ये सभ जनसमक्ष बभञ्ज ॥

**व्याख्या—प्राग्वृत्तमिति** ॥ **कञ्जनयन** कमलाक्ष **स** श्रीकृष्ण । **कसस्य चित्रवर्ण** विविधरागै सुशोभितम् । **सुमहत् धनु** धनुर्यज्ञार्थ स्थापित तत् विशाल धनु । **प्राग्वृत्तसप्तदिनवर्षसहायताभागैन्द्रम्** सप्तदिनस्य वर्ष सप्तदिनवर्ष तेषु सहायता भजतीति सहायताभाक् । 'भजोण्वि' इत्यनेन ण्वि । प्राक् वृत्त सप्तदिनवर्षसहायताभाक् यस्य तत् । तच्च **ऐन्द्र विशङ्क्य** सन्देहेन ऐन्द्र इन्द्रस्य इद धनुरिति ज्ञात्वा । इति उत्प्रेक्षा । गोवर्धनोद्धारसमये इति भाव । 'वृष्टिवर्ष तद्विघाते इत्यमर' **ऊढरोषो** विवर्धितक्रोधोऽ **सौ** श्रीकृष्ण । **मध्येसभ** सभाया मध्ये मध्येसभम् । 'पारे मध्ये षष्ठ्या वा' इत्यनेन अव्ययीभाव । रङ्गमध्ये । **जनसमक्ष** जनाना पश्यता पुरुषाणा समक्ष पुरत **बभञ्ज** ॥ स्मरणा लङ्कार । सदृशानुभवात् वस्तुस्मृति स्मरणम् ॥ वसन्ततिलका छन्द ॥१५॥

**खिङ्गोद्भवस्य विगुणस्य सदोन्नतस्य**
**वाच्यस्य सश्रयवशेन मधूत्कटस्य ॥**
**सद्वशजेन गुणकोटिभृता नतेन**
**पूज्येन चापि विपदापि शरासनेन ॥१६॥**

**अन्वय** —खिङ्गोद्भवस्य सद्वशजेन, विगुणस्य गुणकोटिभृता, सदोन्नतस्य नतेन, वाच्यस्य पूज्येन, चापि मधूत्कटस्य सश्रयवशेन, शरासनेन विपद् आपि ॥

**व्याख्या—खिङ्गोद्भवस्येति** ॥ **खिङ्गोद्भवस्य** दानववशजस्य कसस्य । कसस्य दानववशसम्भूति पुराणान्तरेषु प्रसिद्धा । **सद्वशजेन** सद्वेणु जातेन । अथ च सत्कुलीनेन । 'द्वौ वशौ कुलमस्करौ' इत्यमर । **विगुणस्य** शमदमादिगुणरहितस्य । **गुणकोटिभृता** गुण रज्जु । कोटि अटनी । ज्या अटनी च धारयता, अथ च गुणाना कोटि सङ्ख्या ता धारयता अर्थात् शरव्याशुकल्ने निर्दोषेण । **सदोन्नतस्य** सदैव अविनीतस्य, उच्छृङ्खलस्य । **नतेन** विनम्रेण । **वाच्यस्य** निन्द्यस्य । **पूज्येन** पूजार्हेण चापि । **मधूत्कटस्य** मधुषु वृष्णिकुलेषु उत्कटस्य उद्धतस्य द्वेषयुक्तस्य अथ च मधुना मद्येन उत्कटस्य, मदोन्मत्तस्य कसस्य **सश्रयवशेन** कृताश्रयेण **शरासनेन** धनुषा अर्थात् सहवासवशात्, **विपद्** हानि **आपि** प्राप्ता । श्रीकृष्णात्प्राप्तभङ्गमिति भाव ॥ यथासङ्ख्यमलङ्कार । यथा-सङ्ख्य क्रमेणैव क्रमिकाणा समन्वय इति लक्षणात् । वसन्ततिलक वृत्तम् ॥१६॥

**देवाना वषडाकृतिर्द्विजनुषा सच्छान्तिपाठोपमो**
**दूरेऽपि प्रियसङ्गरस्य च मुने सङग्रामढक्कास्वन ॥**
**वृष्णीना जयदुन्दुभिध्वनिनिभ शब्दो धनुभङ्गभू**
**कसस्यापि बभूव कालमहिषग्रैवेयघण्टारव ॥१७॥**

**अन्वय** —धनुर्भङ्गभू शब्दो देवाना वषडाकृति, द्विजनुषा सच्छान्तिपाठोपम, प्रियसङगरस्य, मुने च दूरे अपि सङग्रामढक्कास्वन, वृष्णीना जयदुन्दुभिध्वनिनिभ, कसस्य अपि कालमहिषग्रैवेयघण्टारव बभव ॥

**व्याख्या—देवानामिति ॥ धनुर्भङ्गभू** धनुभङ्गाद्भवतीति धनुर्भङ्गभू इति क्विप्। **शब्दो** रव । श्रीकृष्णस्य धनुभङ्गोत्थितध्वनिर्विविधजनै पृथग्विधानेन ज्ञातो यथा—**देवाना** स शब्दो **वषडाकृतिबभूव** । कसस्यातङ्केन देवपितृतर्पण लुप्तम्। धनुर्भङ्गात् कमस्य मरण निश्चित ज्ञात्वा देवाना स ध्वनिर्वषट्कार इव बभूव। देवेभ्यो हविर्दानविषये वषट् शब्दो युज्यते। **द्विजनुषा** ब्राह्मणाना **सच्छान्तिपाठोपम** क्षेमस्थैर्ययुक्तवेदघोष इव बभूव। **प्रियसङ्गरस्य** प्रिय सङ्गर सङ्ग्रामो यस्य स प्रियसङ्गर तस्य। **मुनेश्च** परशुरामस्यापि—रणप्रिय पुरुष प्रति तथा मुनि परशुराम प्रति च **दूरेपि** यद्यपि स मुनि सुदूरस्थित तदपि तस्य प्रियरणत्वात् स शब्द **सङ्ग्रामढक्कास्वनो** रणदुन्दुभिरिवाऽभूत्। **वृष्णीना** यदूना **जयदुन्दुभिनिभो** जयघोष इवाऽभूत्। **कसस्यापि** कस प्रति तु स ध्वनि **कालमहिषग्रैवेयघण्टा रवोऽभूत्**। ग्रीवाया अय ग्रैवेयम्। 'ग्रीवाभ्योऽण् च' इति अण् ग्रैवम्, चात् ढञ् तस्य ईयादेश ग्रैवेयम्। कालस्य यमस्य महिषो वाहन लुलाय तस्य ग्रैवेयघण्टाया **रव** स्वन इव। कस प्रति तु मृत्युवाहनकण्ठबद्धघण्टाशब्दोऽभूदित्यर्थ ॥ धनुर्भङ्ग शब्दस्यानेकधोल्लेखत्वात् उल्लेखालङ्कार । शार्दूलविक्रीडित छन्द ॥१७॥

**ऐक्षिष्ट प्रतिबिम्बित न मुकरे नोदञ्चने वा मुख**
**दुर्धीश्चञ्चलजीवितो निशिदिवा स्वापञ्च न प्राप य ॥**
**भेजे कञ्च न मञ्चमञ्चलगत मूर्त्त यश सञ्चयञ्-**
**छ्रीकृष्ण स तु वञ्चयन्कुपुरुषान्भूषोच्चयैरञ्चयन् ॥१८॥**

**अन्वय** —य अञ्चलगत मूर्त्त यश सञ्चय श्रीकृष्ण वञ्चयन् कुपुरुषान् भूषोच्चयै अञ्चयन्, स दुर्धीस्तु चञ्चलजीवित मुकरे उदञ्चने वा प्रतिबिम्बित मुख न ऐक्षिष्ट। निशिदिवा स्वाप च न प्राप। कञ्च मञ्च न भेजे ॥

**व्याख्या—ऐक्षिष्टेति ॥ य** कस **अञ्चलगतम्** अञ्चले गतम् अञ्चलगत वस्त्रोपान्ते प्राप्तम्, करतलस्थमित्यर्थं । **मूर्त्त यश सञ्चय** मूर्त्तिमन्त यश समूह **श्रीकृष्ण वञ्चयन्** कथमपि त स्वमार्गाद्दूरीकर्तुमिच्छन् । **कुपुरुषान् भूषोच्चयै रञ्चयन्** तदर्थं कुटिलाधमान् वस्त्रभूषणादिदानप्रोत्साहेन सम्मानयन् । एतादृशा व्यवहारेण **स दुर्धीर्दुष्टबुद्धि** कस तु **चञ्चलजीवित**, अस्थिरजीवनवृत्ति, अशान्त । **मुकुरे** दर्पणे । **उदञ्चने** जलपूरितपात्रे वा । **प्रतिबिम्बित मुख न ऐक्षिष्ट** नापश्यत् । आत्मानमलङ्कर्तुमपि समयरहितो जात इति भाव । **निशिदिवा स्वाप** निद्रा च **न प्राप** । **कञ्च मञ्च न भेजे** अपि तु शयनार्थं पर्यङ्कमपि नागच्छत् । प्रस्तुतचञ्चलव्यवहारवर्णनादप्रस्तुतमरणार्थस्यापतनम् अर्थापत्त्या सूच्यते । अत अर्थापत्तिरलङ्कार । शार्दूलविक्रीडित वृत्तम् ॥१८॥

**मधुद्वेषिणा कामधुक्कीर्त्तिनादौ दिवो भोजराजस्य यात्रोत्सवाय ॥**
**द्रुत केशिवाजीव हाऽऽजीवनार्त्तिप्रदोऽनेन चक्रे द्विपेन्द्रोपि सज्ज ॥१९॥**

**अन्वय** —हा ! अनेन कामधुक्कीर्त्तिना मधुद्वेषिणा भोजराजस्य दिव यात्रोत्सवाय केशिवाजी इव आजीवनार्त्तिप्रद द्विपेन्द्रोऽपि आदौ द्रुत सज्ज चक्रे ॥

**व्याख्या—मधुद्वेषिणेति ॥ हा** इति आश्चर्ये, पश्येदमाश्चर्य **यदनेन** श्रीकृष्णेन, कथ भूतेन ? **कामधुक्कीर्त्तिना** कामम् इच्छित दोग्धीति कामधुक् । 'सत्सूद्विषद्रुहदुहयुज ' इत्यनेन क्विप् । कामधुक् कीर्त्तिर्यस्य स तेन । पुन **मधुद्वेषिणा** मधुरिपुणा, येन पूर्वं मधुदैत्य निहतवान् तेनैवात्र । **भोजराजस्य** कसस्य । **दिव** स्वर्गस्य । **यात्रोत्सवाय** गमनोत्सवहेतवे । **केशिवाजीव** यथा पूर्वं अश्वरूपी केशी दैत्य स्वर्गं प्रचोदित तद्वत् । **आजीवनार्त्तिप्रद** जीवन अभिव्याप्य इति आजीवनम् । आर्त्ति पाडा प्रददाति इति आर्त्तिप्रद । आजीवन आर्त्तिप्रद आजीवनार्त्तिप्रद । यावज्जीवनकष्टद । असौ गजो यावत् काल जीवति तावत् काल कष्टदोभवतीति मत्वा इत्यर्थ । **द्विपेन्द्रोऽपि** कुवलयापीडो गजोऽपि । **आदौ** भोजराजस्य गमनात् पूर्वं **द्रुत सज्ज चक्रे** झटिति सन्नद्ध कृत । हत इति यावत् 'सन्नद्धो वर्मित सज्जो' इत्यमर । भुजङ्गप्रयात वृत्तम् ॥१९॥

कामधुक्कीर्तिना मधुद्वेषिणा इत्यनेन अप्रतिहतरूपेण कर्मकर्त्रा तेन प्रभुणा यत्स्वातन्त्र्येण प्राङ्मधुदैत्योहत, तेनैव स्वतन्त्ररूपेण सद्योपि कसस्य स्वर्गारोहणाय यथापूर्वं केशिवाजी दैत्य स्वर्गं प्रचोदित, तथैवाधुना कुवलयापीड गजमपि निहत्य तदुत्सवायाऽऽदौ प्रेषित. । राज्ञामश्वगजादिसम्भाराणामावश्यकत्वादिति भाव ॥१९॥

**सितपरिकरो रक्ताब्जाक्ष करीन्द्ररदायुधो**
**विहसनपरो मित्रै सार्ध दृश हरिणीदृशाम् ॥**
**उपरि निदधत्पश्चादादौ रुदत्पितृपादयो**
**स किल शुशुभे कीलालाक्तो विचित्रकृतिर्हरि ॥२०॥**

**अन्वय** —आदौ रुदत्पितृपादयो उपरि दृश निदधत्, पश्चात् हरिणीदृशा उपरि दृश निदधत्, मित्रै सार्ध विहसनपर, सितपरिकर, करीन्द्ररदायुध, रक्ताब्जाक्ष, कीलालाक्त स हरि विचित्रकृति शुशुभे किल ॥

**व्याख्या—सितपरिकरेति ॥ आदौ** कुवलयापीड गज द्वारि एव निहत्य, सर्वप्रथमम्। **रुदत्पितृपादयोरुपरिदृश निदधत्** रुदन्तौ पितरौ रुदत्पितरौ, रुदत्पित्रो पादौ रुदत्पितृपादौ तयोरुपरि दृश निदधत्, दृष्ट्यैव प्रणमन्। सर्वादौ पितृपादयोर्दृष्ट्यैवाऽऽदरदर्शित, करुण शान्तरसात्मको वा हरिरिति भाव। **पश्चात् हरिणीदृशामुपरि दृश निदधत्** तत्पश्चात् स्त्रीवर्गोपरि प्रेम्णा दृष्टिक्षेप कुर्वन् शृङ्गाररसप्रदर्शित, शृङ्गाररसात्मको हरिरिति भाव। **मित्रै सार्ध विहसनपर** तदा मित्रपरिवारैर्गोपै सह हास्यविलासे रतो हास्यरसोत्पादको हरिरिति भाव। **सितपरिकर** सितो बद्ध परिकर कटिर्येन स। इत्यनेन वीररसप्रदर्शितो हरि रितिभाव। 'बद्धार्जुनौ सितौ' इत्यमर। **करीन्द्ररदायुध** करी द्रस्य हस्तिनो रदो दन्त आयुध शस्त्र यस्य स। इत्यनेन अद्भुतरसोत्पादको हरिरिति भाव। **रक्ताब्जाक्ष** रक्ते अब्ज इवाऽक्षिणी यस्य स। आरक्तनयन, क्रोधात्मा रौद्ररसोत्पादको हरिरिति भाव। **कीलालाक्त** कीलालेन क्षतजेन, कुवलयापीडगजस्य रक्तेन आक्त सम्पृक्त। सर्वाङ्गेषु रक्तेन सम्पृक्तो भयानकरसप्रदर्शितो हरिरिति भाव। **स हरिर्विचित्रकृति शुशुभे किल** इह स श्रीकृष्ण एकसमयेनैवानन्यरूपेण षड्भावरहितोपि शृङ्गारादिरसोत्पादको निश्चयेन विचित्रकृति शुशुभे ॥ परिकरालङ्कार। हरिणीछन्द ॥२०॥

**कसस्य कर्तुमधिभूमि तदीयधाम्नो**
**द्वारप्रदेशमिव जिष्णुपदस्य विष्णु ॥**
**क्षिप्र विधाय सघृणो नयन च पित्रो—**
**श्चक्रे विधातुमपवारणमेव मल्लै ॥२१॥**

**अन्वय** —अधिभूमि तदीयधाम्न द्वारप्रदेश, जिष्णपदस्य द्वार-

प्रदेश कर्तुमिव, कसस्य नयन क्षिप्र विधाय, सघृणो विष्णु पित्रो नयन च, मल्लै अपवारणमेव विधातु चक्रे ।।

**व्याख्या—कसस्येति ॥ अधिभूमि** अव्ययीभावसमास । भूमौ इति अधिभूमि, इहास्मिन्नेव भूमौ । **तदीयधाम्न**, तस्य कसस्येद तदीय, तदीय धाम तदीयधाम तस्य । तस्य कसस्यैव गृहस्य । **द्वारप्रदेश** प्रवेशद्वारम् । **जिष्णुपदस्य द्वारप्रदेश कर्तुमिव** कसस्य स्वर्गारोहणाय इन्द्रपदस्य प्रवेशद्वार कर्तुमिव **कसस्य नयन क्षिप्र विधाय** कस तत्र द्वारप्रदेशे शीघ्र दत्तदृष्टि कारयित्वा **सघृणो विष्णु** कृपालु श्रीकृष्ण । **पित्रोर्नयन च** माता च पिता च पितरौ तयो पित्रोर्नयन **मल्लै** बाहुयुद्ध कृतवद्भिर्योद्धृभि । **अपवारणम् एव विधातु चक्रे** पित्रोर्दृष्टिपथो मल्लाना तिरोधानरूपेणाऽवस्तारप्रक्षेपण चकार ॥

कृपालु श्रीकृष्ण कस तु स्वगृहद्वारभूमेरुपरि एव स्वर्गगमनस्य द्वार दर्शयामास, किन्तु पित्रोर्नयनदृष्टिस्तु तस्मात् द्वारमार्गाद् यत्र नेतु तयो सम्मुखे मल्लाना जवनिका विस्तार्य तद्द्वाररूपमार्गस्य तिरोधान कृतवान् इति स्पष्ट भाव ।। वसन्ततिल्का वृत्तम् ।।२१।।

**उपासितु कण्टकभूरपि प्रभोर्विपल्लवापल्लवयत्यकेतरत् ।।**
**न विव्यथे मल्लवपु प्रहारभागतोप्यसौ बल्लवतल्लजाङ्गज ।।२२।।**

**अन्वय**—प्रभो उपासितु कण्टकभू विपल्लवा अपि अकेतरत् पल्लवयति । अत असौ बल्लवतल्लजाङ्गज अपि मल्लवपु प्रहारभाक् न विव्यथे ।

**व्याख्या--उपासितुरिति ॥ प्रभो**' ईश्वरस्य **उपासितु**, उप आस्ते इति उपासिता इति तृन् । तस्य उपासितु, उपासनायुक्तस्य । **कण्टकभू** कण्टक-युक्ता भूमि, उषरभूमिरित्यर्थ । **विपल्लवा अपि** पत्ररहितापि प्रभो कृपाप्रसादात् । **अकेतरत् पल्लवयति** सुखेन पत्रपुष्पफलयुक्ता भवति । अकेतरत् क सुख । न कम् अकम्, दु खम् । अकाद् दु खात् इतरत् अन्यत् तदेव सुखम् । **अत** एतादृशो यस्य महिमाऽ**सौ** श्रीकृष्ण । **बल्लवतल्लजाङ्गजोऽपि** बल्लवीना गोपीना तल्लजा श्रेष्ठा, स्वामिनी यशोदा इत्यर्थ । तस्या अङ्गजो पुत्र । यशोदानन्दनोऽपि । अर्थात् सुकुमारशरीरजोऽपि **मल्लवपु** मल्लवत् वपु' यस्य स, मल्लवपु व्यायाम-दृढीकृतशरीर । **प्रहारभाक् अपि** प्रहारम् आघात भजते इति । प्रहारभाक् । 'भजोण्वि' इत्यनेन भाक् । आघात सहमानोपि । न विव्यथे पीडा नान्वभवत् । अथवा मल्लस्य वपु, तस्य प्रहारान् भुङ्क्ते इति मल्लवपु'प्रहारभाक् ।

यद्यपि श्रीकृष्ण सुकोमलाया यशोदाया पुत्रत्वात् तस्या सौकुमार्य कोमलत्व च लेभे तथापि व्यायामदृढीकृतशरीरत्वात् प्रतिपक्षस्य प्रहारास्त पीडयितुमसमर्था आसन्निति भाव । वशस्थ वृत्तम् ॥२२॥

**चटचटारवसश्रवणस्फुटद्धृदि नु सौस्थ्यकृते धृतहस्तका ॥**
**किमबलास्तत एव गलज्जला ददृशिरे दृशि रेखितकज्जला ॥२३॥**

**अन्वय** —तत दृशि रेखितकज्जला अबला, चटचटारवसश्रवण-स्फुटद्धृदि सौस्थ्यकृते धृतहस्तका तत एव गलज्जला कि नु ददृशिरे ॥

**व्याख्या--चटचटेति ॥ तत** तदनन्तरम् । **दृशि रेखितकज्जला** नयने अञ्जितकज्जला **अबला** नार्य । **चटचटारवसश्रवणस्फुटद्धृदि** आसमन्तात् रव शब्द आरव । चट चट इति आरव चटचटारव तस्य सश्रवणम् आकर्णन तेन स्फुटत् भिदत् यत् हृत् तस्मिन् । चटचट इति हृदयभेदि शब्द श्रुत्वा तद्धृदयोपरि । **सौस्थ्यकृते** सौस्थ्यस्य कृते सौस्थ्यकृते । अव्ययम् । शान्तिहेतवे । **धृतहस्तका** धृतौ हस्तौ याभिस्ता । बहुव्रीह्यन्ते कप् प्रत्यय । स्थापितकरा । **तत एव** तस्मादेवकारणात् **गलज्जला** गलत् स्रवत् जल (नयनाभ्या) यासा ता । रुदन्त्य । कि नु ददृशिरे नु पृच्छायाम् । कि ता अबला रुदन्त्यो न दृष्टा ? अपितु दृष्टा इत्यर्थ ॥ 'हृदयस्वास्थ्याय स्थापितकर-भारात् स्फुटद्हृदयनिष्पन्दिरस एवाश्रुरूपात् बहिर्निर्गत ' इति हैतूत्प्रेक्षालङ्कार । द्रुत-विलम्बित वृत्तम् ॥२३॥

**चैतन्येन सम विकृष्य बहुश क्लान्त परिभ्राम्य त**
**चाणूर मनसा सहाऽश्रुपयसा सार्ध निपात्य क्षितौ ॥**
**सत्रा भोजकुलाधमस्य सहसोत्साहेन निर्मथ्य वै**
**साक दुर्यशसा सुरेन्द्रभवन श्रीमत्प्रभु प्राहिणोत् ॥२४॥**

**अन्वय** —श्रीमत्प्रभु त चाणूर चैतन्येन सम बहुश विकृष्य, त क्लान्त मनसा सह बहुश परिभ्राम्य, अश्रुपयसा सार्ध क्षितौ निपात्य, भोजकुलाधमस्य उत्साहेन सत्रा सहसा त निर्मथ्य वै, दुर्यशसा साक सुरेन्द्रभवन प्राहिणोत् ॥

**व्याख्या--चैतन्येनेति ॥ श्रीमत्प्रभु** श्रीकृष्ण **त चाणूरम्** एतन्नामान मल्लम् । **चैतन्येन सम बहुशो विकृष्य** त मल्ल बाहुयुद्धे भूरि चकर्ष,

न केवलमिद किन्तु तस्य चैतन्य चेतनामपि चकर्ष । त चेतनारहित क्लान्तमकरो दित्यर्थ । एतादृश **त क्लान्त मनसा सह बहुश परिभ्राम्य** न केवल त हतोत्साह परिभ्रामयामास किन्तु मनसा सह तस्य मनासि अपि भ्रामयामास । **अश्रु-पयसा सार्ध क्षितौ निपात्य** त भूमौ चिक्षेप, न केवल त भूमौ चिक्षेप किन्तु तस्य नेत्राभ्यामश्रूण्यप्यपातयत् । त रुदन्त चिक्षेप इत्यर्थ । **भोज-कुलाधमस्य** भोजकुले अधमो नीच, भोजकुलाधम तस्य । कसस्य । **उत्साहेन सत्रा** अध्यवसायेन सह । **सहसा त निर्मथ्य** झटिति विलोड्य, न केवल त चाणूर निर्ममन्थ किन्तु तस्य स्वामिन कसस्योत्साहमपि । **दुर्यशसा साक सुरेन्द्रभवन प्राहिणोत्** एतादृश त प्राप्तपराभव चाणूर दुष्कीर्त्यासह स्वर्ग प्रेषयामास । अस्मिन् पद्ये 'सहयुक्तेऽप्रधाने' इति सूत्रेण साक, सार्ध, सत्रा, सम, सह एतेषा साकल्येन प्रयोगेण सहार्थेन युक्ते अप्रधाने तृतीया प्रदर्शिता इति चित्रम् ॥ शार्दूलविक्रीडित वृत्तम् ॥२४॥

**दर्पन्धनमिवाहृत्य मुष्टिक बद्धमुष्टिकम ॥**
**अनायासेन कालाङ्क तालाङ्कोप्यनयद्बली ॥२५॥**

**अन्वय** —धनमिव दर्पम् आहृत्य बली तालाङ्क अपि बद्ध-मुष्टिक मुष्टिकम् अनायासेन कालाङ्कम् अनयत् ॥

**व्याख्या—दर्पमिति ॥ धनमिव** सम्पत्तिमिव, प्रमत्तस्य सपदमिव अथवा दुर्बलस्य सपत् बलिना अनायासेनैवापह्रियते तद्वत् अस्य मुष्टिकनाम्नो मल्लस्य । **दर्पमाहृत्य** अभिमान विनाश्य । **बली तालाङ्क** बलवान् रामोऽपि । 'तालाङ्को मुसली हली' इत्यमर । अपीत्यनेन यथा श्रीकृष्णश्चाणूरमवधीत् तद्वत् बलरामोपि । **बद्धमुष्टिक** बद्धो मुष्टिर्येन स तम् । मुष्टियुद्ध कृतवन्तम् । **मुष्टिक मल्लम्** । **अनायासेन कालाङ्क** कालस्य मृत्योरङ्कम् **अनयत्** । त विनाप्रयासेनैवाहन् इत्यर्थ ॥ अनुप्रासालङ्कार ॥ अनुष्टुप् छन्द ॥२५॥

**कृष्णेन तूष्णी विबुधस्तुतेन प्रधानमल्लैकनिबर्हणेन ॥**
**वशिष्ठनप्त्रेव परे परास्ता ब्राह्मेतरे सृष्टिनिदानवादा ॥२६॥**

**अन्वय** —वशिष्ठनप्त्रा ब्राह्मेतरे सृष्टिनिदानवादा परास्ता इव विबुधस्तुतेन कृष्णेन प्रधानमल्लैकनिबर्हणेन परे तूष्णीम् ॥

**व्याख्या—कृष्णेनेति ॥ वशिष्ठनप्त्रा** वशिष्ठपौत्रेण वेदव्यासकृष्णेन । **ब्राह्मेतरे** ब्रह्मण. अय ब्राह्म 'ब्राह्मोऽजातौ' इति सूत्रेण अनपत्ये अण् निपात्यते ।

'ब्राह्म हवि '। 'ब्राह्मे मुहूर्ते किलतस्य देवी ' इति वत्। अपेत्ये तु ब्रह्मणोऽपत्य ब्राह्मण । तस्मात् ब्राह्मोवादात् इतरे अन्ये। **सृष्टिनिदानवादा** सृष्टे जगत निदानम् आदिकारण तेषा वादा मतवैचित्र्याणि। अर्थात् प्रकृतिभूतानि अण्वादि कारणानि, परिणामवादा, अनीश्वरवादा इत्याद्याश्च **परास्ता**, ब्रह्मैव कारण प्रतिष्ठापनेन निराकृता इव। वेदव्यासेन जगदुत्पते कारण केवल ब्रह्मैव नत्वन्यत्, ब्रह्मैव प्रधानकारणमिति प्रतिष्ठापनेन यथा इतरे वादा निरस्ता तथैव अनेन **विबुधस्तुतेन** देवमनुष्यैर्मान्येन। विबुधा देवा पडिताश्च तै स्तुतेन ईडितेन। **श्रीकृष्णेन प्रधानमल्लैकनिबर्हणेन** प्रधानमल्लो मुख्यो मल्ल चाणूरमल्ल इति भाव, तस्य एकनिबर्हणेन केवल तस्यैव नाशनेन **परे** इतरे चाणूरभिन्ना मल्ला **तूष्णी** तेषा विषये तु मौनमेवयोग्यम् अर्थात् तेषा विनाशने पृथक् प्रयत्नमकृत्वा एव विजिता इति भाव ॥ इन्द्रवज्रा वृत्तम् ॥२६॥

**मञ्चारूढ लिहन् दृग्भ्या तञ्चापि भगिनीसुतम् ॥**
**पञ्चाप्यसूनवैत्कण्ठसञ्चारप्रवणान् खल ॥२७॥**

**अन्वय**--खल त मञ्चारूढ भगिनीसुत दृग्भ्या लिहन्नपि कण्ठसचारप्रवणान् पञ्चाप्यसून् च अवैत् ॥

**व्याख्या—मञ्चारूढमिति** ॥ **खलो** दुष्टकस । **त मञ्चारूढ** मञ्चे आरूढो मञ्चारूढ तम्। निजसिहासनसमीपे वेदी प्रत्यागतम्। **भगिनीसुत** देवकीनन्दन श्रीकृष्णम्। **दृग्भ्या लिहन्नपि** क्रोधेन दृष्ट्यैव खादन्निव पश्यन्नपि। **कण्ठसञ्चारप्रवणान्** कण्ठ एव सञ्चारस्य गमनागमनस्य प्रवण श्चतुष्पथो मार्गो येषा ते कण्ठसञ्चारप्रवणा तान्। 'प्रवण क्रमनिम्नोर्व्या प्रह्वे ना तु चतुष्पथे ' इत्यमर । 'हृदि प्राणो गुदेऽपान समानो नाभिसस्थित । उदान कण्ठदेशस्थो व्यान सर्वशरीरग '। इति अन्योन्य प्रदेशात् स्थानात् कण्ठमागतान् निज **पञ्चाप्यसून्** पञ्चप्राणान् **च** स खल कस **अवैत्** अजानात्। इण् गतौ अव+ ऐत् अवैत्। अव उपसर्गेण सह इण् अवबोधने इत्यर्थ ॥ निज पञ्चप्राणान् कण्ठे आगतान् ज्ञात्वापि अर्थात् निजमृत्यु समीपमागत जानन्नपि स खल कस भगिनीसुत श्रीकृष्ण क्रोधेन दृष्ट्यैव खादितुमैच्छत् इतिभाव ॥२७॥ अनुष्टुप् छन्द ॥

**विकोशीभविष्यन्स्वय मुक्तिमार्गा-**
**ध्वनीनश्चिरस्याहित भोजराज ॥**
**कराग्रेऽप्यसि कोशहीन व्यतानी-**
**दशवय किमस्तीशसान्निध्यलाभे ॥२८॥**

**अन्वय** --भोजराज चिरस्य स्वय मुक्तिमार्गाध्वनीन अपि विकोशीभविष्यन् चिरस्य अहित कोशहीन असि कराग्रे व्यतानीत् । ईशसान्निध्यलाभे अशक्य किमस्ति ? ॥

**व्याख्या**—**विकोशीति** ॥ **भोजराज** कस । **चिरस्य** चिरकालात् । **स्वय मुक्तिमार्गाध्वनीनोऽपि** मुक्तेर्मोक्षस्य मार्गो मुक्तिमार्ग तस्य अध्वनीनो यात्री, पथिक । चिरकालात् मोक्षम् इच्छन्मुमुक्षुरपि । **विकोशीभविष्यन्** विगत कोशो विकोश, कोशरहित । विकोश सम्पत्स्यमान विकोशीभविष्यन् । 'च्वि प्रयोग '। कोश पेशिरूपमावरणम् । आत्मावलिप्तान् अन्नमयादिपञ्चकोशान् दूरीकर्तुम् । **चिरस्याऽहितम्**, येनाऽसिना खड्गन बहुकालादद्यापिपर्यंत श्रीकृष्णस्य बाधा दूरीकरणे केनापि प्रकारेण हित न साधितम् एतादृशम् अहितम्, निष्फलम् **असिं** खड्गम्, **कोशहीन** चर्मावरणरहितम् । **कराग्रे यतानीत्** श्रीकृष्ण हन्तुमतनोत् । किङ्कारणम ? **ईशसान्निध्यलाभे अशक्य किमस्ति** ? असि वितानेनैव प्रभुणा सह युद्ध ध्रुवम् । युद्धान्मृत्यु तस्माद् ईशसान्निध्यलाभ । प्रभो सकाशे कसस्याऽसिवितान निरर्थक तदपि प्रभो सङ्गतिलाभाय मुक्तिलाभाय तदशक्य मपि तेन कृतमित्यर्थ ॥ अर्थान्तरन्यासालङ्कार । भुजङ्गप्रयात वृत्तम् ॥२८॥

**अविनयफलभोगा या तमोधोगतिस्ता**<br>
**कुमतिरपि न यायाद्भीतितो मे कृतार्थम् ॥**<br>
**इति नु तमधिरङ्ग पातित सविधर्त्तु**<br>
**तदुपरि स महात्मा विश्वकुक्षि पपात ॥२९॥**

**अन्वय** —'अविनयफलभोगा या तमोधोगति ता भीतित मे कुमति अपि न यायात्' इति नु कृतार्थम् अधिरङ्ग पातित त सविधर्तु स महात्मा विश्वकुक्षि तदुपरि पपात ॥

**व्याख्या**—**अविनयेति** ॥ **अविनयफलभोगा** अविनयस्य अन्यायस्य फलम् अविनयफल तस्य भोगोऽस्ति यस्या सा । अन्यायफलभोगदायिनी **या तमोधोगति** तमसो दुष्कृतेरधोगतिर्नरकगमनम् । ताम् अधोगतिम् । **मे कुमति रपि** का कथा सुमतेर्मे मम दुर्बुद्धिरपि । **भीतितो** भयात् कृष्णभयहेतोर्न **यायात्** न इयात् । **इति नु कृतार्थम्** एव कृत अर्थो लक्ष्य प्रयोजन वा येन स तम् । निश्चितबुद्धि कसम् । **अधिरङ्गम्** रङ्गमहोत्सवमध्ये । **पातित** सिंहासनात् भूमौ प्रक्षेपित **कसम्** । **सविधर्तु** हस्तयोर्गृहीतुम् । **स महात्मा** महामना । **विश्वकुक्षि** विश्व कुक्षौ उदरे यस्य स । विश्वोदर । **तदुपरि पपात** यद्यपि

स पामर कस तस्य जगद्व्यापकस्य जठरे पूर्वमेव सस्थित तदपि लौकिकव्यवहारार्थ स श्रीकृष्ण तस्योपरि आत्मानमपि पातयामास इति विश्वकुक्षेर्भाव ॥ मालिनी वृत्तम् । यथा ननमयय युतेय मालिनी भोगिलोकै । हेतूत्प्रेक्षा ॥२९॥

**अर गेयकीर्त्ति पर गेहमेष**
**श्रिय कसमेक न रङ्गे चकर्ष ॥**
**सतामाननात्किन्तु नेत्राच्च पित्रो-**
**श्चिरात्साधुशब्द गलद्वारिधाराम् ॥३०॥**

**अन्वय**—एष गेयकीर्त्ति रङ्गे श्रिय पर गेहम् एक कस न चकष । किन्तु सताम् आननात् साधुशब्दम्, पित्रो नेत्रात् चिरात् गलद्वारि धारा च अर चकर्ष ॥

**व्याख्या—अरमिति ॥ एष गेयकीर्त्ति** गातु योग्या गेया सदागान योग्या । गेया स्तुत्या कीर्त्तिर्यस्य स । असौ श्रीकृष्ण । **रङ्गे** तस्मिन् सभा मध्ये । **श्रिय पर गेह** लक्ष्म्या अद्वितीय शोभायुक्त गृह स्थान वैकुण्ठ प्रतीत्यर्थ । **एक कस न चकर्ष** न केवल एकम् एकाकिन कसम् अकार्षीत्, किन्तु **सताम् आननात्** सज्जनाना मुखात् । **साधुशब्दम्,** साधु साधु कृतमित्यादि वाक्प्रयोगम् । तथा **पित्रोनेत्रात् चिरात्** बहुकालात् । **गलद्वारि धारा च** गलत् स्रवत् या वारि धारा अश्रुप्रवाह तामपि **अर** द्रुतम् **चकर्ष** अहार्षीत् । कसवधात् पितरौ मुमुदे इत्यर्थ ॥ दीपकालङ्कार । अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारक-मेक स्यादनेकासु क्रियासु चेत् ॥ भुजङ्गप्रयात वृत्तम् ॥३०॥

**स्वार्थभुक्तविपदोरथ पित्रो सान्त्वनाय तनुजौ प्रणमन्तौ ॥**
**क्षेत्रवासमिव दातुमधत्ता पादबद्धनिगडे निजपाणी ॥३१॥**

**अन्वय**--अथ स्वाथभुक्तविपदो पित्रो सान्त्वनाय प्रणमन्तौ तनुजौ पादबद्धनिगडे क्षेत्रवासमिव दातु निजपाणी अधत्ताम् ॥

**व्याख्या--स्वार्थ इति ॥ अथ** कसवधादनन्तरम् । **स्वार्थभुक्तविपदो** स्वतनययो कुशलमेव स्वार्थ तेन स्वार्थेन भुक्ता सोढा विपद् कष्ट याभ्या तौ स्वार्थ भुक्तविपदौ तयो । **पित्रोर्**देवकीवसुदेवयो । **सान्त्वनाय** चित्तोपशमनाय । **प्रणमन्तौ** नमन्तौ **तनुजौ** रामकृष्णौ । तयो पित्रो **पादबद्धनिगडे** पादयोर्बद्ध यत् निगड शृङ्खला तत् पादबद्धनिगडम् तस्मिन् । पादयो कसेन बद्धाया शृङ्खला याम् इत्यर्थ । **क्षेत्रवासमिव दातुम्** सिद्धस्थानमिव, पवित्रस्थानमिव, निज-

पाणिस्पर्शेन पावित्र्य दातुम् । **निजपाणी अधस्ताम्** निजकरौ स्थापयाञ्चक्रतु । तौ बलकृष्णौ पित्रो शृङ्खला मुमुचतुरित्यर्थ । "क्षेत्र शरीरे केदारे सिद्धस्थान कलत्रयो " इति मेदिनी ॥ स्वागता छन्द । स्वागतेति रनभात् गुरुयुग्मम् ॥३१॥

**न केवल तत्र विशृङ्खलासा–**
**पित्रो पदाब्जालिरकारि ताभ्याम्** ॥
**श्लक्ष्णैर्वचोभि पुरु सान्त्वयद्भ्या**
**नेत्राम्भसा वृष्टिरपि स्वकानाम्** ॥३२॥

**अन्वय** —तत्र श्लक्ष्णै वचोभि पुरु सान्त्वयद्भ्या ताभ्या सा पित्रो पदाब्जालि न केवल विशृङ्खला अकारि। स्वकाना नेत्राम्भसा वृष्टि अपि ।

**व्याख्या—न केवलमिति** ॥ **तत्र** रङ्गे । **श्लक्ष्णैर्वचोभिर्मृदुवचनै** । **पुरु सान्त्वयद्भ्या** बहु प्रकारेण तयोश्चित्तोपशमन कुर्वद्भ्या **ताभ्या** बलकृष्णाभ्याम् । **सा पित्रोर्देवकीवसुदेवयो पदाब्जालिश्चरणकमलाना** पङ्क्ति । **न केवल विशृङ्खला अकारि** विगता शृङ्खल यस्या सा विशृङ्खला । निगडरहिता कृता । अकारि इति लुङि कर्मणि चिण् । किन्तु **स्वकाना नेत्राम्भसा** निजनेत्राश्रुणा **वृष्टिरपि** कृता ॥ तत्र रङ्गे तौ भ्रातरौ पित्रोश्चरणेभ्य शृङ्खला दूरी कृत्य तौ मृदुवचनै सान्त्वयित्वा च तयो पादान् निजाश्रुभि सिषिचतु । तावपि रुरुदतुरित्यर्थ ॥ दीपकालङ्कार ॥ उपजाति वृत्तम् ॥३२॥

**कराभ्या स्पृशन्तौ भृशन्तौ निजाङ्क कृश वर्धयन्तौ दृश तोषयन्तौ** ॥
**नृशस हत त शपन्तावनल्प यदोर्वशभूषायितौ हृष्यत स्म** ॥३३॥

**अन्वय** —कराभ्या स्पृशन्तौ, कृश निजाङ्क भृश वर्धयन्तौ, दृश तोषयन्तौ, त नृशस हतम् अनल्प शपन्तौ तौ यदोर्वशभूषायितौ हृष्यत स्म ॥

**व्याख्या—कराभ्यामिति** ॥ **कराभ्या स्पृशन्तौ** स्वतनयौ बलकृष्णौ कराभ्या प्रेम्णा स्पर्श कुर्वन्तौ । **कृश निजाङ्क भृश वर्धयन्तौ** कारागारेस्थापनात् क्षीण निजाङ्क भृशम् अत्यन्त वर्धयन्तौ हृष्टत्वात् स्वशरीर पुष्टिमत् कुर्वन्तौ । अथ च निजाङ्क भृशन्तौ 'भृशु भ्रशु अध पतने' इत्यस्मात् शत्रन्त भृशन् तौ भृशन्तौ । निजाङ्के स्वाङ्के पुत्रौ स्थापयन्तौ आलिङ्गितौ च इत्यर्थ । **कृश वर्धयन्तौ** कारावासत्वात्

क्षीणत्व गतौ। **दृशा तोषयन्तौ** अद्य पुत्रसमागमत्वात्, कसवधाच्च, दृष्ट्या मोद प्रदर्शयन्तौ। **त नृशस** क्रूर **हतम्** अद्य व्यापादित कस। **अनल्प** भूरि **शपन्तौ** गर्हितवचोभिराक्रोशयन्तौ। एतादृशौ **तौ यदोर्यदुकुलस्य भूषायितौ** भूषामिव आचरति भूषायते। इति क्यङ् तस्मात् निष्ठा। भूषायित तौ भूषायितौ। यदोर्वंशभूषणौ देवकीवसुदेवौ। **हृष्यत स्म** ममुदतु ॥ यमकालङ्कार। भुजङ्गप्रयात वृत्तम् ॥३२॥

**ब्रह्माद्या अपि हृदि यन्निदेशमाला-**
**मव्यग्र किल दधते स ईश्वरोऽपि ॥**
**कृत्याज्ञा बत समपृच्छदस्तशङ्क**
**स्वेनैवार्पितपदमुग्रसेनभूपम् ॥३४॥**

**अन्वय** —ब्रह्माद्या अपि यन्निदेशमालाम् अव्यग्र किल हृदि दधते। स ईश्वरोऽपि बत अस्तशङ्क स्वेन एव अर्पितपद उग्रसेन-भूप कृत्याज्ञा समपृच्छत ॥

**व्याख्या—ब्रह्माद्या इति ॥ ब्रह्माद्या अपि** ब्रह्मा आद्यो येषा ते ब्रह्माद्या। ब्रह्मादिदेवा अपि। **यन्निदेशमालाम्** यस्य निदेशस्याऽनुशासनस्य माला परपरा यन्निदेशमाला ताम्। **अव्यग्रम्** अव्यवधानम् यथा स्यात् तथा। **किल हृदि दधते**। यस्यानुशासनपरम्परा ब्रह्मादिदेवा अपि अव्यवच्छिन्नतया पालयन्ति। **स ईश्वरोऽपि** स श्रीकृष्ण स्वयमीश्वर, सर्वेषा स्वामी अपि ता निदेशमाला किल धत्ते। स्वय पालयतीत्यर्थ। कथम्? **बत** पश्य। **अस्तशङ्क** शङ्कारहित, कर्तुमकर्तु समर्थोऽपि। **स्वेनैवार्पितपदम्,** स्वेनैव निजेनैव, अर्पित दत्त पद राजपद यस्य स अर्पितपद तम् अर्पितदपम्। **उग्रसेनभूप** कसजनकम्। **कृत्याज्ञा समपृच्छत्** कर्तु योग्या या क्रिया सा कृत्या। प्रजापालनपरा क्रिया इत्यर्थ। "कृत्या क्रिया देवतयो स्त्रिषु भेद्ये धनादिभि" इत्यमर। कृत्याया आज्ञा निदेश कृत्याज्ञा ताम् समपृच्छत्। य उग्रसेन कसपिता राजपदे स्वय कृष्णेनैव प्रस्थापित तम् उग्रसेनराज स श्रीकृष्ण ईश्वरोऽपि कृत्याज्ञा समपृच्छत् ॥ प्रहर्षिणीय छन्द। म्नौज्रौगास्त्रिदशयति प्रहर्षिणीयम् ॥३४॥

**सत्कृत्य दिव्यवसनाभरणैर्विभुभ्या**
**प्रस्थापित स्ववसति प्रति गोपभूप ॥**
**दूरे समुज्झितमपूतमिवेशपादै**
**सिञ्चन्नयौ व्रजपथ प्रविलापवार्भि ॥३५॥**

**अन्वय** —विभुभ्या दिव्यवसनाभरणै सत्कृत्य गोपभूप स्ववसति प्रति प्रस्थापित । ईशपादै अपूतमिव दूरे समुज्झित व्रजपथ प्रविलापवार्भि सिञ्चन् ययौ ॥

**व्याख्या**—सत्कृत्येति ॥ **विभुभ्या** रामकृष्णाभ्याम् । **दिव्यवसनाभरणै**र्महार्हवस्त्रालङ्कारै **सत्कृत्य** सम्पूज्य, **गोपभूपो** नन्द । **स्ववसति** निज ग्राम व्रज प्रति **प्रस्थापित** प्रेषित । **ईशपादै** प्रभुचरणै । **अपूतमिव** अशुद्धमिव । **दूरे समुज्झित** सुदूरे त्यक्तम् । **व्रजपथ** त व्रजमार्गम् । अशुद्ध मिव य प्रति प्रभु पुनर्न गच्छतीत्यर्थ । **प्रविलापवार्भि** प्रविलापस्य वारि प्रविलापवारि रोदनाश्रूणि तै । रोदनाश्रुभि **सिञ्चन्** ययौ इति उत्प्रेक्षा । 'आपस्त्री भूम्नि वार्वारि' इत्यमर ।

यदा रामकृष्णाभ्या सत्कृतो नन्दो व्रज प्रति सम्प्रेषित तदा स रुदन् परा गच्छत् । अत्र कवि उत्प्रेक्षते । श्रीकृष्णेन अशुद्धमिव त्यक्त व्रजपथ स नन्दस्त मार्ग पवित्र कर्तुमिव निजाश्रुभि सिञ्चन् ययौ ॥ उत्प्रेक्षालङ्कार । वसन्ततिलक वृत्तम् ॥३५॥

**यस्या कटौ रोषजुषा बबन्धे**
**यशोदया लौकिकशासनाय ॥**
**तत्रैव सस्नेहमलौकिकाय**
**रज्जुर्नियोगाय तु शौरिणाऽपि ॥३६॥**

**अन्वय** —रोषजुषा यशोदया लौकिकशासनाय यस्या कटौ रज्जु बबन्धे । तत्रैव तु अलौकिकाय नियोगाय सस्नेह शौरिणा अपि ॥

**व्याख्या**—यस्यामिति ॥ **रोषजुषा** रोष जुषते इति रोषजुट् । इति क्विप् । तया रोषजुषा क्रोधयुक्तया यशोदया नन्दपत्न्या । **लौकिकशासनाय** लोके विदित लौकिकम् । 'तत्र विदित इति च' तथा 'लोकसर्वलोकाट्ठञ्' इत्यनेन तत्र विदित इत्यर्थे ठञ् । तस्य शासन निदेश तस्मै । लौकिकशासनाय । अपराधादि लौकिककर्मणि दण्डनाय । **यस्या कटौ** यस्मिन् कटिभागे । **रज्जु**र्बबन्धे दामबद्धम् । 'भावकर्मणो' इति कर्मणि आत्मनेपदम् । **तत्रैव** तस्यामेवकटौ तु **अलौकिकाय** लौकिकाद्भिन्नाय पारमार्थिकाय । **नियोगाय** अनुशासनाय । विशिष्टधर्मानुशासनहेतवे । द्विजत्वप्राप्त्यर्थमित्यर्थ । **सस्नेह** प्रेम्णा स्नेहेन सहित यथा स्यात् तथा । **शौरिणा अपि बबन्धे** पित्रा वसुदेवेनापि मेखला बद्धा । प्रभो श्रीकृष्णस्य उपनयनसस्कार कृत इतिभाव ॥ उपजाति छन्द ॥३६॥

**एकैकयाऽपि कलया दिवसस्य धीमा-**
**नेकैकका किल कला पठितु क्षमोऽपि ।।**
**षष्टचा चतुर्भिरपि तै सबलो जगाहे**
**तास्तावतीर्गुरुकुले चिरवासमिच्छन् ।।३७।।**

**अन्वय** —धीमान् दिवसस्य एकैकयापि कलया एकैकका कला पठितु क्षमोऽपि तावती पठितु गुरुकुले चिरवासम् इच्छन् सबल षष्टचा चतुर्भिरपि तै ता जगाहे ।।

**व्याख्या--एकैकयेति ॥ धीमान्** स बुद्धिमान् श्रीकृष्ण । **दिवसस्य एकैकयाऽपि कलया** दिनस्य एकैकेन विभागेन । 'अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ता कला' इत्यमर । **एकैकका कलाम्** एकाम् एका शिल्पादिविद्या । 'कला शिल्पे कालभेदे' इत्यमर । **पठितु क्षमोऽपि** । समर्थोऽपि, **तावती पठितु** तत् सख्याका कला , **गुरुकुले चिरवासमिच्छन्** यावत्कालपर्यन्त ता कला नाधीता तावत् कालपर्यन्त गुरुकुले गुरुसान्निध्ये उषितुमिच्छन्। **सबलो** बलरामसहित । **षष्ट्या चतुर्भिरपि तै ता जगाहे** यद्यपि स्वय स प्रभु चतु षष्टिकलायुक्त तदपि चतु षष्टिभिस्तै र्दिवसै ता कला अगाहे अपठत् । तासु कलासु रेमे । तेन चतु षष्टिदिवसपर्यन्त ता सकला कला अधीता इत्यर्थ ।। वसन्ततिलक वृत्तम् ।।३७।।

**एतावन्तमनेहस घ्नति करे दैत्याश्चिरजीविता**
**गीर्णं पञ्चजनेन मूर्त्तिमदकूपारोदरे तस्थुषा ।।**
**तत्कुक्षेर्यश एव कम्बुमिषतो हस्तेन गृह्णन् हरि-**
**स्तेनैकोनमपूरयद्यमपुर स्वाचार्यपुत्रोज्झितम् ।।३८।।**

**अन्वय** —एतावन्तम् अनेहस दैत्यान् करे घ्नति, अकूपारोदरे चिरञ्जीविता तस्थुषा, पञ्चजनेन गीर्ण मूर्त्तिमत् यश हस्तेन एव तत्कुक्षे कम्बुमिषत गृह्णन्, हरि स्वाचार्यपुत्रोज्झितम् एकोन यमपुर तेन अपूरयत् ।।

**व्याख्या--एतावन्तमिति ॥ एतावन्तमनेहसम्** एतावत्कालपर्यन्तम् । 'कालोदिष्टोऽप्यनेहापि' इत्यमर । **दैत्यान्** दुष्टान् **करे** हस्ते **घ्नति** नाशयति सति । अनादरे सप्तमी । 'षष्ठी चानादरे' इत्यनेन अनादराधिक्ये षष्ठी सप्तम्यौ स्त । अर्थात् अद्यकालपर्यन्त ये ये दैत्या सम्मुखे प्राप्ता तान् निजकर-

मनाहत्य येन करेण हतवान्। **अकूपारोदरे** समुद्रस्योदरे अन्तर्गर्भे **चिरञ्जीविता** चिरञ्जीवित्व, **तस्थुषा** 'ष्ठा गतिनिवृत्तौ' इति धातो भूतार्थवृत्ते क्वसु। बहुकाल तस्थौ इति तस्थिवान् तेन तस्थुषा, बहुकाल कृतनिवासेन, **पञ्चजनेन** एतन्नाम्ना दैत्येन **गीर्ण** निगलित **मूर्त्तिमत्** साकाररूपम्, तस्य दैत्यस्य हननरूपम्, **यश हस्तेन** तेनैव निजकरेण **तत्कुक्षे** तस्य पञ्चजनस्य उदरात् **कम्बुमिषत** शङ्खव्याजात् **गृह्णन्**। अर्थात् त दैत्य निहत्य तदङ्गप्रभव तस्योदरे स्थित मूर्त्तिमन्त यशोरूप पाञ्चजन्यसंज्ञ शङ्ख हस्ते गृह्णन्। **हरि** श्रीकृष्ण **स्वाचार्यपुत्रोज्झित** निजगुरो सन्दीपनर्षे पुत्रेण त्यक्तम्। त मृतपुत्र पुनरिहाऽऽनीतत्वेनेति भाव। अत एव **एकोनम्** एकेन ऊनम् एकसङ्ख्ययाऽपूर्ण **यमपुर तेन अपूरयत्** तेन दैत्येन पञ्चजनेन पूर्ण कृतवान्। त पञ्चजन निहत्य गुरुपुत्रमानीतवान् इति भाव॥ शार्दूलविक्रीडत वृत्तम्॥३८॥

**शिष्य गुरो प्रथमपक्षमनीचगम्या**
**तम्यामिवैन्दवकला विशदा स्वनिष्ठाम्॥**
**गोपीमतो स्फुटयितु तमयुङक्त दर्श-**
**नाशोदितस्य तमसोपगमाय देव ॥३९॥**

**अन्वय।**—प्रथमपक्षम् अनीचगम्या तम्या ऐन्दवकलाम् इव विशदा स्वनिष्ठा गोपी स्फुटयितुम्। दर्शनाशोदितस्य तमस अपगमाय, अत देव तु गुरो शिष्यम् अयुङक्त॥

**व्याख्या—शिष्यमिति**॥ **प्रथमपक्षम्**। अव्ययम्। साकल्यार्थेऽव्ययीभावो नपुसकत्व च। मासस्य पूर्वपक्षे। **अनीचगम्या** नीचम् अध क्षय वा। नीच गन्तु योग्या नीचगम्या, न नीचगम्या अनीचगम्या ताम्। वर्धमानाम्। यत् प्रत्यय टाप् च, **तम्याम्** ताम्यतीति तमी 'शमित्यष्टाभ्योघिनुण्' इति घिनुण्। तस्या तम्याम्, रात्रौ। शुक्लपक्षे रात्रौ वर्धमानाम्। **ऐन्दवकलामिव** इन्दो इयम् ऐन्दवी 'तस्येदम्' इति अण्। 'टिड्ढाणञ् ' इति स्त्रियाम् ङीप्। ऐन्दवी या कला सा ऐन्दवकला ताम्। चन्द्रकलामिव। **स्वनिष्ठा** निजप्रीतिम्। श्रीकृष्णस्य गोपी प्रति वर्धमाना प्रीतिरित्यर्थ। **गोपी प्रति स्फुटयितु** विशदीकर्तुम्। **दर्शनाशोदितस्य** गोपीपक्षे दर्शनस्य आशा दर्शनाशा तस्या उदितम् तस्य। **तमस** मोहस्य। कलापक्षे दर्श सूर्येन्दुसङ्गम तस्य नाशात् सङ्गमस्थानात् दूर गतत्वात् उदितस्य उत्पन्नस्य तमस अन्धकारस्य। **दर्शनाशोदितस्य तमस अपगमाय।** कलापक्षे प्रातिपदिकान्धकारनाशाय। गोपीपक्षे श्रीकृष्णस्य दर्शनाभिलाषजनितमोहस्य अपगमाय निवारणाय दूरीकरणाय। **अतो देव** इत्यस्मात्

कारणात् स श्रीकृष्ण **त गुरो शिष्य** बृहस्पतेश्छात्रम् उद्धवम् **अयुङ्क्त** नियुक्तवान् ।। श्लिष्टोत्प्रेक्षालङ्कार । वसन्ततिलक वृत्तम् ।।३९।।

**आहृत्योपनिषद्रसा सुमतिना तेन श्रवोभ्यन्तरे**
**निक्षिप्ता विरहानल शमयितु दीप्त प्रसूताततयो ।।**
**गोविन्दस्य तदीयपूर्वचरितस्मृत्येकरुद्धे हृदि**
**प्रायोऽलब्धपदा दृगम्बुकपटाद्भूयस्तदेवाश्रयन् ।।४०।।**

**अन्वय** —तेन सुमतिना प्रसूताततयो दीप्त विरहानल शमयितु उपनिषद्रसा आहृत्य श्रवोभ्यन्तरे निक्षिप्ता । गोविन्दस्य तदीयपूर्वचरितस्मृत्येकरुद्धे हृदि अलब्धपदा प्राय दृगम्बुकपटात् भूय तदेव आश्रयन् ।।

**व्याख्या—आहृत्येति ॥ तेन सुमतिना** बुद्धिमता, उद्धवेन । **प्रसूताततयो** पित्रोर्यशोदानन्दयो । **दीप्त विरहानल शमयितुम्** श्रीकृष्णवियोगाज्जनित प्रदीप्त विरहाग्निशमनार्थम् । **उपनिषद्रसा आहृत्य** प्रभोर्विरहाज्जाता प्रवृत्तिपराऽज्ञानमयी या अविद्या ता दूरीकर्तुम्, आत्मपरमात्मभेदे या वेदार्थतत्वविवेचनपरा ता एव उपनिषद तासा रसा सारभूता निष्कर्षा । आहृत्य साकल्येन विभक्त कृत्वा । **श्रवोभ्यन्तरे** तयो कर्णाभ्यन्तरे **निक्षिप्ता** । उद्धवो वेदान्ततत्वविवेचनानि तौ यशोदानन्दौ अश्रावयदिति भाव । परञ्च ते उपनिषद्रसा **गोविन्दस्य** श्रीकृष्णस्य । **तदीयपूर्वचरितस्मृत्येकरुद्धे** तस्य श्रीकृष्णस्य इद तदीय तदीय पूर्वचरित तदीयपूर्वचरित तस्य स्मृति स्मरण तया एकया केवलया रुद्ध व्याप्त तस्मिन् । **हृदि** । प्रभो श्रीकृष्णस्य पूर्वलीलास्मरणेन व्याप्ते हृदि । **अलब्धपदा** न लब्ध पद स्थान यै ते । तत्राऽन्तरे हृदि स्थान न प्राप्य ते उपनिषद्रसा **प्रायो दृगम्बु कपटात्** नयनाश्रुव्याजात् । अश्रुरूपेण नयनाभ्या बहिर्निसृता । **भूय तदेवाश्रयन्** पुनरेव बाह्यत हृदयमेवाश्रयन् । हृदयोपरितस्थुरित्यर्थ ।

स उद्धवस्तयोर्यशोदानन्दयो सान्त्वनार्थम् उपनिषदस्तत्वविवेचनेन प्रयत्नशीलोऽपि तस्य श्रीकृष्णस्य पूर्वचरितस्मृतिजनित तयो रोदन हर्तुमसमर्थो बभूव इति भाव ।। अतद्गुणालङ्कार । यथा तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुण ।। शार्दूलविक्रीडित वृत्तम् ।।४०।।

**मध्येकृत्य भ्रमरकमर नैरपेक्ष्य प्रकाश्य**
**श्रीकान्तेन प्रहितमहितध्वसनव्यग्रितेन ।।**

**ऊचुर्दूत सुकृतनिवहै पूतमाकूतगर्भ**
**गोप्य सोप्यस्खलितमशृणोदश्रुणोत्क्लिन्नचक्षु ॥४१॥**

**अन्वय** —अहितध्वसनव्यग्रितेन श्रीकान्तेन प्रहित, सुकृतनिवहै पूत, आकूतगर्भ, दूत गोप्य भ्रमरक मध्ये कृत्य, नैरपेक्ष्य प्रकाश्य अरम् ऊचु । अश्रुणोत्क्लिन्नचक्षु सोऽपि अस्खलितम् अशृणोत् ॥

**व्याख्या—मध्येकृत्येति ॥ अहितध्वसनव्यग्रितेन** अहिताना शत्रूणा ध्वसन विनाशन तस्मिन् व्यग्रित आसक्त तेन। 'व्यग्रो व्यासक्त आकुले' इत्यमर । व्यग्र सजात इति व्यग्रित । 'तदस्य सञ्जात तारकादिभ्य इतच्' इत्यनन इतच् प्रत्यय । शत्रुनिपीडने दत्तचित्तेन। **श्रीकान्तेन** श्रीकृष्णेन **प्रहित** प्रेषितम्। **सुकृतनिवहै पूत** सुकृताना सौभाग्याना निवह समूह तै पूत पवित्र शोभनमित्यर्थ, पुन **आकूतगर्भम्** आकूत आशयो गर्भे अन्तर्मनसि यस्य तम् आकूतगर्भम् आश्चर्ययुक्तम् अथवा प्रच्छन्नाशय यथा स्यात् तथा। **दूतम्** उद्धव प्रति। **गोप्यो** व्रजवध्व । **भ्रमरक** भ्रमर। **मध्येकृत्य** 'मध्येपदे निवचने च' इति गतिसज्ञा। भ्रमर मध्यस्थ कृत्वा, भ्रमरस्य द्वारा ऊचुरित्यर्थ । **नैरपेक्ष्य प्रकाश्य** निरपेक्षस्य भाव नैरपेक्ष्यम्। इति ष्यञ्। निरासक्ति प्रकटीकृत्य। **अर** द्रुतम् **ऊचु**। **अश्रुणोक्लिन्नचक्षु** अश्रुणा उत्क्लिन्ने आर्द्रे चक्षुषी यस्य स । अश्रुपूर्णनेत्र स उद्धवोपि **अस्खलितम् अशृणोत्** गोप्युक्त समग्र शुश्राव ॥

शत्रुनिर्दलने व्यग्रत्वात् तत्र व्रजे स्वय गन्तुमसमर्थेन श्रीकान्तेन गोपीना कुशल माहर्तु पृष्टु वा प्रेषित दूत प्रति गोप्यो भ्रमर मध्यस्थ कृत्वा ऊचु । यथा श्रीकृष्ण स्वय नागत तथैव ता अपि नैरपेक्ष्य दर्शयन्त्यो भावगर्भ भ्रमरमध्यस्था ऊचु इति भाव ॥ मन्दाक्रान्ता छन्द । मदक्रान्ता जलधि षडगैर्म्भौ नतौ तात् गुरुचेत् ॥ यमकानुप्रासालङ्कार ॥४१॥

**श्रीमन्नुद्धव तुभ्यमानतिशत भूय कदायास्यति**
**श्रीकृष्णो वद गोकुल प्रति वय तत्सङ्गतेराशया ॥**
**त्रातु तद्विरहादसून्जिगमिषून्श्रीवज्रहस्ताञ्जगत्-**
**धात्रीन्नित्यमुपास्महे व्रजजुष कात्यायनी प्रागिव ॥४२॥**

**अन्वय**—हे श्रीमन्नुद्धव! तुभ्य भूय आनतिशतम्। वद श्रीकृष्ण गोकुल प्रति कदा यास्यति? तत्सङ्गते आशया वय व्रजजुष तद्विरहात् जिगमिषून् असून् त्रातु श्रीवज्रहस्ता जगद्धात्री कात्यायनी प्रागिव नित्यम् उपास्महे ॥

**व्याख्या—श्रीमन्निति ॥ हे श्रीमन् उद्धव ।  तुभ्य भूय** पुन पुन , **आनतिशत** आनते शत आनतिशतम् । 'स्त्रिया क्तिन्' इत्यनेन क्तिन् प्रत्यय । आनति । तुभ्य गतशो नमस्कारा सन्तु । किन्तु **वद श्रीकृष्णो गोकुल प्रति कदा यास्यति** आगमिष्यति। **तत्सङ्गतेराशया** तस्य समागमेच्छया । **वय व्रजजुष** । 'जुषी प्रीति सेवनयो' व्रज जुषन्ते इति व्रजजुष । इति क्विप् । वय व्रजगोप्य । **तद्विरहात्** तस्य श्रीकृष्णस्य वियोगात् **जिगमिषून् असून् त्रातुम्,** गन्तुम् इच्छन्ति जिगमिषन्ति इति सन्नन्तम् । तस्मात् 'विन्दुरिच्छु' इत्यनेन उ प्रत्यय । तान् जिगमिषून् । अस्माक गन्तुमिच्छून् प्राणान् रक्षितुम् । **श्रीवज्रहस्ता** वज्रेण शोभितहस्ताम् **जगद्धात्री** जगन्मातर **कात्यायनी प्रागिव नित्यमुपास्महे** । श्रीकृष्ण पतिभावेन प्राप्तु यथा पूर्व सा उपासिताऽस्माभि, तद्वत् अधुनाऽपीत्यर्थ ॥ शार्दूलविक्रीडित छन्द ॥४२॥

**भो श्रीमदुत्धव दया वद यादवेश**
**सन्तुष्य किञ्चिदुपलब्धविलेपनेन ॥**
**कुब्जातनौ किमखिला सुरभि व्यलिम्पत्**
**पित्रोरपि स्मरति यन्न परे तु दूरे ॥४३॥**

**अन्वय**---भो श्रीमत् उद्धव । दया वद कि कुब्जा (अस्य) तनौ अखिला सुरभि व्यलिम्पत् यत् किञ्चिदुपलब्धविलेपनेन सन्तुष्य यादवेश पित्रो अपि न स्मरति परे तु दूरे ॥

**व्याख्या--भो इति ॥ भो श्रीमत् उद्धव ! दया वद** अस्मदुपरि दया कुरु, तथा करुणया एतत् कथय । **किं कुब्जा** कसदासी **अखिला सुरभिं** सुगन्धम् अस्य श्रीकृष्णस्य **तनौ** शरीरे **व्यलिम्पत्** समालम्भनेनाभ्यषिञ्चत् । यत् यस्मात् कारणात्, **किञ्चिदुपलब्धविलेपनेन** उपलब्ध प्राप्त विलेपन अभ्यञ्जन चन्दन, तेन । **सन्तुष्य** अल्पमात्रम् अङ्गराग प्राप्य तेनैव सन्तुष्टोऽसौ **यादवेश** श्रीकृष्ण । **पित्रोरपि न स्मरति**। 'अधीगर्थदयेशा कर्मणि' इत्यनेन पित्रोरिति कर्मणि षष्ठी । यत् स **पित्रोर्य**शोदानन्दयोरपि न स्मरति । **परे तु दूरे** अन्येषा-मस्मदादिकाना का कथा ते तु दूरे सन्ति ॥ वसन्ततिल्का वृत्तम् ॥४३॥

**आ ज्ञात किल मोऽधुनाऽऽधुनिकवन्मूढोयमोयत्स्वय**
**कृष्णाद्दूरपथागतिश्रमपरामर्शेन रुष्टादपि ॥**
**कारुण्यन्नतु मूल्यवन्निखिलमप्याहृत्य सूनु गुरो**
**प्रायच्छत्कथमन्यथाऽतिकठिन सोऽपि ह्युपेक्षेत न ॥४४॥**

**अन्वय** —अधुना आ ज्ञात यत् स मूढ यम आधुनिकवत् दूरपथागतिश्रमपरामर्शेन रुष्टादपि स्वय कृष्णात् नून निखिलमपि कारुण्य मूल्यवत् आहृत्य गुरो सूनु प्रायच्छत् । अन्यथा अतिकठिन सोपि न कथ हि उपेक्षेत ।।

**व्याख्या—आज्ञातमिति ॥ अधुना आ ज्ञातम्** इदानी विदितमिद ननु सर्वमेवास्माभि । 'आ प्रगृह्य स्मृतौ वाक्येऽप्यास्तुस्यात्कोपपीडयो' इत्यमर । 'निपात एकाजनाङ्' इत्यनेन प्रगृह्य सज्ञा । **यत् स मूढो यमो** मन्दबुद्धिर्यमराज । **आधुनिकवत्** अधुना सद्य एव भव आधुनिक । 'कालाट्ठञ्' तद्वत् आधुनिकवत् । अनेन यमेन लौकिकजनवत् न तु देवतावत् । **दूरपथागतिश्रमपरामर्शेन रुष्टादपि कृष्णात्** दूरपथात् आगति आगमन तस्या श्रम तत्य परामर्श असहिष्णुत्व तेन । सुदूरदुर्गमपथागमनश्रमस्याऽसह्यत्वेन रुष्टादपि स्वय कृष्णात् । **निखिल कारुण्य मूल्यवत् आहृत्य** वणिक्भावेन क्रयविक्रयवत् स्वय प्रभो श्रीकृष्णात् तस्य समग्र कारुण्य प्राप्य, तस्मै **गुरो सूनु प्रायच्छत्** गुरुपुत्र ददौ । **अन्यथा अतिकठिन सोऽपि न कथ हि उपेक्षेत** अत समग्र कारुण्य यमाय दत्वा कारुण्याभावात् अतिकठिनता गत स श्रीकृष्णो न अस्मान् अन्यथा कथ उपेक्षेत, स तु कृपालुरेव इति भाव ।। शार्दूलविक्रीडितम् ॥४४॥

**विद्वन्नुद्धव शुद्धवस्तुकथन वाग्युद्धवद्व्याकुली-**
**कर्तु प्रारभसे मन कथमिद लब्ध कुतो दैशिकात् ।।**
**तुभ्य त्वद्गुरवेऽपि भो नम इद याभ्या सुधर्माश्रय**
**कुर्वद्भ्यामपि तुल्यमेव विहित गीर्वाणसशीलनम् ।।४५।।**

**अन्वय** —हे उद्धव ! शुद्धवस्तुकथन वाग्युद्धवत् मन व्याकुली-कर्तु प्रारभसे । कथमिद लब्धम्, कुतो दैशिकात् लब्धम् । भो विद्वन् ! तुभ्य त्वद्गुरवेपि इद नम । याभ्या सुधर्माश्रय कुर्वद्भ्या-मपि गीर्वाणसशीलन तुल्यमेव विहितम् ।।

**व्याख्या—विद्वन्निति ॥ हे उद्धव । शुद्धवस्तुकथन** सरलाशय-कथनम् । **वाग्युद्धवत् मन व्याकुलीकर्तु प्रारभसे** वाण्या युद्ध कर्तु प्रवृत्तस्य जनस्य वचनमिवेद **कथ भाषसे,** तेनाऽस्माक मन विह्वलत्व नयसि । न व्याकुल, व्याकुल सपद्यमान त कर्तु व्याकुलीकर्तुम् । कृ योगे च्वि । **कथमिद लब्धम् , कुतो दैशिकाल्लब्धम्** एतत् प्रकारस्य भाषण कथ तथा कस्माद्गुरोरधीत त्वया । तस्मात्

**भो विद्वन्** अक्रूर ! **तुभ्य त्वद्गुरवेऽपि इद नम** अस्तु । इति काकु । **याभ्या** गुरुशिष्याभ्या **सुधर्माश्रय कुर्वद्भ्याम्** देवसभाश्रय कुर्वद्भ्यामपि । "स्यात्सुधर्मा देवसभा" इत्यमर । उद्धवस्य गुरुर्बृहस्पतिर्देवसभापण्डित इति भाव । **गीर्वाणसशीलन** गीर्वाणाना देवाना सशीलन सेवा **तुल्यमेवविहित** समानमेव कृतम् । उद्धवपक्षे सुधर्माश्रय सुष्ठु धर्म सुधर्म तस्य आश्रय सेवन सुधर्माश्रय तम् । तुल्यमेव विहितम् वेदशास्त्र जानन्नपि भवान् वाग्विवेचने देवाना प्रिय एवेति भाव ॥ शार्दूलविक्रीडत वृत्तम् ॥ ४५ ॥

**दूरादुद्धव चिद्घनात्मविषये वार्ता जहीहि द्रुत**
**मास्मिन् गीष्पतिशिष्यता प्रकटय स्त्रीणा समाजे यत ॥**
**एता काननचारिधेनुवशगश्रीकान्तपादाम्बुजा-**
**श्लिष्यत्कण्टकशर्कराकुलहृदि द्वैराज्यमुद्बिभ्रति ॥४६॥**

**अन्वय**—हे उद्धव ! चिद्घनात्मविषये वार्त्ता दूरात् द्रुत जहीहि । अस्मिन् स्त्रीणा समाजे गीष्पतिशिष्यता मा प्रकटय । यत एता काननचारिधेनुवशगश्रीकान्तपादाम्बुजाश्लिष्यत्कण्टकशर्करा-कुलहृदि द्वैराज्यम् उद्बिभ्रति ॥

**व्याख्या—दूरादिति ॥ हे उद्धव ! चिद्घनात्मविषये वार्ता द्रुत जहीहि** ब्रह्मण चिद्घनात्ममयीं वार्ता शीघ्र त्यज । चित् चैतन्यस्वरूप घन निरन्तर शश्वतस्थितम् आत्मा क्षेत्रज्ञ एतेषु विषयेष्वहोऽपि नैव कर्तव्य । जहीहि इति 'ओहाक् त्यागे' इत्यस्मात् लोटो मध्यमपुरुषस्यैक वचनम् । 'आचहौ' इति सूत्रेण आत् स्यात । चात् इदीतौ । जहाहि, जहीहि, जहिहि । **अस्मिन् स्त्रीणा समाजे** स्त्रीवृन्दसम्मुखे **गीष्पतिशिष्यता** बृहस्पतिशिष्यत्व पाण्डित्य **मा प्रकटय** न प्रकाशय । किं कारणम् ? **यत एता** वार्त्ता । **काननचारिधेनुवशगश्रीकान्तपादा-म्बुजाश्लिष्यत्कण्टकशर्कराकुलहृदि** कानने चरन्ति ता धेनव तासा वशगो वशीभूतोऽनुगो य श्रीकान्त तस्य पादाम्बुजे आश्लिष्यन्त्य आलिङ्गयन्त्य या कण्टकशर्करा ताभिराकुल दु खित यासा हृत् तस्मिन् । **द्वैराज्य** द्वयो राज्ञोर्भाव द्वैराज्यम् तत् । द्वयो स्वामिनो स्वामित्वम् **उद्बिभ्रति** दधति । स्थापयन्तीत्यर्थ । किन्तु एष स्त्रीसमाज तु एकम् एकमेव स्वामिन श्रीकृष्ण जानाति न तु अन्यमिति भाव ॥ शार्दूलविक्रीडित वृत्तम् ॥४६॥

**बीजावाप इवोखरे हविरिवानल्पेऽपिभस्मोच्चये**
**रेखेवाम्भसि दम्भसिद्धपुरुषे कर्मेव शास्त्रोदितम् ॥**

**सत्यग्रे व्यभिचारगीरिव गिरौ पर्जन्यधारेव वा**
**ज्ञान नोपकरिष्यते सुमतिनाप्युप्त त्वयाऽस्मद्धृदि ।।४७।।**

**अन्वय**—ऊखरे बीजावाप इव, अनल्पेपि भस्मोच्चये हविरिव, अम्भसि रेखा इव, दम्भसिद्धपुरुषे शास्त्रोदित कर्म इव, सत्यग्रे व्यभिचारगी इव, वा गिरौ पर्जन्यधारा इव, ( तद्वत् हे उद्धव ! ) त्वया सुमतिना अपि अस्मत् हृदि उप्त ज्ञान न उपकरिष्यते ।।

**व्याख्या—बोजावापेति ॥ ऊखरे बीजावाप इव** । बीजस्य आवापो वपनम्, यथा ऊषराया भूमौ उप्त बीज नाङ्कुरयति तद्वत् । **अनल्पेऽपि भस्मोच्चये हविरिव** प्रभूताया रक्षाया सहतौ यथा हविर्हवनीय हविरन्न न ज्वलति तद्वत् । **अम्भसि रेखेव** यथा जले रेखा न उल्लिख्यते तद्वत् । **दम्भसिद्धपुरुषे शास्त्रोदित कर्मेव** यथा कपटात् सिद्धत्व निर्वृत्तत्व प्रदर्शिते पुरुषे शास्त्रविहित कर्म न वसति तद्वत् । **सत्यग्रे व्यभिचारगीरिव** सत्या सच्छीलाया स्त्रिया अग्रे व्यभिचारभाषा निष्फला भवति तद्वत् । **वा । गिरौ पर्जन्यधारा इव**, यथा पर्वतशिखरे पर्जन्यधारापातो न प्रभवति, तद्वत् हे उद्धव ! **त्वया सुमतिना** बुद्धिमतापि **अस्मद् हृदि उप्त ज्ञान नोपकरिष्यते** अस्मदुपकार कर्तु न प्रभविष्यतीत्यर्थ ॥ मालोपमालङ्कार । शार्दूलविक्रीडित छन्द ।।४७।।

**त्यक्त्वा श्रीकृष्णयोग त्वमथ वससि कि नो परत्राभिगम्य**
**कैवल्य न्यासि धुर्यैरुपदिशसि कथ चिज्जडग्रन्थिमोक्षम् ।।**
**अस्माक त्वाह मुग्धोद्धव युवतिसख कञ्चुकीग्रन्थिमोक्ष**
**नीवीमोक्ष च मोक्ष प्रभुकरविहित मन्मथाचार्यवर्य ।।४८।।**

**अन्वय**—अथ त्व धुर्यै न्यासि, परत्राभिगम्य कैवल्य श्रीकृष्णयोग त्यक्त्वा कि नो वससि । चिज्जडग्रन्थिमोक्ष कथम् उपदिशसि । हे मुग्ध ! अस्माक युवतिसख तु स मन्मथाचार्यवर्य प्रभुकरविहित कञ्चुकीग्रन्थिमोक्ष नीवीमोक्ष च मोक्ष आह ।।

**व्याख्या—त्यक्त्वेति ॥ अथ त्वम्**, हे उद्धव ! त्व स्वयमेव धुर्यैन्यासि श्रेष्ठैर्विद्वद्भि प्रतिपादितम् उपदिष्टम् । आस उपवेशने, लुङ्कर्मणि चिण् । **परत्राभिगम्य** परलोकाभिगमनीयम्, **कैवल्य** मोक्ष **श्रीकृष्णयोग त्यक्त्वा** साक्षात्

मोक्षरूप श्रीकृष्णसङ्गति विहाय **कि नो वससि** कि न वर्तसे। **चिज्जडग्रन्थि-मोक्ष कथम् उपदिशसि** चित्पदार्थस्य जडपदार्थेन सह यो ग्रन्थि तस्य मोक्ष विसर्जनम्। चिज्जडात्मकबन्धनामुक्तिप्राप्त्यर्थम् अत्र अस्मान् कि उपदिशसि। **हे मुग्ध**! हे बालिश! कामशास्त्रानभिज्ञ! शृणु। **अस्माक युवतिसख तु** युवतीना सखा युवतिसख। 'राजाह सखिभ्यष्टच्' इत्यनेन टच्। न स्त्रीजनाना सखा सुहृत् तु **स मन्मथाचार्यवर्य** मन्मथ काम तम् आचारयतीति मन्मथाचार्य तेषा वर्य श्रेष्ठ। कामक्रीडाया श्रेष्ठ स श्रीकृष्ण। **प्रभुकरविहित कञ्चुकी-ग्रन्थिमोक्ष नीवीमोक्ष च मोक्षम् आह** कञ्चुक्या ग्रथिर्बन्धन तस्य मोक्ष विसर्जन, प्रभुकरेणैव कृत यदस्माक कञ्चुकीग्रन्थिविसर्जन नीवीविसर्जन चैव स श्रीकृष्णोऽस्माक मोक्ष वदति न त्वन्यम्। विरोधालङ्कार। लक्षण च। विकल्पस्तुल्यबलयोविरोधश्चातुरीयुत॥ स्रग्धरावृत्तम्॥४८॥

**सम्प्रश्न परिपृच्छ हृच्छयवश पौराङ्गनामण्डले**
**त धूर्त्त सुमते क्व ते नु दिवसास्ता वा क्षपा सम्प्रति॥**
**येष्वस्मत्सदनेष्वनुक्षणमुपक्षिप्तो हठात्कन्दुको**
**यास्वेतै करजैर्वने मृदुपदोर्निष्कासिता कण्टका॥४९॥**

**अन्वय**—हे सुमते! पौराङ्गनामण्डले हृच्छयवश त धूर्त्त सम्प्रश्न परिपृच्छ। ते दिवसा सम्प्रति क्व, वा, ता क्षपा क्व नु, येषु अस्मत् सदनेषु अनुक्षण हठात् कन्दुक उपक्षिप्त। वा यासु वने एतै करजै मृदुपदो कण्टका निष्कासिता॥

**व्याख्या—सम्प्रश्नमिति॥ हे सुमते** उद्धव! **पौराङ्गनामण्डले हृच्छय वश** हृदि शेते इति शय 'अधिकरणे शेते' इति सूत्रेण अच् प्रत्यय। हृच्छयो मनसिज काम तस्य वश अङ्कित तम्। मथुरापुर्यां वर्तमानाया स्त्रीवर्गाणा मण्डले समूहे त कामाभिलषित **धूर्त्त** कुटिल श्रीकृष्ण **सम्प्रश्न परिपृच्छ**। पृच्छा कुरु **ते दिवसा सम्प्रति क्व** अधुना कुत्रगता? **वा** अथवा **ता क्षपा** रात्रय **क्व नु**?। **येषु** दिवसेषु तेन **हठात् अस्मत् सदनेषु** गृहाभ्यन्तरेषु। **अनुक्षण** क्षणे क्षणे। **कन्दुक उपक्षिप्त** प्रक्षिप्त। **वा** अथवा **यासु** रात्रिषु **वने**—कानने विचरत्सु। **एतै करजै** अस्मत् एतैर्नखैर्**मृदुपदो** तस्य मृदुचरणयो। **कण्टका निष्कासिता** द्रुमाङ्गा उद्धृता। सूक्ष्मालङ्कार॥ सलक्षितस्तु सूक्ष्मोर्थ आकारेणेङ्गितेन वा कयापि सूच्यते भङ्ग्या॥ शार्दूलविक्रीडित वृत्तम्॥४९॥

**कि भाषणेन बहुना मतिमन्मुकुन्द**
**गत्वाधुना कथय नाथ यथा सुख भो ॥**
**नित्य रमस्व वशग पुरसुन्दरीणा**
**चेत पर प्रहिणु नोऽपहृत त्वयेति ॥५०॥**

**अन्वय** —हे मतिमन्! बहुना भाषणेन किम्? अधुना मुकुन्द गत्वा कथय। 'भो नाथ! पुरसुन्दरीणा वशग यथा सुख नित्य रमस्व, पर त्वया उपहृत न चेत प्रहिणु' इति ॥

**व्याख्या--किमिति ॥ हे मतिमन्** उद्धव! **बहुना भाषणेन किम्?** अलमेवातिभाषणेन। साध्यन्नास्तीत्यर्थ। **अधुना मुकुन्द गत्वा कथय** त श्रीकृष्ण प्रति अस्माक सन्देश निवेदय। **भो नाथ! पुरसुन्दरीणा वशगो** वश गच्छतीति वशग। 'गमेर्ड' डित्वसामर्थ्यादभस्यापिटेर्लोप। **यथासुख नित्य रमस्व** क्रीड। पर च त्वया **न** अस्माक **चेतो** मन **उपहृत** हरण कृत तत् **प्रहिणु,** यद्स्माक हृत् त्वया बलान्नीत तत् परावर्तय। प्रहिणु इति हि गतौ वृद्धौ च। 'हिनुमीना' इत्यनेन उपसर्गात्परस्य नस्य ण स्यात्। परिवृत्तिरलङ्कार समन्यूनाधिकैर्विनिमय परिवृत्ति ॥ वसन्ततिलका छन्द ॥५०॥

**इत्यादिदु सहवियोगसदुक्तिजात**
**सानन्दमीलितदृशा व्रजबल्लवीनाम् ॥**
**गूढाशयेन कमनीयमनीयतेद**
**भक्तोत्तमेन नमनीयपदाब्जमिभ्यम् ॥५१॥**

**अन्वय** —सानन्दमीलितदृशा व्रजबल्लवीनाम् इत्यादिदु सहवियोग सदुक्तिजात गूढाशयेन कमनीयम् इद भक्तोत्तमेन नमनीयपदाब्जम् इभ्यम् अनीयत ॥

**व्याख्या—इत्यादीति ॥ सानन्दमीलितदृशा व्रजबल्लवीनाम्,** सानन्द मीलिते दृशौ यासा ता सानन्दमीलितदृश तासाम्। श्रीकृष्णस्य स्मरणमात्रेणैवानन्दान्निमीलिताक्ष्णा गोपीनाम्। **इत्यादिदु सहवियोगसदुक्तिजातम्** इति यथापूर्व कथित सैवास्ति आदि इत्यादि। दु खेन सोढु शक्यो यो वियोग, दु सहवियोग। इत्यादिर्दु सहवियोग इत्यादिदु सहवियोग तेन या सदुक्ति सुवचन तस्या जात तत्। तत्। **गूढाशयेन कमनीय** गूढो गुप्तो यो आशयोऽभिप्राय' तेन। कमनीय

मिति 'कमुकान्तौ' कान्ति इच्छा सौन्दर्य च तस्य अनीयर् प्रत्यय । गूढार्थेन प्रदर्शितमनोभिप्राय इत्यर्थ । **इद** सदेशवचनम्, **भक्तोत्तमेन** तेन उद्धवेन । उद्धव श्रीकृष्णस्यानन्यभक्त इति भाव । **नमनीयपदाब्ज** नमितु योग्य नमनीय, नमनीय पदाब्ज चरणकमल यस्य स तम् । **इभ्य** स्वामिन श्रीकृष्णम् **अनीयत** निनाय । 'इभ्य आढयो धनी स्वामी' इत्यमर । स उद्धवस्तु तासा विरहाकुलाना गोपीना गूढार्थेन प्रदर्शितवियोगसन्देश तम् ईश्वर श्रीकृष्ण निनायेति भाव । नीधातुर्द्विकर्मक । यमकालङ्कार ॥ वसन्ततिलका वृत्तम् ॥५१॥

**स्वैर वै रङ्गभूमावपि हृदयदरीसज्ञिताया न तेषा**
**वैर यैरन्तरात्त सह रतिपतिना य स्थिरोऽनेकरूप ॥**
**सैरन्ध्रीकामपूर्त्ति व्यधित गुरुतरैर्विभ्रमैरञ्जितात्मा**
**नैरन्तर्येण नैर गुणमतिघृणया निम्नगत्व दधत् स ॥५२॥**

**अन्वय** —यै रतिपतिना सह अन्त वैर आत्त तेषा हृदयदरी-सज्ञिताया रङ्गभूमौ अपि य अनेकरूप न स्थिर । नैरन्तर्येण अतिघृणया नैर गुण निम्नगत्व स्वैर दधत् स गुरुतरै विभ्रमै रञ्जितात्मा सैरन्ध्रीकामपूर्ति व्यधित वै ॥

**व्याख्या—स्वैरमिति** ॥ यैर्जनै **रतिपतिना** मदनेन **सह अन्त** मनसि **वैर** द्वेष **आत्त** स्वीकृतम् । अर्थात् ये विषयवासनापराङ्मुखा तेषा जितकामानाम् । **हृदयदरीसज्ञिताया** हृदयमेव दरी कन्दरा हृदयदरी, हृदयदरीति या सज्ञिता कथिता तस्याम् । हृदयस्य दरीसाम्यत्वेन तस्या गह्वरत्व गहनत्व ध्वन्यते । गहनाया हृदयरूपिण्या **रङ्गभूमौ** क्रीडास्थाने । अथ च हृद हृदयस्य अयदरी शुभावह गहनस्थान गुप्तस्थान च । 'अय शुभावहो विधि' इत्यमर । अर्थात् जितकामाना भक्ताना शुभावहे पर च निगूढे हृदयरूपिणि क्रीडास्थाने अपि । अपीत्यनेन भक्तमानसमेव तस्य क्रीडास्थान तस्मिन्नपि, **य** प्रभु **अनेकरूप** मत्स्यकच्छाद्यनेक रूपधारी । अर्थात् तेषा तेषा जितकामाना भक्ताना मानसे तेषामभिलषितरूपेण निवास कुर्वन्नपि **न स्थिर**, न स्थैर्य भाक्, किन्तु **नैरतर्येण** सदा सर्वकालम् **अतिघृणया** महत्या दयया **नैर** नीरस्य जलस्य भाव नैरम् । भावे अण् । जलसम्बन्धिन **गुण** द्रवीभूत तस्मात् **निम्नगत्वम्** अध प्रदेशानुसरणत्व **स्वैर दधत्** 'मन्दस्वच्छन्दयो स्वैर' इत्यमर । स्वैर यथा स्यात् तथा स्वच्छन्देन दधत् धारयन् । अत स्वच्छन्द प्रकृतिस्वभावात् **स** हरि **गुरुतरै**र्महद्भि**र्विभ्रमै**र्विलासै, **रञ्जितात्मा** रञ्जितोऽनुरागयुक्त आत्मा यस्य स । वशीकृतचित्त सन् **सैरन्ध्रीकामपूर्तिं** सैरन्ध्या

दास्या कुब्जाया कामपूर्ति मनोभिलषितपूरण ताम् **व्यधित** अकरोत् **वै** निश्चये ॥ स्रग्धरा वृत्तम् ॥५२॥

**अक्रूरयादवस्यालञ्चक्रुरक्रूरकर्मण ॥**
**रामकृष्णोद्धवा गेहम्पुरुषार्था इव त्रय ॥५३॥**

**अन्वय**—त्रय पुरुषार्था इव रामकृष्णोद्धवा अक्रूरकर्मण अक्रूरयादवस्य गेहम् अलञ्चक्रु ॥

**व्याख्या—अक्रूरेति॥ त्रय पुरुषार्था** धर्मार्थकामा इव **रामकृष्णोद्धवा** । **अक्रूरकर्मण** न क्रूर कठिन कर्म यस्य स अक्रूरकर्मा तस्य अक्रूरकर्मण, सत्पुरुषस्य । **अक्रूरयादवस्य** अक्रूरनाम्नो यदो**र्गेहम् अलञ्चक्रु** भूषयामासु । 'अल भूषणपर्याप्ति' इत्यमर ।

त्रयो बलरामकृष्णोद्धवा पूर्वे दत्तवचनानुसारेण तस्य अक्रूरयादवस्य गृह गत्वा धर्मार्थकामै तस्य मनोरथ पुपुषु इत्यर्थ । अनुष्टुप् छन्द ॥५२॥

**पञ्चस्वाप्त द्विरुक्तामनुजनितनुजेष्वाशु वैषम्यबुद्धि**
**सान्धत्व पुत्रलोभादपि हृदि धृतराष्ट्रत्वमाबिभ्रत तम् ॥**
**राजान सोन्धकाग्र्य सुमतिरपि कथ ग्राहयेद्राजमार्ग**
**यच्चाऽसौ तत्र लेभे न विषमपतन सोऽयमीशप्रसाद ॥५४॥**

**अन्वय**—स अन्धकाग्र्य सुमतिरपि, पुत्रलोभात् अपि सान्धत्वम् आप्तम्, हृदि धृतराष्ट्रत्वम् आबिभ्रतम्, (तथा) पञ्चसु अनुजनितनुजेषु द्विरुक्ता वषम्यबुद्धिम् आशु आप्तम्, त राजान, राजमार्ग कथ ग्राहयेत् । यत् च असौ तत्र विषमपतन न लेभे सोऽयम् ईशप्रसाद ॥

**व्याख्या—पञ्चस्विति॥ सोऽन्धकाग्र्य** अन्धकानाम् अन्धकुले जातानाम् अग्र्य श्रेष्ठ, अक्रूर । **सुमतिरपि** स्वय सुचेत सुज्ञोपि । **पुत्रलोभादपि सान्धत्वम् आप्तम्** अपीत्यनेन यो राजा धृतराष्ट्रो जन्मान्ध तदपि पुत्रलोभात् राज्य स्वपुत्रस्य दुर्योधनस्यैव भवतु नान्यस्येतिलोभात् मोहान्धत्वेन व्याप्तम् । **हृदि धृतराष्ट्रत्वम् आबिभ्रत** राष्ट्रस्य जनपदस्य भावो राष्ट्रत्वम्, धृत राष्ट्रत्व धृतराष्ट्रत्व तत् । पुन स्वहृदये राजभाव भावयन्तम् । तथा **पञ्चस्वनुजनितनुजेषु** अनुपश्चात् जनिर्जन्म यस्य स अनुजनि, अनुजने तनुजा पुत्रा तेषु, कनिष्ठभ्राता पण्डु तस्य

युधिष्ठिरादिषु पञ्चपुत्रेषु । **आशु** शीघ्रमेव । **द्विरुक्ता** द्वाभ्यामुक्ता द्विरुक्ता ताम्, द्विधाभावेन व्याप्ताम्, **वैषम्यबुद्धिम् आप्तम्** शत्रुत्वबुद्धिमापन्नम् । **त राजान** त वैचित्र्यवीर्य नाम्ना धृतराष्ट्र त नृपति प्रति । **राजमार्ग कथ ग्राहयेत्** सुपथ सन्मार्ग कथम् अनुसारयेत्, न कथञ्चित्, अन्धस्तु मार्गभ्रष्ट एवेति भाव । **यच्च** न केवलमिद किन्तु **असौ** अक्रूर **तत्र** दुर्योधनादिदुष्टजनैर्व्याप्ताया हस्तिनापुरि **विषमपतन न लेभे सोऽयमीशप्रसाद** स्वयमेव विपत्तौ नापतत् सैव प्रभुकृपा ।। स्रग्धरा ।।५४।।

इति श्रीमता वत्सगोत्रान्तर्गतेन काळेकुलोत्पन्नेन श्रीदुण्ढिराजरामचन्द्रशास्त्रिणा कविवरेण विरचितस्य भागवतव्यञ्जनस्य तस्यैव कविवरस्य पौत्राभ्या गोविन्दकाशीनाथ शर्मभ्या कृताया व्यञ्जनसुबोधिनीव्याख्याया चतुर्थोल्लास ।।

**॥ दशमस्कन्धे व्यञ्जनस्य पूर्वार्धभाग समाप्तिमगात् ॥**

---

# महाकविढुण्ढिराजशास्त्रिविरचितम्

# श्रीमद्भागवतव्यञ्जनम्

## उत्तरार्धभागः प्रारभ्यते

---

## अथ पञ्चमोल्लासः

**आकर्ण्य जामातुरुदन्तमुच्चै रुदन्तमोष्ठे पुरु दन्तपङ्क्तिम् ।।**
**दधानमाजौ मगधेन्द्रमुत्क निवारयेत्प्रौढ उदन्तभाक्क ।।१।।**

**अन्वय**—जामातु उदन्तम् आकर्ण्य, उच्चै रुदन्त पुरु दन्तपङ्क्तिम् ओष्ठे दधानम्, आजौ उत्क, मगधेन्द्र क प्रौढ उदन्तभाक् निवारयेत ।।

**व्याख्या—आकर्ण्येति ॥ जामातुरुदन्तमाकर्ण्य** जरासन्धस्य अस्तिप्राप्तीति द्वे दुहितरौ कसस्य महिष्यौ आस्ताम् । ताभ्या जामातु कसस्य उदन्त वधवृत्तान्त श्रुत्वा । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्त स्यात्' इत्यमर । **उच्चै रुदन्त** महता शब्देनाक्रन्दमानम् । उच्चैरुदन्त मिति 'रोरि' इत्यनेन रेफस्य लोप । **पुरु दन्तपङ्क्तिम् ओष्ठे दधान** क्रोधेन अधरोष्ठे दशनान्भूरि स्थापयन्तम् । क्रोधाविष्टमित्यर्थ । **आजौ उत्कम्** उन्मनसम् । रणभूमौ युद्ध कर्तु सन्नद्धम् । **मगधेन्द्रम्** एतादृश जरासन्धम् । **क प्रौढोऽ**नुभवयुक्त । **उदन्तभाक्** उदन्त वृत्तान्त भजते इति उदन्तभाक् 'भजोण्वि' इत्यनेन ण्वि । कर्तव्याकर्तव्यनिश्चायकोऽनुभवी पुरुष । **निवारयेत्** तमवरोद्धु समर्थोभवेत् । न कोपि । स महापराक्रमीति भाव । यमकालङ्कार । उपजाति वृत्तम् ।।१।।

**श्रीकृष्णतोषजननी पुरमब्धिमध्ये**
**नून भविष्यदुदयामिति यातुकामा ।।**
**सैन्येन सागरनिभेन जरासुतस्य**
**मध्येकृताऽतिशुशुभे मथुरा प्रधृष्या ।।२।।**

**अन्वय**—या मथुरा जरासुतस्य सागरनिभेन सैन्येन मध्येकृता प्रधृष्या अतिशुशुभे, सा अब्धिमध्ये आगरनिभेन यातुकामा, सैन्येन अप्रधृष्या श्रीकृष्णतोषजननी पुर नून भविष्यत् उदयाम् इति ॥

**व्याख्या—श्रीकृष्णतोषमिति** ॥ **या मथुरा**नगरी अद्य **जरासुतस्य** मगधेन्द्रस्य **सागरनिभेन सैन्येन** समुद्रसदृशविस्तीर्णानीकेन । **मध्येकृता** परिवेष्टिता, **प्रधृष्या** आक्रान्तु योग्या **अतिशुशुभे** वर्तते स्मेत्यर्थ । **सा** सैव मथुरा-नगरी । **अब्धिमध्ये** समुद्रवलयाङ्किता इत्यर्थ । **आगरनिभेन** आगरो भाण्डारो रत्नादीना समूह तस्य निभेन सौन्दर्येण । **यातुकामा** यातु गन्तु कामयते, इष्टु प्रेरयते सा यातुकामा, सुन्दरी दर्शनीया इत्यर्थ । **सैन्येन अप्रधृष्या** शत्रुभिरा-क्रान्तुमशक्या । **श्रीकृष्णतोषजननी पुर** श्रीकृष्ण सर्वतयानन्ददायिनीं द्वारका-रूपिणीं नगरीं । **नून** निश्चयेन **भविष्यत्** (अव्ययम्) आगामिनिसमये **उद्याचक्रे**। अय गतौ इत्यस्मात् 'दयायासश्च' इत्यनेन लिटि आम् ॥

मथुरानगरी आगामिकाले द्वारकारूपेण समुद्रवलयाङ्कितत्वप्राप्त्यर्थं यद्यपि शत्रुभि सद्योपि जेतुमशक्या तथापि समुद्रवलयाङ्कितत्वाभावात् तद्वैगुण्य निराकर्तुमिव सागर-तुल्येन जरासन्धसैन्येन परिवेष्टिता अभावदूरीकरणात् अतीवशोभा दधार इति भाव । वसन्ततिलका वृत्तम् ॥२॥

**धिक् शार्ङ्ग धिगिषून् धिगस्तु च गदा धिक् चक्रमुत्थापित**
**दोष्णौ धिक् बिरुद च धिग्यदुकुले जन्मापि सम्भाविते ॥**
**क्षुद्रादप्यरिसङ्कटान्निजजनस्त्रातो मया नाद्य चे-**
**दित्थ प्रौढमभाषताग्रजमन प्रोत्साहयन्केशव ॥३॥**

**अन्वय**—शार्ङ्ग धिक्, इषून् धिक्, गदा च धिक्, दोष्णौ धिक् उत्थापित चक्र च धिक्, बिरुद च धिक्, सम्भाविते यदुकुले जन्म अपि धिक् अस्तु। चेत् अद्य मया क्षुद्रादपि अरिसङ्कटात् निजजन न त्रात । इत्थम् अग्रजमन प्रोत्साहयन् केशव प्रौढम् अभाषत ॥

**व्याख्या—धिगिति** ॥ **शार्ङ्ग** मुरारे श्रीकृष्णस्य धनु तत् **धिक्**। **इषून्** बाणाश्च धिक् । **गदा धिक्** । **दोष्णौ** बाहू अपि धिक् तथा **उत्थापित चक्र च** धिक् । **बिरुद** यशश्च धिक् । **सम्भाविते** सुप्रसिद्धे कीर्तिमति **यदुकुले** यन्मम **जन्म** तदपि धिक् । एते सर्वे धिक् निन्दनीया एव। **चेत्** यद्यर्थे । यदि **अद्य मया क्षुद्रा**दल्पा**दप्यरिसङ्कटान्निजजन** स्वपरिवारो **न त्रातो** न रक्षित । **इत्थम्**

एतत् धिक्कारेण। **अग्रजमन** अग्रजस्य बलरामस्य मन **प्रोत्साहयन्** युद्धायोत्साहेन वर्धयन्। **केशव** श्रीकृष्ण । **प्रौढमभाषत** प्रगल्भवचनमवदत् ।। शार्दूलविक्रीडित वृत्तम् ।।

**समराय पुराद्विनिर्ययावमराभैर्यदुभि सहाऽजित ।।**
**तमरातिमधिक्षिपन्नयैर्न जराजीवनृप भयादिति ।।४।।४।।**

**अन्वय** —अजित अमराभै यदुभि सह तम अराति जराजीवनृप नयै अधिक्षिपन् पुरात् बहि समराय निर्ययौ, भयान्नेति ।।

**व्याख्या--समरायेति ॥ अजितो** जेतुमशक्य अजेय इत्यर्थ श्रीकृष्ण । **अमराभै** अमराणाम् आभा इव आभा येषा ते अमराभा तै, देवसदृशै**र्यदुभि**र्यादवै **सह। तम् अरातिम्** मथुरा सर्वत परिवेष्टय गमनागमनमार्गं निरोधयन्त शत्रुम्। **जराजीवनृप** जरया राक्षस्या जीवो जराजीव स चासौ नृपश्च तम्। जरासन्धम्। **नयै**र्नीतियुक्तवचनै । **अधिक्षिपन्** भर्त्सयन्। **समराय** युद्ध कतु 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इत्यनेन चतुर्थी । **पुरात् बहिर्निर्ययौ** मथुरापुर्या बहिर्विशेषतया निर्जगाम । **भयान्नेति** न तु तस्य भयात्। भयग्रस्तत्वात् नगराद् बहिर्न जगाम प्रत्युत पौराणा युद्धजन्यहानिर्माभूदिति हेतोरेव बहिर्नगरात् युद्ध कर्तुं स गत इति भाव ।। वियोगिनी वृत्तम् । लक्षणन्तु विषमे ससजगा समे च सभरलगा ।।४।।

**सरुद्धाष्टशताधिकद्वयुतदिक्प्रान्तावगाहिक्षमा-**
**पाल कालसमोऽहमोष्ठगलितक्षीरार्द्रदेहस्य ते ।।**
**योद्धु सन्निधिमावहेयमथचेद्भोश्छद्मराशे तदा**
**स्वाङ्गुल्याऽभिमृशेद्वृथा श्रमवती मह्य ललाट जरा ।।५।।**

**अन्वय** — सरुद्धाष्टशताधिकद्वयुतदिक्प्रान्तावगाहिक्षमापाल ओष्ठगलितक्षीरार्द्रदेहस्य ते कालसम अहम् अथ चेत् ते सन्निद्धि योद्धुम् आवहेयम्, तदा भो छद्मराशे! मह्य श्रमवती जरा स्वाङ्गुल्या ललाट वृथा अभिमृशेत् ।।

**व्याख्या--सरुद्धेति ॥ संरुद्धाष्टशताधिकद्वयुतदिक्प्रान्तावगाहिक्षमापाल** दिक्प्रान्तेषु नाना दिशासु अवगाहितु शील येषा ते (वसन्ति ते)

दिक्प्रान्तावगाहिन ते च क्षमापालाश्च दिक्प्रान्तावगाहिक्षमापाला । 'सुप्य जातौ 'इत्यनेन ताच्छील्ये णिनि । सरुद्धा बन्दिन कृता अष्टशताधिकद्वयुत दिक्प्रान्तावगाहिक्षमापाला येन स । एतद्दशोऽहमस्मि । पुन । **ओष्ठगलित-क्षीरार्द्रदेहस्य ते** स्तनन्धयत्वेन ओष्ठात् गलित क्षीर दुग्ध तेन आर्द्रो देहो यस्य स तस्य । स्तनन्धयबालस्य ते तव । **कालसमो** मृत्युसदृशोऽन्तकोऽहमस्मि । **अथ चेत्** अस्यामेव परिस्थित्या यद्यह **ते सन्निधि** तव सन्निकर्षणम् अर्थात् त्वया सह **योद्धुमावहेयम्** युद्ध कुर्याम् । आह्वाने लिङ् प्रयोग । **तदा** तर्हि **भो छद्मराशे** हे कपटप्रवीण ! **श्रमवती जरा** आयासकारिणी जराराक्षसी ययाऽह जीवित इति भाव । **मह्य** मदर्थम् । तादर्थ्ये चतुर्थी । **स्वाङ्गुल्या** स्वपञ्चशाखेन **ललाट वृथा अभिमृशेत्** निरर्थक स्पृशेत् ।

अह तव साक्षात् मृत्यु । अत स्तनन्धयेन बालेन इव त्वया सह मम युद्धमपि निरर्थकम् । यतोऽनेन कर्मणा या जरा मम जीवदानेन श्रमाणा साफल्य प्राप सैवाऽबुद्ध-बालहत्या कुर्वता मयाऽयशस्विनी कृता इति भाव । शार्दूलविक्रीडित छन्द ॥५॥

**बाढ दुर्नयवारिधे वदसि यद्रुद्धा क्षमामेव येऽ-**
**सेवन्ताविरत घटस्व समरे श्रद्धापराचेन्मयि ॥**
**योऽह मातृसनाभिमप्यतिमद हत्वा प्रकुर्वन्मही**
**जानिन्तज्जनक तयोर्द्वयमपि क्षत्यै द्विषा नाश्रये ॥६॥**

**अन्वय**—हे दुर्नयवारिधे ! यद्वदसि रुद्धा, बाढम् । ये क्षमामेव अविरतम् असेवन्त (ते रुद्धा) । मयि अपरा श्रद्धा चेत् समरे घटस्व । य अतिमद मातृसनाभि हत्वा तज्जनकमपि महीजानि प्रकुर्वन् अह द्विषा क्षत्यै तयो द्वयमपि नाश्रये ॥

**व्याख्या— बाढमिति ॥ हे दुर्नयवारिधे** ! दुर्नयस्य अविनयस्य वारिधि समुद्र तत्सबोधनम् । **यद्वदसि** यत् आत्मप्रौढि कथयसि **रुद्धा** इति **बाढम्**, तत् सत्यमपि अलम् । किं ? **ये क्षमामेव अविरतमसेवन्त** ये राजान त्वया बद्धा ते अविरत यथा स्यात् तथा स तत नम्रीभूतत्वादेव रुद्धा, ते नरवीरसिंहा न इत्यर्थ । **मयि अपरा श्रद्धा चेत्** यदि त्वम् इह आजौ मा बालिशाद्भिन्नम्, वीर मन्यसे तर्हि **समरे घटस्व** तव पौरुष युद्धे प्रकटीकुरु । घट चेष्टायाम् । पुनश्च शृणु, **योऽतिमद** मदोन्मत्त **मातृसनाभिमपि** मम मातु समाना नाभिर्यस्य स तम्, मम मातु सपिण्ड भ्रातर कस **हत्वा तज्जनकमपि** तस्य पितर उग्रसेन **महीजानि**

महीं पृथ्वी जाया यस्य स महीजानिः तम्। नृपतिम्। 'जायाया निङ्' इत्यनेन निङ् प्रत्ययः। **कुर्वन् अहम्, द्विषां क्षत्यै तयोर्द्वयमपि नाश्रये** कंसोग्रसेनयोर्मध्ये द्वयमपि उभावपि द्विषां शत्रूणां क्षत्यै नाशार्थं नाश्रये न याचे। अपकृतोपकृतयोरेकमप्यहं शत्रुनाशार्थं सहायार्थं न आश्रये। शत्रुनाशार्थं स्वस्याश्रयमेवाहं गृह्णामि नान्यस्येति भावः। शार्दूलविक्रीडितं छन्दः ॥६॥

**इत्थं परस्परपराभवकाम्ययोक्ति-**
**प्रत्युक्तिसूक्तिरचनैव तयोश्चिराय ॥**
**उद्ग्रीवता प्रवहतोरपि युद्धकर्म-**
**क्षिप्रोदयस्य विहतेरिह हेतुरासीत् ॥७॥**

**अन्वयः**—इत्थम् उद्ग्रीवतां प्रवहतोः अपि तयोः चिराय परस्परपराभवकाम्यया उक्तिप्रत्युक्तिसूक्तिरचना एव इह युद्धकर्मक्षिप्रोदयस्य विहतेः हेतुरासीत् ॥

**व्याख्या—इत्थमिति ॥ इत्थम्** एवं यथापूर्वं कथितम्। **उद्ग्रीवतां प्रवहतो** उद्गता उन्नता ग्रीवा कंधरा यस्मिन् कर्मणि तत् उद्ग्रीवम्, तस्य भावः उद्ग्रीवता। भावे तल् स्त्रियाम्। ताम् उद्ग्रीवताम्, प्रवहतोर्धारयतोरपि। **तयोः** कृष्णजरासन्धयोः। उन्नतग्रीवयाहंकारेण ग्रीवामुन्नयतोर्भाषमाणयोरित्यर्थः। **चिराय परस्परपराभवकाम्यया** चिरकालादन्योन्यस्य पराजयेच्छया। **उक्तिप्रत्युक्तिसूक्तिरचना** भाषणप्रतिभाषणसद्भाषणानां सुवर्णवाक्ययोजनेनैव, **इह** अत्र रणाङ्गणे **युद्धकर्मक्षिप्रोदयस्य** युद्धस्य कर्म युद्धकर्म, क्षिप्रः शीघ्रमुदयो यस्य स क्षिप्रोदयः। युद्धकर्मणः क्षिप्रोदयः तस्य। युद्धकर्मणः शीघ्रपरिणामस्य। **विहतेर्हेतुरासीत्** नाशस्य कारणं बभूव। तयोश्चिराय भाषणप्रतिभाषणेन युद्धस्य शीघ्रपरिणामस्य विलम्बं जनयामास इति भावः॥ वसन्ततिलका छन्दः ॥७॥

**निषङ्गान्निःसङ्गः स्वविषयमिव प्राक्परिहरन्**
**गुणं तूर्णं गृह्णन्सुजन इव दुःसूचक इव ॥**
**लगन्कर्णे क्षिप्रं द्रुतमथ पतन्घातुक इव**
**द्विषन्मध्येऽविध्यत्कुचर इव कृष्णेषुनिकरः ॥८॥**

**अन्वयः**—अथ निःसङ्गः स्वविषयमिव कृष्णेषुनिकरः निषङ्गं प्राक् परिहरन्। सुजन इव गुणं तूर्णं गृह्णन्। दुःसूचक इव कर्णे क्षिप्रं लगन्। घातुक इव द्रुतं पतन्। कुचर इव द्विषन्मध्ये अविध्यत्॥

**व्याख्या—निषङ्गमिति** ॥ अथ अनन्तरम्। **निसङ्ग स्वविषयमिव** यथा सर्वसङ्गपरित्यागी योगी स्वविषयम्, इन्द्रियै भोग्यजातानि नाना वस्तूनि परिहरति त्यजति तद्वत् **कृष्णेषुनिकर** कृष्णस्य बाणसमूहो **निषङ्ग प्राक् परिहरन्** तूणीर त्वरया पूर्व त्यजन्। **सुजन इव गुण तूर्ण गृह्णन्** यथा सुजन सुधो गुणान् झटिति गृह्णाति तद्वत् स बाणसमूहो गुण मौर्वा द्रुत सयुजन्। **दु सूचक इव कर्णे क्षिप्र लगन्** यथा दु सूचको दुर्जन कर्णान्तिके क्षिप्र सङ्गच्छते तद्वत् श्रीकृष्णेषुनिकर आकर्णादाकृष्ट सन् कर्ण स्पृशन्। **घातुक इव द्रुत पतन्** यथा घातुको नृशस छिद्रम वेषयन् पतति तद्वत् द्रुत पतन। **कुचर इव दुष्ट इव द्विषन्मध्ये** शत्रूणा मध्ये **अविध्यत्** स बाणसमूह शत्रुपातमकरोत् ॥श्लिष्टोपमालङ्कार ॥ शिखरिणी छन्द ॥८॥

**सङग्रामाध्वरदीक्षित क्षितितल सङ्कर्षण कर्षणै**
**शुद्धीकर्तुमिवासकृद्गुरुतर पाणौ दधानो हलम् ॥**
**प्राशु यूपमिवोद्वहन्मुसलमप्याहत्य कोपानल**
**प्रज्वाल्याशु समूलघातमवधीत्पश्वायितान्त्सैनिकान् ॥९॥**

**अन्वय**—सङग्रामाध्वरदीक्षित सङ्कर्षण पाणौ गुरुतर हल दधान क्षितितलम् असकृत्कर्षणै शुद्धीकर्तुमिव। कोपानल प्रज्वाल्य, यूपमिव प्राशु मुसलम् उद्वहन् पश्वायितान् सैनिकान् आशु आहत्य समूलघातम् अवधीत् ॥

**व्याख्या—सङ्ग्रामेति** ॥ **सङ्ग्रामाध्वरदीक्षित** सङ्ग्रामो युद्धमेव अध्वरो याग तस्मिन् दीक्षितो दीक्षायुक्तो यजमान। सङ्कर्षण य एक मातृगर्भात् देवक्या जठराद् अन्योदरे रोहिण्योदरे स्वयमेव कर्षित। तस्मात् कर्षणशील, सङ्कर्षणो बलराम, सम्यक् कर्षतीति सङ्कर्षण 'नन्दिग्रहिपचादिभ्योल्युणिन्यच' इत्यनेन ल्यु, तस्य अनादेश। **पाणौ गुरुतर हल दधान** हस्ते सुबहुगुरुतर लाङ्गल धारयन्। **क्षितितल** भूपृष्ठम्। **असकृत्** पुन पुन **कर्षणै**र्लाङ्गलविलेखनै **शुद्धीकर्तुमिव** अशुद्ध शुद्ध सम्पद्यते त कर्तुमिव इति 'च्वि'। यथा दीक्षितो यजमान समिधुकर्षणेन स्थण्डिल शुद्ध करोति तद्वत् सङ्ग्रामाध्वरदीक्षितो बलरामो वेदिमिव सङ्ग्रामभूमि हलकर्षणै शोधयामास इत्यर्थ। **कोपानल प्रज्वाल्य** कोप क्रोधमेव अग्नि प्रज्वाल्य प्रबोध्य। स्वय क्रुद्धो भूत्वा इत्यर्थ। **यूपमिव** अध्वरे बलिपशुबन्धनाय य स्तम्भ स यूप तमिव, तत्सदृश **प्राशु मुसलम् उद्वहन्** निजमुन्नत मुसलम् उत्सार्य। **पश्वायितान्** आचारार्थे सुबन्तात् क्यङ्, पशुमिवाचरति

पश्वायते, तस्मात् भावे क्त, पश्वायते इति पश्वायित तान्, पशुतुल्यान् सैनिकान्, **आशु आहत्य** द्रुत विजित्य। **समूलघातम् अवधीत्** आमूलाग्र हतवान्। समूलघातमित्यत्र 'समूलाक्कतर्जीवेषु हन् कृञ् ग्रह' तथा 'कषादिषु यथा विध्यनुप्रयोग' इत्यनेन कर्मणि समूलशब्दात् हन्तेर्णमुल्॥ परम्परितरूपकमलङ्कार॥ शार्दूलविक्रीडित वृत्तम्॥९॥

**वाजीभस्यन्दस्य व्रजमिह शिरसा सद्भटै सत्कृताना**
**रत्नाना दीप्तिभाजा निचयमपि च यो बिभ्रती पारिबर्हम्॥**
**रक्ता भेजेऽनुरक्त क्षतजनवधुनीर्योषित पोषितास्ता**
**उत्पाद्यानन्तदोर्भ्या न स कथमुदधिर्गर्ज्जतु स्वर्जितेष्ट॥१०॥**

**अन्वय**—इह वाजीभस्यन्दनस्य व्रजम्, अपि च सद्भटै सत्कृताना दीप्तिभाजा रत्नाना निचय, पारिबर्ह शिरसा बिभ्रती, रक्ता, पोषिता, क्षतजनवधुनी, योषित य अनुरक्त उदधि भेजे, स स्वर्जितेष्ट ता अनन्तदोर्भ्याम् उत्पाद्य कथ न गजतु?॥

**व्याख्या—वाजीति॥ इह** अत्र रणकदने सङ्ग्रामभूमौ। **वाजीभस्यन्दनस्य व्रजम्**, वाजी च इभश्च स्यन्दनश्च एतेषा समाहार वाजीभस्यन्दन तस्य। एतेषा गजाश्वरथाना **व्रज** समूहम्। **अपि च सद्भटै** सत्सैनिकै **सत्कृतानाम्**, निज निजाङ्गेषु धार्यमाणानाम्। **दीप्तिभाजा रत्नाना** देदीप्यमानाना रत्नाना च **निचय** समूहम्। एतादृश **पारिबर्ह शिरसा बिभ्रती**। अश्वाद्यै काञ्चन रत्नयौतकयुता सालङ्कृता इत्यर्थ। **रक्ता** रक्ताज्जातत्वात् लोहिना। अथ च स्त्रीस्वभावात् नवोढत्वादनुरक्ता, लज्जयाऽऽरक्ता इत्यर्थ। **पोषिता** सन्तत विपुलरक्तप्रवाहेण पूरिता, अथ च सौस्थ्यात् पुष्टाङ्गा इत्यर्थ। एतादृशी **क्षतजनवधुनी** क्षतात् व्रणात् जात क्षतज रक्त तस्य नवा नवीना धुय सरित ता। सैनिकाना व्रणोद्भवा रक्तसरित ता एव **योषितो** नववधू, रक्तरूपिणीर्नवोढा इत्यर्थ। **य उदधिरनुरक्तो भेजे** य सागरो विषयासक्तो बभूव, तासा प्राप्त्यर्थ माकृष्टो बभूवेत्यर्थ। **स स्वर्जितेष्ट** अर्जित प्राप्तम् इष्ट येन स, अर्जितेष्ट, सुष्ठु अर्जितेष्ट स्वर्जितेष्ट। सुचारुरूपेण इच्छित प्राप्त स उदधि। **ता अनन्तदोर्भ्याम् उत्पाद्य** न अन्तो ययोर्दोषोर्बाह्वो ताभ्याम्। ता रक्तसरिद्वधूरनन्तहस्ताभ्या गृहीत्वा। आलिङ्ग्येति भाव। **कथ न गर्जतु** हर्षेण कथ न निनदेत्? इति काकु। निनदेदित्यर्थ॥ काकुर्ध्वनिविशेष। स्रग्धरा वृत्तम्॥१०॥

मिति भाव **बीजमेव वपत स्म । इति मन्ये ।** मुक्तो जरासन्ध पुन पुनर्युद्धार्थ-मागमिष्यतीति भाव ॥ हेतूत्प्रेक्षालङ्कार । उपजाति छन्द ॥१२॥

**दु ख जाग्रत्तदस्ति प्रथममथ कथ प्राप्तिरित्थ प्रदिष्टा**
**हा दिष्टेनापरस्याप्यचिरमिति भृश स्वाभिधानानुरूपम् ॥**
**तन्वन्त्यौ दुर्विलाप जनकमपि सुते खेदयामासतुस्तत्-**
**चित्र कार्याधिरूढा यदिह किल गुणा सश्रयन्ति स्म हेतुम् ॥१३॥**

**अन्वय**—हा ! तत् प्रथम दु ख जाग्रत् 'अस्ति'। अथ अपरस्यापि अचिर 'प्राप्ति'। इत्थ दिष्टेन कथ प्रदिष्टा ? इति स्वाभिधानानुरूप दुर्विलाप भृश तन्वन्त्यौ सुते जनकमपि खेदयामासतु । यत् इह कार्याधिरूढा गुणा हेतु सश्रयन्ति स्म तत् चित्र किल।

**व्याख्या—दु खमिति ॥** आस्ताम् 'अस्तिप्राप्ती' जरासन्धस्य द्वे दुहितरौ कसस्य महिष्यौ। अस्मिन् पद्ये अस्तिप्राप्तिशब्दाश्रयेणार्थान्तरम उत्प्रेक्षते कवि ।

**हा!** इति खेदे। **तत् प्रथम दु खम्,** प्रथममित्यनेन भर्तु कसस्य वधात्समुद्भूत वैधव्यस्य राज्यापहरणस्य च दु ख **जाग्रदस्ति** सदादृष्टिपथे वर्तते।**अथ** तस्योपरि पुन **अपरस्याप्यचिर 'प्राप्ति'।** अपरस्य अन्यदु खस्यापि, पितुर्जरासन्धस्य पुन पुन पराभवाज्जनितदु खस्यापि 'प्राप्ति' द्रुत लाभ । **इत्थ दिष्टेन कथ प्रदिष्टा** इत्थ द्वयो प्रकारयोर्दुर्भाग्यम्, 'अस्तिप्राप्ति'रूपिणी दु खसहति दैवेन कथ प्रदत्ता ? प्रदिष्टा इति दिश अतिसर्जने इत्यस्मान्निष्ठा। **इति स्वाभिधानानुरूप दुर्विलाप भृश तन्वन्त्यौ सुते** स्वस्याऽभिधान नाम तस्यानुरूपम् 'अस्तिप्राप्ति रूपम्', अस्तीत्यनेन निजवैधव्यस्य दु खम्, प्राप्तिरित्यनेन पितु पराभवात् प्राप्त दु खम्, इति अस्तिप्राप्तिमय परिदेवन भृश तन्वन्त्यौ, रुदन्त्यौ कन्यके इत्यर्थ । **जनक** जरासन्धमपि **खेदयामासतु** दु ख जनयामासतु । **यदिह कार्याधिरूढा गुणा हेतुम् आश्रयन्ति तत् चित्र किल** कार्याधिरूढा कार्यानुजाता गुणविशेषा अत्र कारणाश्रयिणो वर्तन्ते। अत्र कार्योत्पन्नोगुण कारणगुणमेव अध्यास्ते अन्यथा कारणात् कार्यस्योत्पत्ति, अत्र इति वैचित्र्य खलु। कन्ययो परिविलपनरूपकार्या-त्समुद्भूत हेतुरूप जरासन्धस्य खेदमितिभाव ।

कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासालङ्कार । स्रग्धरा वृत्तम् ॥१३॥

**यावद्रोधनतत्परो यदुपुरी भूयो बलैर्मागध-**
**स्तावत्प्राप जवेन कालयवनोऽप्यन्याय्यवृत्तस्तत ॥**
**नाम्नोऽस्यादिमवर्णयुग्मकथित किंवान्त्यवर्णद्वय-**
**प्रोक्त वस्तु भजेत वृष्णिकुलमित्यासीद्विभुर्व्याकुल ॥१४॥**

**अन्वय**—यावत् मागध बलै यदुपुरी भूय रोधनतत्पर, तावत् अन्याय्यवृत्त कालयवनोऽपि जवेन प्राप। तत वृष्णिकुलम्, अस्य नाम्न आदिमवर्णयुग्मकथित कि वा अन्त्यवर्णद्वयप्रोक्त वस्तु भजेत, इति विभु व्याकुल आसीत् ॥

व्याख्या--**यावदिति** ॥ **यावत् मागधो** जरासन्ध । **बलै** सैन्यै, **यदुपुरीं भूयोरोधनतत्पर** मथुरापुरी पुनश्च रोद्धुमुद्युक्तोऽभूत्। **तावत्** तस्मिन्नेवसमये। **अन्याय्यवृत्त** न्यायाद् अनपेत न्याय्यम्। 'धर्मपथ्यथन्यायादन पेते' इत्यनेन 'यत्'। न न्याय्यम् अन्याय्यम्, अनीतियुक्त वृत्त चरित्र यस्य स। "वृत्त पद्ये चरित्रे त्रिष्वतीते दृढनिश्चले" इत्यमर। दुश्चरित्र **कालयवनोऽपि जवेन प्राप** कालयवननामा यवनोपि बलै सह मथुरा धर्षितु वेगेनाऽऽजगाम। **तत** ताभ्या मागधयवनाभ्या धर्षण दृष्ट्वा। **वृष्णिकुल** सकल यदुकुलम्। **अस्य** काल यवनस्य। **नाम्नो**ऽभिधानस्य। **आदिमवर्णयुग्मकथित वस्तु भजेत** अस्य नाम्न आद्यद्वया क्षरेण 'काल' 'इत्यनेन' कथित वस्तु, अर्थात् त काल नाश भजेत। **किं वा अन्त्य वर्णद्वयप्रोक्त वस्तु** 'वन' इत्यनेन कथित तत् वन **भजेत** सेवेत। भज सेवायाम्। वृष्णिकुलेन नष्टत्व गन्तव्यम् अथवा वन सेवितव्यमित्यर्थ। **इति प्रभुर्व्याकुल आसीत्** इत्थ विचार्य श्रीकृष्णो व्याकुलोऽभवत् ॥ शार्दूलविक्रीडित वृत्तम् ॥१४॥

**योग्य स्वैर्द्वयमपि नात्र लब्धुमेतज्ज्ञात्वेत्थ लघु मधुसूदनेन सर्व्वे ॥**
**सद्दुर्गन्नवमधिसागर विधाय प्राङनीता किल बहुजीवनार्थिनस्ते ॥१५॥**

**अन्वय**—स्वै अत्र एतत् द्वयमपि लब्धु योग्य न, इत्थ ज्ञात्वा, अधिसागर नव सद्दुर्ग विधाय, लघु मधुसूदनेन ते सर्वे बहु-जीवनार्थिन प्राक् नीता किल ॥१५॥

व्याख्या—**योग्यमिति** ॥ **स्वै** बान्धवैर्ज्ञातिभिर्वा 'स्वो ज्ञातावात्मनि' इत्यमर **अत्र** इह मधुपुर्याम्। **एतत् द्वयमपि**-नाशरूप वनप्राप्तिश्च, **लब्धु योग्य न**। **इत्थ ज्ञात्वा**। **अधिसागर** सागरे इति अधिसागरम्। अव्ययीभाव। **नव सद्दुर्ग विधाय**। समुद्रवलयाङ्कित नवीनम् अभिन्न दुर्ग विरच्य। **लघु** द्रुत 'लघुक्षिप्रमर

द्रुतम्' इत्यमर । **मधुसूदनेन** श्रीकृष्णेन **ते सर्वे बहुजीवनार्थिनो** बहुजीवनम् अर्थयन्ते ते बहुजीवनार्थिन 'सुप्य जातौ इति णिनि । बहुजीवन याचमाना ते सर्वे यादवा **प्राङ्नीता किल** निश्चयेन पूर्वमेव द्वारका नीता ॥ प्रहर्षिणीय वृत्तम् । म्नौ ज्रौ गास्त्रिदशयति प्रहर्षिणीयम् ॥१५॥

**आत्मनस्तदनु सर्वशक्तितता दर्शयन्निव विभु पलायनम् ॥**
**स्वीचकार न तु दैत्यमर्दन क्षुल्लकस्य यवनस्य भीतित ॥१६॥**

**अन्वय** —तदनु, आत्मन सर्वशक्तितता तदनु दशयन्निव विभु पलायन स्वीचकार । क्षुल्लकस्य यवनस्य भीतित न । (स) तु दैत्यमर्दन ॥

व्याख्या—**आत्मन इति** ॥ **तदनु** तेषा यदूना द्वारकानयनात् अनु पश्चात् । **आत्मन** स्वस्य निजस्य । **सर्वशक्तिता** सर्वशक्त्या भाव सर्वशक्तितता ताम् । आत्मन सर्वबल **तदनु** तस्मात् यवनात् अनुहीनम् इति दर्शयन् इव । **प्रभु** श्रीकृष्ण **पलायन** तस्य पुरतो गमन **स्वीचकार** अङ्गीकृतवान् । **क्षुल्लकस्य** क्षुद्रस्य यवनस्य **भीतित न** भयात् न पलायित । **तु** अन्यथा स तु **दैत्यमर्दन** । दैत्यान् मृद्नाति चूर्णयतीति दैत्यमर्दन ल्यु प्रत्यय । स तु दैत्यनिषूदनोस्ति ॥ रथोद्धता वृत्तम् ॥ उदात्तालङ्कार ॥१६॥

**भग्नयाऽपि मुचकुन्दभूपतेर्निद्रया किल तमोगुणोत्थया ॥**
**मङक्षु कालयवनोऽपि तामसो भङ्गमाप बलवद्विधिक्रमात् ॥१७॥**

**अन्वय** --बलवद्विधिक्रमात् मुचकुन्दभूपते तमोगुणोत्थया भग्नया निद्रयापि तामस कालयवन अपि मङक्षु भङ्गम् आप किल ॥

**व्याख्या—भग्नयापीति** ॥ **बलवद्विधिक्रमात्** बलवान् यो विधिर्दैव बलवद्विधि तस्य क्रम परिपाटी तस्मात् । बलवत दैवप्रभावात् । 'विधिर्विधाने दैवे च' इत्यमर । **मुचकुन्दभूपते** एतत् सज्ञस्य राज्ञ । **तमोगुणोत्थया** सत्त्वरजोभ्या भिन्नो गुण तमोगुण तेन उत्था उद्भूता तमोगुणोत्था तया । यया **भग्नया निद्रया** निद्राभङ्गेन । तमोगुणोत्पन्ना या निद्रा तस्या भङ्गेन या जागर्ति तयापि । **तामस** क्रूर **कालयवनोपि** । **मङ्क्षु भङ्गम् आप** आशु नाश प्राप्तवान् 'द्राङ् मङ्क्षु सपदि द्रुते' इत्यमर ॥१७॥ रथोद्धता छन्द । रान्नराविहरथोद्धतालगौ । **रनरलग (३-८)** ॥१७॥

**सन्निद्राभद्रकाल्यै पशुमिव यवनाधीश्वर सम्प्रणीय**
**स्पष्ट तस्याश्चिरोपास्त्युदितमिव नव सुप्रसाद पुरस्तात् ।।**
**अक्षिद्वारा स सम्राड् विभुमलघुरुचि चारु चिन्मात्ररूप**
**पायम्पायम्प्रमोदादधिहृदयमधान्नो सुधा जुष्टपूर्वाम् ।।१८।।**

**अन्वय**—सन्निद्राभद्रकाल्यै पशुमिव यवनाधीश्वर सम्प्रणीय, तस्या चिरोपास्त्युदितम् इव नव सुप्रसाद पुरस्तात् स्पष्टम्। स सम्राट् अलघुरुचि चारुचिन्मात्ररूप विभु प्रमोदात् अक्षिद्वारा पायम् पायम् अधिहृदयम् अधात् तथा जुष्टपूर्वा सुधा नो अधात् ।।

**व्याख्या—सन्निद्रेति ।। सन्निद्राभद्रकाल्यै** सती शोभना निद्रा सन्निद्रा सैव भद्रकाली दुर्गादेवी तस्यै। निद्रादेव्यै। **पशुमिव** बलिदानार्थं पशु, बलिपशुसदृश। **यवनाधीश्वर सम्प्रणीय** नीत्वा, बलिं परिकल्पयति भाव। नी धातो ल्यप् 'उपसर्गाद-समासेऽपिणोपदेशस्य' इत्यनेन णत्वम्। निद्रादेव्यै कालयवन बलिपशुमकरोदित्यर्थ। **तस्या** निद्रादेव्या। **चिरोपास्त्युदितमिव** चिरम् उपास्ति उपासना तस्या उदित उद्भूत चिरोपास्त्युदित तम्। बहुकालकृतसेवया उद्भूतमिव। **नव सुप्रसाद** नवीनानुग्रहम्। प्रभोर्दर्शनमित्यर्थ। **पुरस्तात् स्पष्टम्** अग्रमेव यथा स्यात् तथा दृग्गोचरमभत्। तदा **स सम्राट्** मुचकुन्दो राजा। **अलघुरुचिम्** अतिमनोज्ञम्। **चारु** सुन्दरम्। **चिन्मात्ररूप** चित् चेतना एव चिन्मात्र तदेव रूप यस्य स तम्। **विभु** श्रीकृष्णम्। **प्रमोदात्** अति हर्षात्। **अक्षिद्वारा पाय पाय** नेत्राभ्या पीत्वा पुन पुन पीत्वा। पा पाने आभीक्ष्ण्ये णमुल्। **अधिहृदय** हृदयाभ्यन्तरे **अधात्** दधार। किन्तु **जुष्टपूर्वा सुधा नो अधात्** पूर्व जुष्टा जुष्टपूर्वा ताम्। 'जुषी प्रीति सेवनयो' इत्यस्मात्त कर्मणि क्त प्रत्यय भूतार्थवृत्ते। सेवितपूर्वममृत न दधार ।।

या पूर्व सेविता सुधा ता सुधा हृदये न दधार, किन्तु प्रभो रुचिर चिन्मयरूप नेत्राभ्या पुन पुन पीत्वा हृदयाभ्यन्तरे दधारेति भाव ।। उत्प्रेक्षालङ्कार स्रग्धरा छन्द ।।१८।।

**अधिकरममृत तत्स्तोत्रपूजाप्रमाणै-**
**रपलघिम दधान कौमुदीस्पर्धिकीर्त्या ।।**
**जगदखिलमबाध श्वेतयन्नेष राजा**
**विशदहृदयदेशे कृष्णभाव बभार ।।१९।।**

**अन्वय** — तत्स्तोत्रपूजाप्रमाणै अधिकरम् अपलघिम अमृत दधान एष राजा कौमुदीस्पर्धिकीर्त्या अबाधम् अखिल जगत् श्वेतयन् विशदहृदयदेशे कृष्णभाव बभार ॥१९॥

**व्याख्या—अधिकरमिति** ॥ **तत्स्तोत्रपूजाप्रमाणै** स्तोत्र च पूजा च स्तोत्रपूजे तस्य भगवत स्तोत्रपूजे तत्स्तोत्रपूजे, ते एव प्रमाण यस्मिन् कर्मणि तत् तत्स्तोत्रपूजाप्रमाणम्, तै । भगवन्नुत्याराधनप्रमाकरणै, यथार्थज्ञानै । **अधिकर** करे इति अधिकरम् । अव्ययीभाव । हस्तस्थम् । **अपलघिम अमृतम्** अपगत लघिमा यस्मात् तत् अपलघिम तत् । 'अनश्च' इति सूत्रेण 'टच्' प्रत्यय । श्रेष्ठम् अमृत सुधारूप **दधान** धत्ते इति दधान इति 'शानच्' । श्रेष्ठममृत हस्तस्थ कृतवान् । अर्थात् भगवतो यथार्थज्ञानेन देवसदृशम् अमरत्व गतोपि । **एष राजा** मुचुकुन्द **कौमुदीस्पर्धिकीर्त्या** ज्योत्स्नया सह स्पर्धमानया कीर्त्या । यद्यशश्चन्द्रिकामपि स्पर्धते, एतादृशेन यशसा । **अबाध** बाधारहितम् **अखिल** निश्शेष जगत् विश्व **श्वेतयन्** धवलीकुर्वन् । **विशदहृदयदेशे** विशद हृदय विशदहृदय तस्य तदेव वा देश तस्मिन् । विशालहृदयक्षेत्रे । **कृष्णभाव** कृष्णत्व श्रीकृष्णस्याप्रतिहतरूपत्वम् **बभार** धारयामास ॥ समस्तविश्व स्वयशसा धवलत्व नयन् स राजा मुचकुन्द स्वहृदय तु कृष्णरूपमेव दधारेति भाव ॥ [illegible] । मालिनी वृत्तम् न न म य य युतेय मालिनी भोगि लोकै ॥१९॥

**वृत्ति वहञ्छमदमादिमती द्वितीय–**
**वर्णादरशिथिलयन्त्स गतो विशालाम् ।।**
**तत्सम्मित तदधिवासि परात्मभक्त्या**
**वर्ण स्वनामगतमप्यनघो न सेहे ।।२०।।**

**अन्वय** —शमदमादिमती वृत्ति वहन् द्वितीयवर्णादर शिथिलयन्, स विशाला गत । परात्मभक्त्या तत्समित तदधिवासि स्वनामगत वर्णमपि अनघ न सेहे ।।

**व्याख्या—वृत्तिमिति** ॥ **शमदमादिमती** शमदमादय यमनियमा सन्ति यस्या वृत्तौ सा शमदमादिमती ताम् । 'तदस्यास्त्यस्मिन्निति मतुप्' इति मतुप् । 'उगितश्च' इत्यनेन **स्त्रिया ङीप** । शमदमादिमती **वृत्ति** जीवनवर्त्तन **वहन्** आचरन् । 'वृत्तिर्वर्तनजीवने इत्यमर । शमदमादितप आचरणेन आदिमवर्णाना ब्राह्मणाना विहित जीवनक्रम वर्तयन्नित्यर्थ । **द्वितीयवर्णादर शिथिलयन्** द्वितीयवर्णाना प्रजापालनादिक्षात्रवर्णाना विहितो यो जीवनक्रम त प्रति आदर प्रेम,

आसक्ति वा त्यजन्। अथ च **परात्मभक्त्या** पर परमात्मान प्रति आत्मनो भक्ति तया। परमात्मन श्रीकृष्णस्य भक्त्या **स्वनामगत द्वितीयवर्णादर** स्वस्य नाम मुचकुन्द इत्यस्मात् द्वितीयवर्णे 'चकार' प्रति आदर शिथिलयन् 'चकार' त्यक्तुमिच्छन्। **स** राजा मुचकुन्द। **विशाला गत** बदरिकाश्रम प्रापित श्रीकृष्णे नेति शेष। वे शाल्च् प्रत्यय। किं कारण शिथिलयन्? **परात्मभक्त्या** प्रभोर्भक्तिप्रभावेण **तत्समित** तस्य परमात्मन सम्मित सदृशम् **तदधिवासि** तदध्यस्त भूत्वा **स्वनामगत वर्ण** स्वस्य नाम्नि गत चकाररूपेण वर्तमान अधिकाक्षर **सोऽनघो** निष्पापो **न सेहे** सोढुमसमर्थोऽभूत्। मुचकुन्दनाम्नो मुकुन्द कर्तु चकारस्याऽऽधिक्य न सेहे इति भाव। अथच आत्मनो नाम मुचकुद इत्यस्मात् प्रदर्शित वर्ण कुदवर्ण शुभ्र, विमलवर्णमपि स न सेहे, आत्मनि कृष्णभाव बभारेतिभावात्॥ श्लेषालङ्कार। वसन्ततिल्क वृत्तम्॥२०॥

**कोटिद्वयेन कलितादपि शार्ङ्गचापात्**
**कोटित्रयोन्मितिपर यवनेशसैन्यम्** ॥
**ससेव्य मार्गणगण परतोऽभिगच्छ-**
**ञ्छङ्का ततान हृदये शतकोटिभाज** ॥२१॥

**अन्वय** —शार्ङ्गचापात् कोटिद्वयेन कलितात् अपि, यवनेशसैन्य कोटित्रयोन्मितिपर ससेव्य, मार्गणगण परत अभिगच्छन् शतकोटिभाज हृदये शङ्का ततान॥

**व्याख्या—कोटिद्वयेनेति॥ शार्ङ्गचापात्** श्रीकृष्णस्य शार्ङ्गधनुष। 'चाप शार्ङ्ग मुरारेस्तु' इत्यमर। **कोटिद्वयेनकलितादपि** कोटि कोण। कोणद्वयेन कलितात् प्रक्षिप्तादपि। क्ल विल क्षेपे। श्रीकृष्णधनुष परिमितकोणद्वयेन प्रक्षिप्तादपि। **यवनेशसैन्य कोटित्रयोन्मितिपर** कोटि सङ्ख्या। त्रयाणा कोटीना समाहार कोटित्रयम्। 'सङ्ख्याया अवयवे तयप्'। 'द्वित्रिभ्या तयस्याऽयज्वा' इत्ययच्। कोटित्रयस्य उन्मितिर्गणना तस्या पर उर्ध्वम् अधिक यस्मिन् तत्। तत्। कोटित्रयादपि ऊर्ध्व कालयवनस्य सैन्यम्। **ससेव्य** हत्वा इत्यर्थ। **मार्गणगण** मृगयन्ति ते मार्गणा बाणा तेषा गण समूह 'कलम्बमार्गणशरा' इत्यमर। **परतोऽभिगच्छन्** कार्य ससाध्य परावर्तयन्। **शतकोटिभाज** शतकोटि वज्र भजतेऽसौ शतकोटिभाक् तस्य। 'शतकोटि स्वरू शम्बोदम्भोलिरशनिर्द्वयो' इत्यमर। इन्द्रस्य **हृदये शङ्का ततान** बहुविधशङ्कामकरोत् अर्थात् कृष्णस्य बाणप्रक्षेपणस्य हस्तलाघव दृष्ट्वा इन्द्रोऽपि चकितो बभूव इति भाव॥ यमकससृष्टश्लेषालङ्कार। वसन्ततिल्का छन्द॥२१॥

**जरासुत पुरुबलमागत मुहुर्मृधच्छलान्निजपदकञ्जमीक्षितुम् ।।**
**जयार्थिन सफलमनोरथ तत पलायनादपि कुरुत स्म माधवौ ।।२२।।**

**अन्वय**—पुरुबल जयार्थिन जरासुत मृधच्छलात् निजपदकञ्ज-मीक्षितु मुहुरागतम् (दृष्ट्वा) तत माधवौ पलायनादपि सफल-मनोरथ कुरुत स्म ।।

**व्याख्या**—**जरासुतमिति** ।। **पुरुबल** पुरु भूरि बल सैन्य यस्य स तम् । **जयार्थिन** जय एव अर्थ प्रयोजन यस्य स तम् । **जरासुत** जरासन्धम् । **मृधच्छलात्** युद्धमिषात् **निजपदकञ्जमीक्षितु मुहु पुनरागतम्** । भूरि सैन्यै सहित जयार्थिन युद्धव्याजान्निजपददर्शनाभिलाषेणागत जरासन्ध दृष्ट्वा । **ततो माधवौ** मधो अपत्य पुमासौ माधवौ मधुवशीयौ बलकृष्णौ तत **पलायनादपि** तस्य पुरत पलायनमङ्गीकुर्व तावपि त **सफलमनोरथ कुरुत स्म** निजपलायनेन तस्येच्छापूर्तिमकुरुताम् । तयो पलायनेन स मागधो जय प्राप, तथा चरणकमलान्यपि दृष्टवान् इत्यर्थ । अग्रे धावमानस्य पदम् अनुगन्ता विनायासेनैव पश्यतीति भावात् ।। रुचिरा वृत्तम्, लक्षण तु चतुर्ग्रहैरिह रुचिरा जभौसरौग ।।२२।।

**नवोदया पुरी दृष्टु समुत्कण्ठितयोस्तयो ।।**
**तद्धावनमभूद्दूरमुपकाराय केवलम् ।।२३।।**

**अन्वय**—नवोदया पुरी दृष्टु समुत्कण्ठितयो तयो तत् दूर धावन केवलम् उपकाराय अभूत् ।।

**व्याख्या**—**नवोदयामिति** ।। **नवोदया** नव उदय यस्या सा नवोदया ताम् । नवीनामेव निर्मिता **पुरी** द्वारकापुरी दृष्टुम् । **समुत्कण्ठितयो** सम्यक् उत्कण्ठितयो समुत्सुकयो । कठि शोके, कण्ठते, भावेक्त, निष्ठायामिट् । कण्ठित । **तयो**र्बलकृष्णयो **तत् दूर धावन केवलम् उपकाराय** तयोर्हिताय अभूत् ।।

यथात्यन्तोत्साहयुक्तो जन किञ्चित्स्थान दृष्टु त्वरयति तदर्थ धावति च एवमेव द्वारका शीघ्र गन्तुमुत्सुकयोस्तयो तत् जरासधस्य पुरत शीघ्र धावनमुपकार मेवाकरोत् यतस्तौ द्वारका शीघ्र प्रापतुरुपमेयादिकार्य ससाधनायेति भाव ।। अनुष्टुब्छन्द ।।२३।।

**रन्तु ब्रह्मपदादिहागतजुष पातालसञ्ज्ञान्निज-**
**स्थानात्तुल्यविदूरगाच्च फणिनामीशस्य रामस्य स ।।**

**रेवत्याश्च परस्परस्य सदृश प्रेमोपरि प्राग् जनै–**
**रत्यन्तो निरधारि तत्र सुदृशो गत्वाऽऽगताया पुन ॥२४॥**

**अन्वय**—पातालसज्ञात् ब्रह्मपदात् निजस्थानात् इह रन्तु-मागतजुष फणिनामीशस्य रामस्य स प्रेमा, (तथा) तत्र गत्वा तुल्यविदूरगात् पुन आगताया सुदृश रेवत्याश्च, परस्परस्योपरि अत्यन्त सदृग जनै प्राक् निरधारि ॥

**व्याख्या—रन्तुमिति ॥ पातालसज्ञात्** पातालमिति सज्ञा नाम यस्य तत् पातालसज्ञम् तस्मात् । **ब्रह्मपदात्** ब्रह्मण परमात्मन विष्णो पद स्थान वैकुण्ठ तस्मात् अपि निजस्थानात् । **इह रन्तुमागतजुष** । 'जुषी प्रीतिसेवनयो '। आगतम् आगमन जुषते इति आगतजुट् इति क्विप । तस्य आगतजुष । इहास्मि भुवि प्रेम्णा क्रीडा कर्तुमागतस्य । **फणिना** फणा फटा सन्ति येषा ते फणिन । इति णिनि । तेषा फणिना सर्पाणाम् **ईशस्य** स्वामिन, अर्थात् रामस्य शेषावतारबल रामस्य । **स प्रेमा** सा प्रीति । तथा च । **तत्र गत्वा** तत्र ब्रह्मपद पाताल वा शेषस्य पत्नीरूपेण गत्वा । **तुल्यविदूरगात् पुनरागताया** समानान्तरदूरात् पुन रस्मिन्भुवि रन्तुमागताया **सुदृशो रेवत्याश्च** सुनयनाया रेवतीति नाम्न्या स प्रेमा **परस्परस्योपरि** अन्योन्यस्योपरि **अत्यन्त सदृशो** योग्यो **जनै प्रागेव निरधारि** । कर्मणि चिण् । जनै पूर्वमेव निश्चित ॥

सुदूरस्थितात् निजपातालस्थानात् इह रन्तुमागतयो रेवतीरामयो प्रेमसबन्धो जनै पूर्वमेव ज्ञातत्वात् विवाहरूपेण निश्चित इति भाव ॥ शार्दूलविक्रीडितम् ॥२४॥

**गुणाम्बुधि पूर्व मजीजनत्सुत**
**विदर्भराड् दुर्विषह यथा विषम् ॥**
**अत परैरिन्दुनिभै सुधोपमा**
**सुता चतुर्भि सहिता कनीयसीम् ॥२५॥**

**अन्वय** गुणाम्बुधि यथा पूर्व विषम अजीजनत् । (तथाऽसौ) गुणाम्बुधि विदर्भराट् दुर्विषह सुतम् । अत परै इन्दुनिभ चतुर्भि सहिता कनीयसी सुधोपमा सुताम् अजीजनत् ॥

**व्याख्या—गुणाम्बुधिरिति ॥ गुणाम्बुधि** गुणाना श्रेष्ठवस्तूना रत्नाना मित्यर्थ. अम्बुधि. जलधी रत्नाकर । **यथा पूर्व विषम् अजीजनत्** मथनविधौ

यथा सर्वादौ विष हलाहल जनयामास । तथैवासौ **गुणाम्बुधिर्विदर्भराट्** गुणाढ्य सद्वृत्ति भीष्मकराज **दुर्विषह सुत** विशेषदु खेन सोढु शक्यो दुर्विषह तम्। दुस्सहदुराचार पुत्र रुक्मिणम्। 'ईषद्दु सुषु ' इत्यनेन दुर्योगे सह धातो खल्। 'परिनिविभ्य ' इत्यनेन षत्वम् । अजीजनत्। **अत परै** तत्पश्चादुत्पन्नै **इन्दुनिभैश्चतुर्भि सहिता कनीयसी सुधोपमा सुताम् अजीजनत्**। तदनन्तर यथा रत्नाकर चन्द्रसदृशैश्चतुर्भी रत्नै सह सुधाम् अमृतम् असृजत् तद्वत् असौ विदर्भराट् इन्दुनिभैराल्हादकारिभिश्चन्द्रसदृशैश्चतुर्भि पुत्रै सहिता कनीयसी कनिष्ठा। सुधोपमाम् सुधा एव उपमा सादृश्य यस्या सा ताम्। लावण्यवती कन्या रुक्मिणीम् अजीजनत्॥ वशस्थ वृत्तम्। जतौ तु वशस्थ मुदीरित जरौ ॥२५॥

**शुभ्राशुर्बहुश प्रदक्षिणयति क्षोणी मृग सेवते-**
**वानप्रस्थपथ जलै सुरगण शङ्खोऽभिषिञ्चत्यरम् ॥**
**वर्षादीन्सहते तृणेश्वरफल कञ्जम्पयो गाहते-**
**तस्या आस्यदृगन्तकण्ठकुचपच्छोभातिलोभादिव ॥२६॥**

**अन्वय**—तस्या आस्यशोभातिलोभात शुभ्राशु क्षोणी बहुश प्रदक्षिणयतीव। दृगन्तशोभातिलोभात् मृग वानप्रस्थपथ सेवते इव। कण्ठशोभातिलोभात् शङ्ख सुरगण जलै अरम् अभिषिञ्चतीव। कुचशोभातिलोभात् तृणेश्वरफल वर्षादीन् सहते इव। पच्छोभातिलोभात् कञ्ज पयोगाहते इव॥

**व्याख्या— शुभ्राशुरिति॥ तस्या** रुक्मिण्या । **आस्यशोभातिलोभात्** आस्यशोभाया मुखकान्त्या अतिलोभात् अत्यन्ताकर्षणात् पराजितश्**शुभ्राशु**श्चन्द्र । **क्षोणी बहुश प्रदक्षिणयतीव**-स्वर्गादाकृष्ट सन् क्षोणौ तन्निवासादिहागन्तुम् पृथ्वीं नित्यमेव भ्रमतीव। अथ वा पराभूतश्चन्द्र स्वलावण्यहीनत्व पृथ्वीप्रदक्षिणा कृत्वैव अपाकरोतीव। **तस्या दृगन्तशोभातिलोभात्** दृगन्तयोरपाङ्गलोचनयो सौन्दर्यातिबाहुल्यात् मृगो निजनेत्रयोरतिसौन्दर्य मन्यमान तच्छोभा दृष्ट्वा पराभूत इव **वानप्रस्थपथ सेवते** वानप्रस्थाना पन्था वानप्रस्थपथ तम्, तृतीयाश्रमयोग्य वनमार्गमनुसरति। **कण्ठशोभातिलोभात्** तस्या सुकण्ठ दृष्ट्वा **शङ्ख** कम्बुरपि विमना **सुरगण जलै अर** द्रुत, रलयोरभेदात् अल पर्याप्तम् **अभिषिञ्चति**। स्पर्धा कर्तु नोत्सहते इत्यर्थ । तस्या **कुचशोभातिलोभात् तृणेश्वरफल** नारिकेलफल, बिल्वफल वा स्वाकृत्या काठिन्यस्यापि च गर्व त्यक्त्वा **वर्षादीन् सहते** तरुशिखरे लम्बायमानो वर्षातपान् सहते। तथा **पच्छोभातिलोभात्** पदो

शोभा पञ्छोभा तस्या अतिलोभात् अतिमोहात् पराभूतमिव **कञ्ज** कमलमपि **पयो गाहते** जले शेते, पराजय स्वीकृत्य स्वस्यास्तित्व लोपयतीति भाव ।।

चन्द्रमृगबिल्वफलशङ्खकमलाना सादृश्य रमणीना मुखनेत्रकुचकण्ठपदै सह सत्कविभि सदा प्रदर्शितम्। परञ्चात्र रुक्मिणीविपये तु तस्या अन्योन्याङ्गानि सौन्दर्यातिबाहुल्यात् चन्द्रादिभ्य सरसानि अत उपमेय महीयते उपमानन्तु हीनत्व गच्छतीति भाव । अतो व्यतिरेकालङ्कार । उपमानादुपमेयस्य गुणाधिक्य व्यतिरेक ।। शार्दूलविक्रीडित छन्द ।।२६।।

**सवीक्ष्य सश्रुत्य च सौकुमार्य तस्यास्तु रम्भाक्षरयुग्मवाच्यम्**
**नृदेववर्गो विपरीतवर्णामेका भुवोन्या च दिवो विवेद ।।२७।।**

**अन्वय**—तस्या रम्भाक्षरयुग्मवाच्य सौकुमार्य तु सवीक्ष्य सश्रुत्य च नृदेववर्ग एका भुव विपरीतवर्णाम् अन्या च दिव विपरीतवर्णा विवेद ।।

**व्याख्या--सवीक्ष्येति ॥** तस्या रुक्मिण्या । **रम्भाक्षरयुग्यवाच्य सौकुमार्य**–रम्भा देवाङ्गना सौकुमार्ये ख्याता, तथा रम्भा कदली सा च सौकुमार्ये प्रसिद्धा। अतो रम्भा इति अक्षरयुग्मवाच्यम्, रम्भा कदली अप्सराश्च इति समानाक्षरशब्दद्वये वाच्य ज्ञात, कथित वा यत् सौकुमार्ये तत् **सश्रुत्य** श्रुत्वा **सवीक्ष्य** दृष्ट्वा च। **नृदेववर्ग** नरो देवाश्च नृदेवा तेषा वर्ग समूहो नृदेववर्ग । मनुष्यदेवगण । **एका** रम्भा कदलीमित्यर्थ **भुव** पृथिव्या **विपरीतवर्णा** 'रभा' इति विपरीताक्षरा, तदेव 'भार' **विवेद** । नरगणो रम्भा कदली पृथिव्या भार भारभूत निरर्थकमजानात् । **अन्या** रम्भाम् अप्सरस देवगणो **दिव** स्वर्गस्य भारम् अजानात् ।। वाच्यमिति वच परिभाषणे इत्यस्मात् 'ऋहलोर्ण्यत्' इत्यनेन 'ण्यत्' 'चजो कु घिण्ण्यतो' इत्यनेन कुत्वे प्राप्ते 'वचोऽशब्दसज्ञायाम्' इत्यनेन कुत्वनिषेध । शब्दाख्यायां तु वाक्यम्। 'तिङ्सुबन्त चयो वाक्यम्' इत्यमर ।।२७।।

रम्भा शब्दस्याक्षरवैपरीत्येन 'भारमिति जायते। अत सौकुमार्ये पराजिता कदली पृथिव्या भार तथा रम्भाभिधानाम् अप्सरस दिव भार नरदेवगणोऽजानादिति भाव ।। उपजाति वृत्तम्। व्यतिरेकालङ्कार ।

**विदर्भेशकन्याविहङ्गेशकेत्वोर्दृढ बद्धमद्धा तयो स्वान्तयोर्द्राक् ।।**
**गुणैर्युग्ममन्योन्यकेनावलीढं पराधीनमाधीननेकाञ्जगाहे ।। २८।।**

**तन्वय** —तयो विदर्भेशकन्याविहङ्गेशकेत्वो स्वान्तयो युग्मम् अन्योन्यकेनावलीढै गुणै द्राक् दृढ बद्धम्, अद्धा पराधीनम् अनेकान् आधीन् जगाहे ॥

**व्याख्या—विदर्भेशकन्येति** ॥ **तयोर्द्वयो विदर्भेशकन्याविहङ्गेशकेत्वो** विहङ्गाना पक्षिणाम् ईश स्वामी गरुड स एव केतौ रथ वजे यस्य स विहङ्गेशकेतु गरुडध्वज श्रीकृष्ण । विदर्भेशकन्या च विहङ्गेशकेतुश्च विदर्भेशकन्याविहङ्गेशकेतू तयो । रुक्मिणीश्रीकृष्णयो । **स्वान्तयो**र्मनसो**र्युग्म**-मनो युगम् **अन्योन्यकेन** परस्परेण **अवलीढै** अनुरक्तत्वादाकर्षणपरै**र्गुणै**र्गुणविशेषै**र्द्राक्** झटिति **दृढ बद्धम्** अनुरूपगुणै परस्परेण सह दृढ बद्धमित्यर्थ पर च, **अद्धा** तत्व तस्तु **पराधीनम् अनेकानाधीन् जगाहे** । परस्परस्य गुणविशेषैराकर्षितमिद युग्म गुरुजनाना सम्बन्धितज्ञातीना चानुमति विना स्वतन्त्ररूपेण कार्य कर्तुमसमर्थतया तत्वत पराधीन परतन्त्रम् अतोऽ**नेकान् आधीन्** मानसीव्यथा **जगाहे** दधौ ॥ तौ रुक्मिणी-श्रीकृष्णौ स्वतन्त्रतया स्वकामनासिद्धयर्थ प्रयत्न कर्तुमसमर्थौ स्त । अतस्तयोर्मनसी नाना चिन्तया ग्रस्ते आस्तामिति भाव ॥ भुजङ्गप्रयात छन्द ॥२८॥

**अध्यतिष्ठदनयोर्हृदन्तर भर्गभर्जिततनुर्भवेहया ।।**
**द्वयङ्गुलान्तरपिचण्डमण्डले सन्निवेशमिव लब्धुमात्मभू** ॥२९॥

**अन्वय** —द्वयङ्गुलान्तरपिचण्डमण्डले सन्निवेश लब्धुमिव आत्मभू भर्गभर्जिततनुर्भवेहया अनयो हृदन्तरम् अध्यतिष्ठत् ॥

**याख्या—अध्यतिष्ठदिति** ॥ **द्वयङ्गुलान्तरपिचण्डमण्डले** द्वयङ्गुलस्य अन्तरम् अवकाशो यस्मिन् तत् द्वयङ्गुलान्तरम् । द्वयङ्गुलान्तर यत् पिचण्डमण्डल ( पिचण्डस्य जठरस्य मण्डल व्याप्ति ) तस्मिन् । हृदयाद् द्वयङ्गुलपरिमाणे नैवान्तरस्थितोदरे । **सन्निवेश लब्धुमिव** प्रवेश प्राप्तुमिव । डुलभष् प्राप्तौ इत्यस्मात् तुमुन् । सन्निवेशाय तदर्थे हृदन्तरम् अध्यतिष्ठत् । **आत्मभू** काम । 'पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभू ' इत्यमर । **भर्गभर्जिततनुर्भवेहया** भवस्य जन्मन ईहा इच्छा भवेहा । 'जन्म हरौ भवौ' इत्यमर । भर्गेण शङ्करेण भर्जितस्य दग्धस्य तनोर्भवेहा भर्गभर्जिततनुर्भवेहा तया । "हर स्मरहरोभर्ग" इत्यमर । शङ्करेण दग्धम् आत्मन शरीर पुन प्राप्तुमिच्छया स काम । **अनयो** रुक्मिणी-श्रीकृष्णयो**र्हृदन्तरम् अध्यतिष्ठत्** अन्तमनसि उवास । तयोर्मनसि अन्योन्य प्रति काममजनयदिति भाव ॥ अनुप्रासालङ्कार ॥ रथोद्धता वृत्तम् ॥२९॥

**अभिनव इव मान्यो देवदेवस्य वा स्यात्**
**क्षितिविबुधसुदेव किञ्चिदून पितेव ।।**
**निपुणमिति विमृश्य प्रेषयामास तन्वी-**
**प्रभुचरणयुज त द्वारका द्वारकामा ।।३०।।**

**अन्वय**—किञ्चिदून पिता इव क्षितिविबुधसुदेव देवदेवस्य अभिनव इव मान्य स्यात् वा इति निपुण विमृश्य, तन्वी द्वारकामा प्रभुचरणयुज त द्वारका प्रेषयामास ।।

**व्याख्या—अभिनव इति** ।। **किञ्चिदून पितेव** पितु इषन्मात्रन्यून, पिता इव । **क्षितिविबुधसुदेव** क्षित्या विबुधा, धराया देवा, ब्राह्मणा तेषु सुष्ठु देव क्षितिविबुधसुदेवो द्विजवरो नाम्ना सुदेव । **देवदेवस्य** देवाना देव इन्द्र तस्य । **अभिनव इव** नवीनोऽय कोपि ब्राह्मण इति कृत्वा । **मान्य** आदरणीय स्यात् । इन्द्रस्य नवीनोऽय गुरुर्बृहस्पतिरिति कि वा इत्यर्थ । **इति निपुण विमृश्य** एव यथास्यात् तथा सम्यक् विचार्य । प्रेषणीयदूतेन गुरुसदृशेन आहोस्वित पितृतुल्येन अनेन भाव्यमेव निश्चित्य । **तन्वी** नाति पृथुला तनुमध्या रुक्मिणी । **द्वारकामा** द्वारेण ब्राह्मणद्वारेण कामयते या सा—द्विजद्वारा दौत्य सम्पादयितुमिच्छन्ती । अथवा द्वार कृष्णप्रापणमार्गं कामयते या सा द्वारकामा कृष्णप्राप्तिमार्गा वेषिणी । **प्रभुचरणयुज** श्रीकृष्णभक्त । **त** सुदेव ब्राह्मण । **द्वारका** द्वारावतीं **प्रेषयामास** प्रातिष्ठिपत् ।

पक्षे—**देवदेवस्य** श्रीकृष्णस्य **क्षितिविबुधसुदेव** पृथिव्या वर्तमाना ये पण्डितब्राह्मणास्तेषु सुदेव श्रेष्ठतमोऽथ च **किञ्चिदून पितेव** पितृशब्दद्योतित-गुणात् किञ्चिन्न्यून इति हेतोरय प्रेषितस्थविरब्राह्मण सुदेवनामा **अभिनव** कश्चिन्न वीन ब्राह्मण इव **मान्य स्यात्** आदरणीयो भवेदिति **निपुण विमृश्य** चातुरी पूर्वकमत्यन्त मनन कृत्वा **तन्वी द्वारकामा** सा कृशाङ्गी कृष्णप्रापणमार्गमन्वेषयन्ती **त प्रभुचरणयुज** प्रभुभक्त **द्वारका प्रेषयामासेति भाव** । गत्यर्थकधातो स्वार्थे णिच् कृतत्वात् गतिबुद्धिप्रत्यवसानार्थ इति सूत्रेण पूर्व कर्तुरपि कर्मत्वम् ।। मालिनी वृत्तम् ।।३०।।

**क्षीराम्भोनिधिकन्यकोपयमने नैराश्यसूचीव य-**
**स्त साह्याय समागत द्विजवर दूरादधोऽवीवृतत् ।।**
**भैष्मीप्राप्तिकृते त्वमु स बहुविल्लोभीव दत्तास्पद**
**वार्त्तामात्रहर समुच्छ्रितपदे भद्रासने जुष्टवान् ।।३१।।**

**अन्वय**—य क्षीराम्भोनिधिकन्यकोपयमने नैराश्यसूची इव साह्याय समागत त द्विजवर दूरात् अध अवीवृतत् । भैष्मीप्राप्तिकृते तु स बहुविल्लोभी इव वार्तामात्रहरम् अमु द्विजवर समुच्छ्रितपदे भद्रासने दत्तास्पदम् जुष्टवान् ॥

**व्याख्या—क्षीरम्भानिधीति** ॥ य श्रीहरि **क्षीराम्भोनिधिकन्यकोपयमने**—क्षीरस्य अम्भोनिधि सागर तस्य कन्यका लक्ष्मी तस्या उपयमन विवाह तस्मिन् । लक्ष्मीविवाहे । **नैराश्यसूची इव** नैराश्य सूचितु शीलमस्य नैराश्य सूची 'सुप्यजातौ ' इति णिनि ' । नैराश्यदर्शक इव । उदासीन इवेत्यर्थ । **साह्याय** विवाहकर्मणि सहायता कर्तु **समागत त द्विजवर** द्विजाना पक्षिणा वर श्रेष्ठ गरुडमित्यर्थ । **दूरात्** आत्मन सकाशाद्दूरम् । **अध** स्वस्मान्नीचै । न तु उच्चासने इत्यर्थ । **अवीवृतत्** आसनग्रहणार्थ प्रैरयत् । अर्थात् तस्योपरि आसन कृतवान् । त गरुड वाहन चकार इत्यर्थ ॥ 'वृतु वर्तने' प्रयोजकव्यापरे 'हेतुमति च' इत्यनेन णिच् । लुङि वर्तित प्रैरयन् अवीवृतत् । **भैष्मीप्राप्तिकृते तु** भीष्मस्य अपत्य स्त्री भैष्मी रुक्मिणीत्यर्थ , तस्या प्राप्ति भैष्मीप्राप्ति तस्या कृते भैष्मीप्राप्तिकृते । अव्ययम् । रुक्मिण्या प्रात्यर्थ तु **स** श्रीकृष्ण । **बहुविल्लोभीव** । विद्लृ लाभे बहुविंदतीति बहुवित् । 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेपि क्विप्' इत्यनेन क्विप । बहुविद् बहुधन लुभ्यतीति बहुविल्लोभी । इति णिनि । 'तोर्लि' इत्यनेन परसवर्ण । यथा बहुधनलोभी दातरि सम्मानेन लीनता गत्वा वर्तते तद्वदसौ श्रीकृष्णोऽत्र केवल **वार्तामात्रहरम्** उपयमनवृत्तान्तहरम् **अमु द्विज**वर श्रेष्ठब्राह्मणम् । **समुच्छ्रितपदे भद्रासने** सुशोभिते उच्चसिंहासने । **दत्तास्पद जुष्टवान्** दत्तम् आस्पदम् दत्तास्पदम् । 'आस्पद प्रतिष्ठयामिति' सुट् । प्रेम्णा स्वासने न्यवेशयत् ॥ शार्दूलविक्रीत वृत्तम् ॥३१॥

**मत्तो द्रक्ष्यति पूर्वमच्युतपद धन्येयमित्यादरात**
**काश्मीरद्रवपङ्किले हृदि कृता स्वप्राप्तिगूढाशयाम्** ॥
**भैष्म्या मङ्गलपत्रिका क्षितिसुरेणादर्शिता श्रीधर-**
**स्तेनैवात्ममुखायितेन रहसि प्रावीवचत्सम्भ्रमात्** ॥३२॥

**अन्वय**—'इय मत्त पूर्वम् अच्युतपद द्रक्ष्यति, धन्या' इति अत्यादरात् काश्मीरद्रवपङ्किले हृदि कृता स्वप्राप्तिगूढाशया, क्षितिसुरेणादर्शिता, भैषष्म्या मङ्गलपत्रिका श्रीधर रहसि सम्भ्रमात् तेन एव आत्ममुखायितेन प्रावीवचत् ॥

**व्याख्या—मत्त इति** ॥ इय पत्रिका । **मत्त पूर्वम् अच्युतपद द्रक्ष्यति** ममैवाग्रे प्रभुचरणमीक्षिष्यते अतो **धन्या** भाग्यवती अस्तीति विचरेण, **अत्यादरात् काश्मीरद्रवपङ्किले हृदि कृता**—केशरचर्चितहृदये अत्यादरेणालिङ्गिताम् । **स्व-प्राप्तिगूढाशया** स्वप्राप्ते गूढ आशयो यस्या सा ताम् । निजप्राप्तिरहस्यविव-रणात्मिकाम् । **क्षितिसुरेण** तेन द्विजवरेण **अदर्शिताम्** अद्यावधिपर्यन्तम् अपुर-स्कृताम् एतादृशी **भैष्म्या मङ्गलपत्रिका, श्रीधर** श्रीकृष्णो **रहसि** एकान्ते । **सम्भ्रमात्** त्वरया । **तेनैवात्ममुखायितेन प्रावीवचत्**—तेन द्विजमुखेनैव वाचया चकार । ब्राह्मणस्य मुखमात्मन स्वस्यैव मुखमिति भाव । 'ब्राह्मणोऽस्य मुखमासीदिति' श्रुते । मुखायितेन, सुब न्तात् आचारे क्यङ् । मुखमिव आचरति मुखायते, तस्मात् 'निष्ठा' मुखायित तेन । प्रावीवचत् 'तत्प्रयोजकोहेतुश्चे'त्यनेन वचेर्लुङि 'णिच्' । प्रपूर्व वाचितु प्रैरयत् प्रावीवचत् ॥ शार्दूलविक्रीडित वृत्तम् ॥३२॥

**चेतो गुणैरपहृत भवता मदीय**
**कि वात्र दृष्टमधिक सरसीरुहाक्ष ॥**
**स्वीय मन प्रहिणु कि नु विचेतस मा**
**कृत्वास्ति कृत्यमनयोर्भगवन्युगेन ॥३३॥**

**अन्वय**—हे सरसीरुहाक्ष ! भवता गुणै मदीय चेत अपहृतम् । कि वा अत्र मे (मनसि) अधिक दृष्ट नु । मा विचेतस कृत्वा, भगवन् अनयो युगेन कि कृत्यमस्ति । स्वीय मन प्रहिणु ॥

**व्याख्या—चेत इति** ॥ **हे सरसीरुहाक्ष ! भवता गुणैर्मदीय चेतोऽपहृतम्** हे कमलाक्ष ! मे मनसस्तवगुणानुरागैर्हरण कृतम् । **कि वा अत्र मे अधिक दृष्टम्** । किं वा अस्मिन् मे मनसि किमपि विशिष्टमवलोकित त्वया । **नु** पृच्छायाम् इति मम पृच्छा । **मा विचेतस कृत्वा भगवन् अनयोर्युगेन किं कृत्यमस्ति**— हे प्रभो ! मा चित्तरहित कृत्वा, तत् भवत्सकाशे स्थापयित्वा, अनयोर्हृदो तव मम च युगेन द्वयेन चेतसा कि कार्य साधितुमिच्छसि । **स्वीय मन प्रहिणु** अत स्वकीय मनो मदर्थ प्रेषय ॥ प्रहिणु इति 'हि गतौ वृद्धौ च' इत्यस्मात् लोटो मध्यमपुरुषस्यैक वचनम् । 'हिनु मीना' इत्यनेन णत्वम् । परिवृत्तिरलङ्कार ॥ वसन्ततिलका वृत्तम् ॥३३॥

**मत्तातपूर्वजतनूभवया कयाचि-**
**त्सम्प्रेष्य धन्यतमया द्विजमेव दूतम ॥**
**लब्धो नल पतिरतस्त्वनलो न वव्रे**
**सोऽय मया व्रियत ईश हरेऽविता त्वम् ॥३४॥**

**अन्वय** —कयाचित् मत्तातपूर्वजतनूभवया धन्यतमया द्विजमेव दूत सम्प्रेष्य नल पति लब्ध । अनल तु न वव्रे । सोऽय मया व्रियते । अत हे हरे ईश ! त्वम् अविता ॥

**व्याख्या**—**मत्तातेति** ॥ **कयाचिन्मत्तातपूर्वजतनूभवया,** मम जनकस्य पूर्वजस्य कयापि **धन्यतमया** अतिभाग्यवत्या कन्यया । दमयन्त्या इति भाव । **द्विजमेव दूत** पक्षिण हसमेव दूत **सम्प्रेष्य,** हसद्वारेणैव **नल पतिर्लब्ध**, राजान नल पतिं प्राप्तवती । **अनलस्तु न वव्रे**, तया अनलोऽग्निस्तु न वृतो नाङ्गीकृत । किन्तु **सोऽयम्** अग्नि विरहाग्निरिति भाव । **मया व्रियते** अङ्गीक्रियते अहमिदानीमग्नि प्रविशामि यदि त्व मा न स्वीकरोषीत्यर्थ । **अत हे हरे हे ईश ! त्वम् अविता** अस्मादग्निदाहात् त्वमेव रक्षिताऽसि अतो मा पाहि ॥ वसन्त तिलका वृत्तम् ॥३४॥

**उपनिषत्सु न कि लघुता व्रजेदुपनिषद्यदुनाथ खलु श्रुति ॥**
**किमु भजेत जगत्सु विडम्बना न वरटा करटाङ्कगता विभो ॥३५॥**

**अन्वय** —हे यदुनाथ ! उपनिषत्सु उपनिषत् श्रुति कि लघुता न व्रजेत खलु ? हे विभो ! करटाङ्कगता वरटा जगत्सु विडम्बना किमु न भजेत ? ॥

**व्याख्या**—**उपनिषस्विति** ॥ **हे यदुनाथ ! उपनिषत्सु** वेदान्ततत्त्व-विवेचनात्मिकाना उपनिषदो एतत्सज्ञकाना ग्रन्थानामर्थेषु । **उपनिषत् श्रुति** साहचर्येण निवसन्ती श्रुति वेद । उप+नि+षद्लृ विशरणगत्यादिषु । 'पाघ्राध्मा' इति सीदादेश । उपनिषीदतीति उपनिषत् । सत्सूद्विषद्रुहदुह ' इत्यनेन क्विप् । 'सदिरप्रते' इति सस्य ष । उपनिषद्भि प्रतिपाद्यमाने अर्थे श्रुतिर्वेद **किं लघुता न व्रजेत्,** किं हीनता न गच्छेत् खलु ! अपि तु निश्चयेन गच्छेत् । नेति नेति वचनैर्यत श्रुतयोपि आकर्णिता नतु दृष्टा । अत कर्णात्कर्णगतानि वाक्यानि नैवादरणीयानि जनश्रुतित्वात् । पुनश्च **हे विभो करटाङ्कगता** वायसो सङ्गे स्थिता **वरटा** हसस्त्री **जगत्सु विडम्बना** हास्यता **किमु न भजेत** । काकेन सम सहचारिणी हसपत्नी हस्यास्पदी भवदिति किं न ?

उपनिषदाम् अर्थप्रतिपादनार्थं प्रयुक्त शब्दो नेति नेति वचनात् यथा हीनत्व गच्छति। अथवा वायसेन वृता हसपत्नी जगति निन्दनीया भवति तद्वत् तवोत्सङ्गे शोभनीयाऽहम् शिशुपालेन नीता चेत् तर्हि निन्दनीया भविष्यामीति भाव ॥ अनुप्रासालङ्कार ॥ द्रुतविलम्बित छन्द ॥३६॥

**दूरेऽस्तिचेत्तवपुरी वपुरीदृगेत--**
**त्स्थूल निपात्य शिशुपालविवाहवह्नौ ॥**
**सूक्ष्मैकसङ्गतिजुषो भविता त्वदीया**
**भो यादवेन्द्र पदवी न दवीयसी मे** ॥३६॥

**अन्वय** —ईदृक् तवपुरी दूरे अस्ति चेत्, एतत् स्थूल वपु शिशुपालविवाहवह्नौ निपात्य, भो यादवेन्द्र ! सूक्ष्मैकसङ्गतिजुष मे त्वदीया पदवी दवीयसी न भविता ॥

व्याख्या—**दूर इति** ॥ **चेत्** यदि, चेत् यद्यर्थे। **तव पुरी** द्वारका। **ईदृक् दूरे अस्ति** यदह तत्रागन्तु न प्रभवामि, तर्हि मम कथनमेव भवेत् यत् **एतत् स्थूल वपु** इद ममाधिभौतिकशरीरम्। **शिशुपालविवाहवह्नौ** शिशुपालेन चैद्येन सह भाविविवाहाग्नौ **निपात्य** प्रक्षेप्य, अर्थात् दग्ध्वा। **भो यादवेन्द्र** ! हे यदुकुलतरणे ! **सूक्ष्मैकसङ्गतिजुषो मे** सूक्ष्मरूपेण जीवरूपेण तव सङ्गतिं प्राप्तवत्या मम। **त्वदीया पदवी** त्वदीय स्थानम्, **न दवीयसी भविता** सुदूरतरा न भविष्यति॥ सङ्गतिजुष इत्यत्र कर्तरि षष्ठी, सूक्ष्मरूपेण तव सङ्गति प्राप्तवती अहम् इत्यर्थ ।

यदि मया तव सङ्गति स्थूलवपुषा नाप्यते तदाह शिशुपालविवाहाग्नौ प्राणत्याग्य करिष्यामीति भाव ॥ वसन्ततिलका वृत्तम् ॥३६॥

**हरिद्राऽपिलग्ना तनो सम्प्रदाने दरिद्राति कालस्तदाऽऽगच्छ शोकम् ॥**
**परिद्रावयाऽनाथकारुण्यपाथ सरिद्राजनिद्रा जहातु द्रुत त्वाम्** ॥३७॥

**अन्वय** —हे अनाथकारुण्यपाथ सरित् ! तनो सम्प्रदाने हरिद्रापि लग्ना। काल दरिद्राति, तदा आगच्छ, शोक परिद्रावय, राजनिद्रा त्वा द्रुत जहातु ॥

व्याख्या—**हरिद्रेति** ॥ हे **अनाथकारुण्यपाथ सरित्**—अनाथाना दीनाना कारुण्यस्य दयाया पाथ जल तस्य सरित् नदी, तत् सम्बोधने। हे दीन-

दयार्द्र । **तनो सम्प्रदाने हरिद्रापि लग्ना** विवाहकर्मणि वधूवरयोश्शरीरे हरिद्राविलेपनेन माङ्गल्यद्योतको विधि सोऽपि सम्पादित । ननुसम्प्रदानसूचका हरिद्रापि मम देहे ससक्ता चर्चिता इत्यर्थ । लग्ना इति क्षुब्धस्वान्तलग्नम्लिष्ट इत्यादिना निपातनात् निष्ठातस्य न । **काल दरिद्राति** काल समयो दरिद्राति दु खेन गच्छति । 'दरिद्रा दुर्गतौ'। **तदा आगच्छ शोक परिद्रावय** परिहर । **राजनिद्रा त्वा द्रुत जहातु** राजनिद्रा विशालनिद्रा इत्यर्थ सा त्वा शीघ्र त्यजतु ॥

मम दुर्गतेरासन्नकाल प्राप्त अत त्वरता भवान् इति भाव ॥ यमकम् ॥ भुजङ्गप्रयातम् ॥३७॥

**इत्थ श्रुत्वाऽप्यऽतृप्यद्द्विजवरवदनात्पत्रिका न त्रिकाल**
**भूयश्चावाचयत्त सपदि स दयितावाचिक साचिकण्ठम्** ॥
**नून स्वार्थैकलुब्धा पुनरपि विहितायासमायासयन्ते**
**स्वारातिभ्रशकामा विभुमिव विबुधा मीनकूर्मादिरूपै** ॥३८॥

**अन्वय** —इत्थ द्विजवरवदनात् पत्रिका त्रिकाल श्रुत्वापि स न अतृप्यत्, सपदि भयश्च साचिकण्ठ दायितावाचिक तम् अवाचयत् । कथम् ? स्वार्थैकलुब्धा स्वारातिभ्रशकामा विबुधा अपि विहितायास मीनकूर्मादिरूपै विभुमिव नून पुन आयासयन्ते ॥

**व्याख्या—इत्थमिति ॥ इत्थम्** एव पूर्वोक्तप्रकारेण । **द्विजवरवदनात्** ब्राह्मणमुखात् । **पत्रिका** वैदर्भीपत्रम् । **त्रिकाल श्रुत्वापि** न द्वित्रिवारम् अपितु बहुवारमाकर्ण्य **स न अतृप्यत्** तृप्ति न गत स श्रीकृष्ण । **सपदि भूयश्च** पुनरपि द्रुतम् । **साचिकण्ठ** यथास्यात्तथा सोत्कण्ठयम् । **दायितावाचिकम्** दयिताया प्रियाया वाचिक दयितावाचिकम् । सन्देशवाग्वाचिक स्यात्' इत्यमर । प्रेयस्या सन्देशवाचम् **तम् अवाचयत्** त द्विज वाचन कर्तु प्रैरयत् ॥ यद्यपि द्विज सन्देश बहुवार कथितवान् तथापि अतृप्त श्रीकृष्ण त द्विज पुनरपि वाचनार्थ प्रैरयत् इति भाव । अत्र दृष्टान्तेन समर्थयति । **स्वार्थैकलुब्धा** स्वार्थेन एकेन केवलेन लुब्धा इति स्वार्थैकलुब्धा । भावे क्त । केवलस्वार्थेनविमोहिता, स्वार्थलोलुपाइत्यर्थ । **स्वारातिभ्रशकामा** स्वेषाम् अरातय शत्रव तेषा भ्रश पतन त कामयन्ते ते स्वारातिभ्रशकामा निजशत्रुनिराकरिष्णव । 'अभिघाति परारातिप्रत्यर्थिपरिपन्थिन' इत्यमर **विबुधा** देवा अपि । **विहितायास विभुमिव** विहित आयास उद्योगो येन स तम् । कृतपरिश्रम प्रभुमिव **मीन कूर्मादिरूपैर्नून पुनरायासयन्ते** । मत्स्यकच्छपादिरूपेण पुन. पुनरवतारग्रहणाय श्रम ददति ॥

यथा स्वार्थरता देवा स्वप्रयोजनसिद्ध्यर्थं विभु नष्टशत्रुमपि पुन पुनरवतार-ग्रहणाय श्रापयन्ति स्वेच्यन्तीत्यर्थ । एवमेव स श्रीकृष्णस्तस्मै द्विजाय पत्रवाचनश्रम पुन पुनर्ददाति स्मेति भाव । **आयासयन्ते** इति यसु प्रयत्ने यस्यति । इत्यस्मात् णिच् । ण्यन्तादात्मनेपदम् । 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवस' इत्यनेन आङ्पूर्वकात् यसो ण्यन्तात् परस्मैपदनिषेध । अर्थान्तरन्यासालङ्कार । स्रग्धरा-छन्द ॥ ३८ ॥

**कलयति कमलाक्षी कालकल्प कलाप**
**करकुवलयकोश कालकूट करालम् ॥**
**अतनुपरिभवार्थं नून मात्मानमेषा**
**विरचयति कृशाङ्गी पाण्डुराभ स्मरारिम् ॥३९॥**

**अन्वय** —कमलाक्षी कलाप कालकल्प कलयति । करकुवलय-कोश कराल कालकूट कलयति । नूनम् अतनुपरिभवार्थम् एषा कृशाङ्गी आत्मान पाण्डुराभ स्मरारि विरचयति ॥

**व्याख्या—कलयतीति ॥ कमलाक्षी** कमले इव अक्षिणी यस्या सा । रुक्मिणी । **कलापम्** आभूषणम् । 'कलापो भूषणे बर्हे तूणीरे सहतावपि' इत्यमर । **कालकल्पम्** ईषदून कालो मृत्यु कालकल्प तम् । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' इति कल्पप प्रत्यय । **कलयति** गणयति, भूषणानि किञ्चिन्न्यून मृत्युमेव मन्यत । सा आत्मानम् आभूषणैरलङ्कर्तुं नोत्सहते इत्यर्थ । पुन **करकुवलयकोशम्**—कुवलयस्य कमलस्य कोश कुड्मल स्तबक कुवलयकोश करे हस्ते कुवलयकोश करकुवलयकोश तम् । हस्ते गृहीत कमलगुच्छक तु सा **करालम्** अतिभयङ्कर **कालकूट** विष **कलयति** गणयति । कमलपुष्पमपि सा हस्ते गृहीतु नेच्छति । पुष्प विषमिव त्याज्य मन्यते इत्यर्थ । विरहाग्निप्रभावादिति भाव । अतो **नून** निश्चयेन । **अतनुपरिभवार्थम्**-अतनो कामस्य परिभवार्थं शमनार्थम् । **एषा कृशाङ्गी** तनुमध्या रुक्मिणी । **आत्मान पाण्डुराभ स्मरारि विरचयति** आत्मान स्वामेव गौर शिव विदधाति । सा रुक्मिणी कामपीडोपशमनार्थम् आत्मान शिवत्वरूपलाभार्थं कामारिं गौरवर्णसादृश्येन कर्तुमिच्छति येन कामबाधा न स्यादिति भाव ॥ असम्भव द्वस्तुसम्बधबोधना निदर्शनालङ्कार ॥ मालिनी वृत्तम् ॥३९॥

**मुदा सम योजय मा न चिन्ते सुदाम मुक्तामय याह्यहित्वम् ॥**
**उदानदेश हर हृद्यवायो नुदान्तराम्भ परिनह्यतेऽद्य ॥४०॥**

**अन्वय** —हे मुक्तामय सुदाम ! अहित्व याहि । मा मुदा सम योजय, न चिन्ते । हे हृद्यवायो ! उदानदेश हर । हे अन्तराम्भ नुद । अद्य परिनह्यते ॥

**व्याख्या—मुदेति** ॥ **हे मुक्तामय, सुदाम !** मुक्ता मौक्तिकम् । दामन् सूत्रम् । मुक्ताभि प्रचुर मुक्तामय तत् सबोधने मुक्तामय । 'तत्प्रकृतवचने मयट्' इति मयट् । हे मुक्तायुक्ते उर सूत्रिके ! निज कण्ठावलम्बितमौक्तिकहार सबोधयति । **अहित्व याहि** त्व सर्परूपत्व गच्छ । **मा मुदा सम योजय**-मा हर्षेण सह दशन योजय । दश कुरु इत्यर्थ । **न चिन्ते** अह न खिद्ये । **हे हृद्यवायो !** 'हृदयस्य प्रिय' हृद्य इति यत्, हृद्य वायु हृद्यवायु तत्सबोधने । हे प्राणवायो । उदानदेश हर कण्ठस्थान त्यज । मा निष्प्राणा कुरु इत्यर्थ । **हे अन्तराम्भ** अन्तरे अम्भ. अन्तराम्भ तत्सबोधने । हे अन्तस्था आप **नुद** मा त्यज । 'णुद प्रेरणे' मा शुष्क कुरुइत्यर्थ । कि कारणम् ? **परिनह्यतेऽद्य** अद्य मया परिनह्यते बध्यते-विवाहरूप बन्धन गम्यते इत्यर्थ । 'णह बन्धने' ॥

यतो विवाहबन्धन शिशुपालेन सह निश्चित मन्यमाना रुक्मिणी, अनेन शरीरेण प्रभो श्रीकृष्णस्य समागमम् असम्भव मत्वा येन केन प्रकारेण, प्राणान् त्यक्तुमिच्छ तीति भाव ॥ उपेन्द्रवज्रा वृत्तम् ॥४०॥

**कुर्यामह किं भवता नियन्ता स्वनाथहूत्यै गतवान् स जीव ॥**
**द्रक्ष्यामि भूयोप्युभयो समक्ष कर्मस्थदुश्चेष्टितमीदृश यत् ॥४१॥**

**अन्वय** —भवताम् अह कि कुर्याम् । नियन्ता स जीव स्वनाथ-हूत्यै गतवान् । उभयो समक्षम् ईदृशम् । भूयोपि यत् कर्मस्थ-दुश्चेष्टित द्रक्ष्यामि ॥

**व्याख्या—कुर्यामिति** ॥ पुनरपि रुक्मिणी निजासहायत्व निदर्शयति । **भवता-महं किं कुर्यामिति** यत आवयोर्विवाहविषये शिशुपालप्रवणेन मम भ्रात्रा पितु सकाशात् सर्वाधिकारा सम्पादिता, अतो यत्र पितैवासमर्थ तत्र स्त्रीत्वेन तु अह किं कुर्याम्, अहमसमर्था एव, पुन भवतामपि तवापीष्टानिष्टकरणे असमर्थाऽहमेव । तथा **नियन्ता** मम शरीरसञ्चालक अनुशासकरूपेण प्रवर्तमान **स जीव** ममात्मा **स्वनाथहूत्यै** स्वस्य नाथ ईश्वर तस्य हूत्यै आह्वानाय **गतवान्** । अर्थात् स मम जीव स्वस्वामिन शिवात्मक भवन्तमाकारयितु गतवान्, एव मम देहोपि असहाय एव । अत. मम जीवस्तवसनिकर्षं प्राप्तत्वात् **उभयो.** अनयोर्जीवेश्वरयो **समक्ष**

प्रत्यक्षम् **ईदृशम्** एकत्रागमनरूप जीवशिवैक्य घटितम् पर च **भूयोपि** पुनरपि **यत् कर्मस्थदुश्चेष्टित** मम दिष्टेनादिष्टम् अर्थात् आवयोर्विच्छेदरूप यत् दुश्चेष्टित **तत् द्रक्ष्यामि** दैवाधीनत्वादिति भाव ॥ इन्द्रवज्रा वृत्तम् ॥ ४१ ॥

**श्रीकृष्णचन्द्रेणनिगूढमूढा रत्नाभिधानैरुडुभिश्च युक्ता ।।**
**वर्तेय धूर्ते यदितद्वहेथा न पौर्णिमाशर्वरि गर्वरीतिम् ।।४२।।**

**अन्वय** —श्रीकृष्णचन्द्रेण निगूढ ऊढा (तथा) रत्नाभिधानै उडुभिश्च युक्ता वर्तेय, इति यदि गर्वरीति वहेथा र्तोह हे धृर्ते पौणिमाशर्वरि ! तत् गर्वरीति न वहेथा ॥

**व्याख्या—श्रीकृष्णेति** ॥ **श्रीकृष्णचन्द्रेण** स्वय श्रीकृष्णेन अथ च कृष्ण चन्द्रेण मेघाच्छादितचन्द्रेण **निगूढ** यथा स्यात् तथा गुप्तम् **ऊढा** स्वीकृता अर्थात् जनैरविदितमागतेन श्रीकृष्णेन तथा मेघपटलान्निर्गतचन्द्रेण स्वीकृता । पुनश्च **रत्नाभिधानै** रत्नानि हीरकमाणिक्यादीनि अभिधानानि नामानि येषा तानि तै । हीरकमौक्तिकादिरूपै **उडुभिर्नक्षत्रैर्युक्ता** शोभिता **वर्तेय,** अहमुइत्याकारकशोभा युक्ता भवेय**मिति यदि गर्वरीति** गर्वस्य स्वोत्कर्षाभिमानस्य रीति प्रचार प्रकार वा । 'प्रचार स्यन्दनो रीति ' इत्यमर । **वहेथा** यदि धारये तर्हि **हे धूर्ते** वञ्चके ! अर्थात् विरहिजनवञ्चके **पौर्णिमाशर्वरि** पौर्णिमायामिनि ! **तत्** तस्मादेव कारणात् **गर्वरीतिं न वहेथा** गर्व एव रीति आरकूट पित्तलम् । 'रीति स्त्रियामारकूटो न स्त्रिया मथताम्रकम्' इत्यमर । न वहेथा न धारये, अर्थात् सुवर्णसदृशरागेण शोभित पित्तल यथा सुवर्ण न भवति तद्वत् त्वमेवापि श्रीकृष्णचन्द्रविरहिणीं मा तापदायका नित्य पौर्णिमा न स्थास्यसि ॥ अत्र वर्तेय, वहेथा इति 'हेतु हेतुमतोर्लिङ्' इति सूत्रेण हेतुमति वाक्प्रचारे लिङ् प्रयोग ॥ हे पौर्णिमायामिनि ! वञ्चके ! रत्न-सदृशैर्नक्षत्रै शोभिता पुनश्च श्रीकृष्णेन चन्द्रेण च स्वीकृता एव सकलशोभाढया त्व, श्रीकृष्णविरहिणीं मा विजितामिनिवेशेन स्वोत्कर्षाभिमानरीति न प्रदर्शय, यत सा रीति पित्तलत्वादसत्या क्षणभगुरा एव । सर्वदैव पौर्णिमा न भवतीति भाव ॥ इद्रवज्रा वृत्तम् ॥४२॥

**रे रे चैद्य न चेद्यदूद्वहपदे सेवे क्व सेवैधता**
**किं मन्येऽधम रस्यसे हरिवधूर्लभ्येत गोमायुना ॥**
**दृष्ट्वा मध्यममुत्तमच पुरुष व्यत्यासवत्यासन-**
**द्वन्द्वे प्राहुरिह प्रहासमचलन्मन्यैकरूप बुधा ।।४३।।**

**अन्वय** —रे रे चैद्य! यदूद्वहपदे न सेवे चेत् (तर्हि) सेवा क्व एधताम्। हे अधम! रस्यसे कि मन्ये, हरिवधू गोमायुना लभ्येत? इह बुधा व्यत्यासवत्यासनद्वन्द्वे मध्यमम् उत्तम च पुरुष दृष्ट्वा प्रहासम् अचलन्मन्यैकरूप प्राहु ॥

**व्याख्या—रे रे इति ॥ रे रे चैद्य!** आक्षेपे, हे चैद्य शिशुपाल! **यदूद्वह पदे न सेवे चेत्** यद्यह श्रीकृष्णचरणयो सेवा न करवाणि चेत् तर्हि **सेवा क्व एधताम्** सेवावृत्ति कुत्र वर्धताम्। अर्थात् कस्य पुरुषस्य सेवा करवाणि न कस्यापीत्यर्थ। यत तादृक् सेव्यो न वर्तते इति भाव। **हे अधम** नीच! **रस्यसे किं मन्ये?** 'म यधातुरुपपद यस्य धातो तस्मिन् प्रकृतिभूते सति मध्यम स्यात् परिहासे गम्यमाने, मन्यतेस्तूत्तम स्यात् स चैकार्थस्य वाचक स्यात्' इति विधानात्। अत्र 'मन ज्ञाने' इति धतु रम क्रीडायामिति धातोरुपपदवाचक तस्मात् 'रस्यसे' इति उत्तमपुरुषस्य स्थाने मध्यम, तथा 'मन्ये' इति मध्यमस्य स्थाने उत्तमपुरुषप्रयोग, अर्थात् मया रुक्मिण्यासह रस्ये क्रीडिष्ये इति मन्यसे किम्? किं तु नैतत् युज्यते परिहासत्वात्। कथम्? **हरिवधू** सिंहपत्नी, अह श्रीकृष्णरमणी च **गोमायुना** शृगालेन। पक्षे गवो नत्रयो मायु पित्त यस्य स गोमायु तेन। नेत्रयो पित्तवता, कामलोपहतेन ममोपरि दृष्टिक्षेप कुर्वता भवता **लभ्येत** प्राप्ता भवेत्? इति काकु, नैव लभ्यते किन्तु परिहास एव भवतीति भाव। **इह बुधा प्राहु** किं प्राहु? यतो भवान् अधम, अधमेन श्रीमता भोग्यवस्तु स्वीकारे इह लोके बुधा पडिता प्राहु दण्ड कथयन्ति पुन परिहास च। कथ? यतो बुधा **व्यत्यासवत्यासनद्वन्द्वे** व्यत्यासवति विपर्यासवति आसनद्वन्द्वे सति आसन स्थान तस्य द्वद्व युद्ध, सघर्ष युगल च तस्मिन्। एकस्य स्थाने अन्येन कृताधिकारसघर्षे सति, तथा धातुविशेषे युगले च। **मध्यम उत्तम च पुरुष दृष्ट्वा**। मध्यम निकृष्ट त्वादृशमधममित्यथ, पुनश्च उत्तम श्रीकृष्णसदृशमित्यथ, पुरुष पुमास दृष्ट्वा अर्थात् एतादृश, मध्यमोत्तमयोर्मध्ये मत्सदृशस्याधिकारसघर्ष दृष्ट्वा, तथा व्याकरणोक्त मध्यमपुरुषस्य स्थान उत्तमपुरुषप्रयोग तथा उत्तमस्य स्थाने मध्यमपुरुषप्रयोग दृष्ट्वा **प्रहासम्** उपहास **प्राहु**। कथ भूत प्रहासम्? **अचलन्मन्यैकरूपम्** अचलन्ती अविचलन्ती अर्थात् स्थिता मन्या क धरा सैव एकरूप स्थिति यथा भवति तथा। निश्चयत्वेन विस्मयादि भावरहिता एकरूपत्वेनाविचला मन्या इत्यर्थ। सशयविस्मयादौ मन्या चलतीति प्रसिद्धम्। व्याकरणपक्षे मन्यते अविचलत् एकरूप प्रहासम् उपहास विशेषण प्राहु वदति। अत्रैव विस्मयेन मन्या न चलति 'प्रहासे च मन्योपपदेमन्यतेरुत्तमएकवच्च' तथा 'एहिमन्ये प्रहासे लृट्' इति पाणिनिसूत्रप्रमाणात् एहि मन्ये भक्त भोक्ष्यसे इति उदाहरणवत् ॥ शार्दूलविक्रीडित वृत्तम्। श्लेषालङ्कार। व्याकरणचमत्कृतिश्च ॥ ४३ ॥

**तनूदशोन्मादवचासि चैव प्रभो मयेत्येवमुदीरितानि ।।**
**तस्या विवाहे यदिवाऽवकाशो घटेत विस्ताय तदा वदेयम् ।।४१।।**

**अन्वय**—हे प्रभो मया च इत्येवम् उदीरितानि, तस्या तनूदशोन्मादवचासि एव। यदि विवाहे अवकाश घटेत तदा विस्ताय वदेयम् ।।

**व्याख्या—तनूदशेति ॥** स द्विज कथन समारोपयति। **हे प्रभो मया च इत्येवम् उदीरितानि** हे स्वामिन् अधुना यानि यानि यथापूर्वं वचनानि मया कथितानि तानि **तस्या** भैष्म्यास्**तनूदशोन्मादवचासि एव** तनोर्दशा अवस्था तनूदशा। शरीरावस्था इत्यर्थ। तनूदशाया उन्मादश्चित्तविभ्रम तस्य वचासि वचनानि तनूदशोन्मादवचासि। तस्या यौवनावस्थाजनितचित्तविभ्रमस्य वचनानि एव मया कथितानि न विवर्धितानि नाल्पितानि नान्यानि च इत्यर्थ। 'दशाऽवस्थानेकविधा,' 'विशेष कालिकोऽवस्था' इति चामर। विशेष कालिक। या कालिका विशेषकालकृता यौवनादिरूपा यथा बाल्यावस्था यौवनावस्था इत्यादि। अत पर **यदि** तस्या **विवाहे अवकाशो घटेत** विलम्ब भवति चेत्। **तदा विस्तार्य वदेय** तदा विस्तारपूर्वक कथयेयम् ॥ साराशरूपेण वर्णितानि उन्मादसूचकानि तस्या वाक्यानि सन्ति। त्वया सह विवाहकर्मणि यदि विलम्बो भवति तदाह तानि विस्तार्य वर्णयेयमिति भाव ॥ उपजातिवृत्तम् ॥ ४४ ॥

**इत्थमाप्तवचने धृतत्वरे तत्वरे चलितुमीश्वरोपि स**
**कार्यसिद्धिसुविहारचत्वरे गत्वरे बत दधद्रथे दृशम् ।।४५।।**

**अन्वय**—इत्थ धृतत्वरे आप्तवचने, बत स ईश्वरोपि कार्यसिद्धिसुविहारचत्वरे गत्वरे रथे दृश दधत् चलितु तत्वरे ।।

**व्याख्या—इत्थमति ॥ इत्थम्** एव प्रकारेण। **धृतत्वरे** धृता त्वरा यस्मिन् तत् धृतत्वर तस्मिन्। शीघ्रगमनार्थं प्रचोदिते। **आप्तवचने** आप्तस्य प्रत्ययितस्य वचन कथन तस्मिन्। 'आप्तप्रत्ययितौ समौ' इत्यमर। एव प्रकारेण शीघ्रगमनार्थं प्रचोदितद्विजवचनोपरि। **बत ईश्वरोपि**—पश्य स श्रीकृष्ण स्वय सर्वं सम्पादयितु समर्थोपि। **कार्यसिद्धिसुविहारचत्वरे**—कार्यस्य सिद्धि सम्पन्नता, कार्यसिद्धे सुविहार परिक्रम परिभ्रमणम्। 'विहारस्तु परिक्रम' इत्यमर। कार्यसिद्धिसुविहार स एव चत्वर नानामार्गगमनस्थान चतुष्पथमित्यर्थ तस्मिन्। **गत्वरे रथे** गतिमति रथे। **दृश दधत्** दृष्टिक्षेप कुर्वन् कार्यसम्पादनार्थं रचिते चत्वरे रथ गच्छन्त पश्यन्। **चलितु तत्वरे** 'ञित्वरा सम्भ्रमे लिटि तत्वरे'। स श्रीकृष्ण

शीघ्रगमनाय त्वरामकरोत् ।। एव प्रकारेण शीघ्रगमनार्थं द्विजवचनेन प्रचोदित, अङ्गीकृतकार्यस्य सम्पादनार्थं विहरन्त रथोपरि दृष्टिक्षेप कुर्वन् स श्रीकृष्ण शीघ्रगमनाय त्वरामकरोदिति भाव ।। यमकालङ्कार ।। रथोद्धता छन्द ।। ४५ ।।

**साक्षीकृत्य द्विजाग्र्य निजचरणयुजो लब्धकल्पेशभावम्**
**रुक्मिण्या मुख्यजीवो द्विजऋषभपति स्यन्दन नन्दनाङ्गम् ।।**
**सश्रित्य प्राप्तुमेनान्दिवमिव निखिलै पार्थिवै प्रार्थ्यमाना-**
**मङ्गीकुर्वन् विदर्भप्रपथमनुययौ द्वासुपर्णोक्तमर्थम् ।।४६।।**

**अन्वय**—निजचरणयुज रुक्मिण्या मुख्यजीव लब्धकल्पेशभाव द्विजाग्र्य साक्षीकृत्य, द्विजऋषभपति नन्दनाङ्ग स्यन्दन सश्रित्य निखिलै पार्थिवै प्रार्थ्यमानाम् दिवमिव एना प्राप्तु द्वासुपर्णोक्त-मर्थम् अङ्गीकुर्वन् विदर्भप्रपथम् अनुययौ ।।

**व्याख्या—साक्षीकृत्येति ।। निजचरणयुज** निज चरण निजचरण त युनक्ति सा निजचरणयुक् तस्या । 'सत्सूद्विषत् ' इत्यनेन क्विप् । स्वचरणलीनाया **रुक्मिण्या** । **मुख्यजीव** एकमात्र जीवनाधार श्रीकृष्ण । **लब्धकल्पेशभावम्** कल्पस्य प्रलयस्य ईश स्वामी कल्पेश । 'सवर्त प्रलय कल्प' इत्यमर । तस्य भाव कल्पेशभाव । लब्ध कल्पेशभावो येन स तम्, लब्धकल्पेशभावम् । प्राप्त-परमात्मभावम् । **द्विजाग्र्य** अग्रमिव अग्र्य । 'शाखादिभ्यो य ' इत्यनेन 'य '। द्विजेषु अग्र्यो द्विजाग्र्य तम् । रुक्मिणीप्रहितब्राह्मणवर्यम् । **साक्षीकृत्य** 'साक्षाद्द्रष्टरि सज्ञायाम्' इत्यनेन इनि, साक्षाद्द्रष्टा साक्षी । द्रष्टा इति परिकल्प्य । च्वि प्रत्यय । **द्विजऋषभपति** द्विजा पक्षिण । 'दन्तविप्राण्डजा द्विजा' इत्यमर । तेषा तेषु वा ऋषभ श्रेष्ठ द्विजऋषभो गरुड तस्य पति रसौ श्रीकृष्ण । **नन्दनाङ्ग** नन्दनस्य इन्द्रोपवनस्य अङ्ग प्रतीक नन्दनवने स्थितम् ऐन्द्रमित्यर्थं । अथवा नन्दनानि न दयन्तीनि अङ्गानि धुरनस्चक्रनेम्यादीनि अङ्गानि यस्य स तम् । सुन्दर **स्यन्दन** रथम् । सश्रित्य आश्रित्य अधिष्ठायेत्यर्थ । **निखलै** समस्तै । **पार्थिवै** राजभिर्मनुष्यैश्च । **प्रार्थ्यमानाम्** अभ्यर्थनीयाम् । **दिवमिव** स्वर्गमिव यथा स्वर्ग सर्वैरभिलष्यते तद्वत् **एना** रुक्मिणी **प्राप्तु** समासादयितुम् । **द्वासु पर्णोक्त** द्वासुपर्णमन्त्रे उक्तम् **अर्थम्** अभिधेयम् **अङ्गीकुर्वन्** स्वीकुर्वन् । **विदर्भ-प्रपथ** विदर्भाणा प्रपन्था तम् विदर्भमार्गम् **अनुययौ** अनुससार ।

'**द्वासुपर्णोक्तमर्थमङ्गीकुर्वन्**' इति मुण्डकोपनिषदि तृतीयखण्डस्य प्रथमो मत्र । अमुमर्थमेव व्यनक्ति । '**द्वासुपर्णा सयुजा सखाया समान वृक्ष**

**परिषस्वजाते ॥ तयोरन्य पिप्पल स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति** ॥१॥ यथा आत्मपरमात्मानौ जीवशिवौ **द्वा सुपर्णा** द्वौ सुपर्णौ पक्षिणौ, **सयुजा** = सयुजौ सदा परस्परसाहचर्येण निवसन्तौ। **सखाया**=मित्रभाव प्राप्तौ अत सखायौ। **समान वृक्षम्** एकमेव शरीररूप वृक्षम्। **परिषस्वजाते** आश्रित्य वर्तेते। एव शिवरूपोद्विजाग्र्यो ब्राह्मण, रुक्मिण्या मुख्यजीवो द्विजऋषभपति श्रीकृष्णश्च **समान वृक्ष** एकमेव स्यन्दनम् अधितिष्ठन्तौ परस्परस्य मित्रभाव प्राप्तौ रथारूढौ आस्ताम्। द्विजशब्द श्लिष्टत्वेन विप्राण्डजौ बोधयति। तयोर्जीवशिवयो। **अन्य** एक। **स्वादुपिप्पलम् अत्ति**। अर्थात् जीवश्च मायया मोहित कर्मफलानि भुनक्ति एवमेव कर्मफलभोगार्थ जीवरूप श्रीकृष्ण विदर्भान् रुक्मिणी लाभाय गच्छन् वर्तते। **अन्य** शिवरूपो द्विज '**साक्षी**' केवल द्रष्टृरूपेण वर्तमानत्वात् **अनश्नन्** कर्मफलम् अभुञ्जन् अनासक्तत्वात् **अभिचाकशीति** प्रेक्षते केवलम्। साक्षिरूपेण पश्यति न तु कर्मप्रसक्तो भवति इत्यर्थ ॥ 'द्विज-ऋषभपति' इत्यत्र 'ऋत्यक' इति सूत्रेण समासे प्रकृतिभाव ॥ श्लिष्ट-परम्परित रूपकमलङ्कार ॥ स्रग्धरा वृत्तम् ॥४६॥

**आहत्य कुण्डिनपुर प्रति भीष्मकन्या**
**चैद्याय साधयितुमुन्मदमागतानाम्।**
**राज्ञा पराभवजनु पुरुकीर्तिदाय**
**भ्रातुर्विभज्य किमु हर्तुमगाद्बलोऽपि** ॥४७॥

**अन्वय** —चैद्याय भीष्मकन्या साधयितु कुण्डिनपुर प्रति आहत्य, उन्मदम् आगताना राज्ञा पराभवजनु पुरुकीर्तिदाय भ्रातु विभज्य हर्तु किमु बलोऽपि अगात् ॥

**व्याख्या—आहत्येति ॥ चैद्याय** चेदिषु भव चैद्य तस्मै। शिशुपालाय। **भीष्मकन्या** रुक्मिणीं **साधयितु** तस्या प्राप्ति कारयितुम् इत्यर्थ। **कुण्डिनपुर** भीष्मकनगर प्रति **आहत्य** एकत्रभूत्वा (एकीभूय वा)। **उन्मदम्** उद्गतो मदो यस्मिन् कर्मणि तत् उन्मदम्। अव्ययम्। **आगताना** सम्प्राप्ताना **राज्ञा** तत्पक्षीयाणा मदान्मत्तभूपालानाम्। **पराभवजनु पुरुकीर्तिदाय** पराभवात् जनुर्जन्म यस्य तत् पराभवजनु। पराभवजनुष पुरुकीर्त्ति विपुल यश सा पराभवजनु पुरुकीर्ति सैव दाय पैतृकधन तम्। तेषा भूपतीना पराभवाज्जनित विपुल यश तत् पैतृक धनमिव **भ्रातु** श्रीकृष्णात्। **विभज्य** हर्तुम्, विभाग कृत्वा गृहीतुम्। **किमु बलोऽपि** किम् बलरामोऽपि **अगात्** तत्र कुण्डिनपुरमाजगाम।

सराजान शिशुपाल निहत्य तत्पराभवाज्जनित विपुल यश पैतृक धन विभाजनीय सम्पदमिव विभक्तुमिति व्याजेन किम् बलरामोऽपि तत्र श्रीकृष्णमन्वगच्छतिस्मेति भाव ॥ उत्प्रेक्षालङ्कार । वसन्ततिलका छन्द ॥४७॥

**उद्वाहोऽय त्रियामान्तरित इति न किम्वेत्ति सर्वज्ञदेव**
**सोऽप्यद्याऽपि द्विजाग्र्य श्रवणपथसुधामेत्य वार्ता न युङ्क्ते**
**किम्वा मेऽनिष्टदिष्ट तदधिकजवन श्रीपते सत्पुरी ता**
**पुण्यामन्त प्रयातु विबलमिव पतद्द्वारदेश निरुन्धे ॥४८॥**

**अन्वय**—'अयम् उद्वाह त्रियामान्तरित' इति सर्वज्ञदेव कि न वेत्ति । स द्विजाग्र्य अपि अद्यापि एत्य श्रवणपथसुधा वार्त्ता न युङ्क्ते । किम्वा तदधिकजवन मे अनिष्टदिष्ट श्रीपते ता पुण्या सत्पुरी अन्त प्रयातु विबलमिव पतत् द्वारदेश निरुन्धे ॥

**व्याख्या—उद्वाह इति ॥ अयम् उद्वाह** मे विवाह । **त्रियामान्तरित** अन्तर् इत अन्तरित । त्रिरात्र्यवकाशेन प्राप्त **इति स सर्वज्ञदेव** श्रीकृष्ण **किं न वेत्ति** न जानाति किम् ? **स द्विजाग्र्यो** द्विजश्रेष्ठ सुदेवोऽपि । **अद्यापि एत्य** अद्यापिपर्यन्तम् इहागत्य । **श्रवणपथसुधा वार्त्ताम्** अमृततुल्य श्रवणसुखद प्रभोरागमनवृत्तान्तम् अपि **न युङ्क्ते** न सयोजयति, न कथयतीत्यथ । **किम्वा** अन्यतोपि । **तदधिकजवन** तस्माद् द्विजाद् अधिकजवन तरस्वि **मे अनिष्टदिष्ट** मम दुर्भाग्यम् । **श्रीपतेस्ता पुण्या सत्पुरीं** ता सुभगा द्वारकापुरीम् **अन्त प्रयातुम्** अभ्यन्तरगमनाय । **विबलमिव पतत्** अशक्ततया असमर्थ देहल्या पतित्वा । **द्वारदेश निरुन्धे** बहिरागमनमार्गमरुणत् ॥ किम्वा अन्यतोपि यत् द्वारका द्विजमनुगत मे जवन दुर्भाग्य प्रभो सम्मुखे स्थातुम् असमर्थत्वात् तस्या शुभद्वारकाया प्रवेशद्वारमेवापतत् येन द्विजस्य बहिरागमने निरोधोऽभूदिति किम् इति भाव ॥ स्रग्धरा वृत्तम् ॥४८॥

**इत्थ तत्प्राप्तिचिन्ताभ्यधिकतरकृशस्निग्धनीलालकाऽव–**
**प्रान्ते बभ्राम दभ्राभ्ररुगितरगुणा सा सुशीलाऽऽलयस्य ॥**
**मुह्यन्ती लालपन्ती हृदि चिरविरहाप्पित्तकीलालवाले**
**खेदादुद्यत्प्रमीलाऽलघुनयनभवा हन्त कीलालधारा ॥४९॥**

**अन्वय**—इत्थ तत्प्राप्तिचिन्ताभ्यधिकतरकृशस्निग्धनीलालका, दभ्राभ्ररुगितरगुणा सा सुशीला, चिरविरहाप्पित्तकीलालवाले हृदि

लालपन्ती, खेदादुद्यत्प्रमीला मुह्यन्ती, अलघुनयनभवा कीलालधारा (मुञ्चन्तीति शेष ) आलयस्य अवप्रान्ते बभ्राम । हन्त ! ॥

**व्याख्या—इत्थमिति** ॥ **इत्थम्** पूर्वोक्तप्रकारेण । **तत्प्राप्तिचिन्ताभ्यधिकतरकृशास्निग्धनीलालका** तस्य श्रीकृष्णस्य प्राप्ति तत्प्राप्ति तस्याश्चिन्ता आध्यान तया अभ्यधिकतर सर्वतोपरि बहुल कृशा कृशत्व गता सा तत्प्राप्तिचिताभ्यधिकतरकृशा । स्निग्धा मसृणा नीला कृष्णा अलका चूर्णकुन्तला यस्या सा स्निग्धनीलालका । तत्प्राप्तिचिन्ताभ्यधिकतरकृशा एव स्निग्धनीलालका सा । तस्य श्रीकृष्णस्य अतिशयचिन्तया कृशत्व गता तथा मसृणकृष्णचूर्णकुन्तलधारिणी सा रुक्मिणी । पुन **दभ्राभ्ररुगितरगुणा** दभ्र कृश विरलमित्यर्थ । 'सूक्ष्म श्लक्ष्ण दभ्र कृश तनु' इत्यमर । दभ्र यत् अभ्र मेघ शुभ्रमेघइत्यर्थ तस्य रुक्कान्ति तस्या इतरो भिन्नो गुणो वर्णो यस्या सा । तस्य चिन्तया सा धसरवर्णता गता इत्यर्थ । **सा सुशीला** सुष्ठु शील चारित्र्य यस्या सा । सा सुचरित्रा । **चिरविरहाप्पित्तकीलालवाले हृदि** चिरविरहस्य अप्पित्तम् अग्नि । 'शुचिरप्पित्तमौर्वस्तु' इत्यमर । तस्य कीला ज्वाला । प्रज्वलितविरहाग्निरित्यर्थ । 'वह्नेर्द्वयोर्ज्वालकीलावचिर्हेति शिखा स्त्रियाम्' इत्यमर । सा एव आलवालम् आवालम् । कुण्डमित्यर्थ, यस्य तत् । तस्मिन् । हृदि । प्रज्वलितचिरविरहाग्निकुण्डे इव हृदये । विरहाग्निनापीडित हृदये इत्यर्थ । **लालपन्ती** 'लप' व्यक्ताया वाचि तस्मात् यङ्लुगन्तात् शत्रन्त पद, स्त्रिया ङीप । पुन पुन अतिशयेन भाषमाणा विकृतधीरिवेति भाव । **खेदादुद्यत्प्रमीला** खेदात् मानसिकपीडाया कारणात् उद्यन्ती प्रमीला तन्द्री निद्रान्तालस्य यस्या सा खेदादुद्यत्प्रमीला, उत्थितनिद्रान्तालस्या । **मुह्यन्ती** मोह गता । अत्यन्तश्रमेण सर्वेन्द्रियसामर्थ्याऽऽलस्यात् शैथिल्य प्राप्ता इति भाव । तस्मात् **अलघुनयनभवा** आयतनेत्रसञ्जाता । **कीलालधारा** अश्रुधारा । मुञ्चन्तीति शेष । **आलयस्य** गृहस्य **अवप्रान्ते बभ्राम**—विरहिणी या गति गच्छति ता प्राप्ता उत्कलमना गृहाङ्गणे भ्रमति स्म । **हन्त** इति खेदम् ॥ यमकालङ्कार ॥ स्रग्धरा वृत्तम् ॥४९॥

**हरिणीदृशोऽथ युगलाद्दृशोर्गलज्जलवाहिनीपतिविवृद्धिखण्डने ॥**
**प्रभुणा पुरोपवनगेन वाडव प्रहितोऽग्रत स पुनरुक्तता दधौ ॥५०॥**

**अन्वय**—अथ हरिणीदृश दृशो युगलात गलज्जलवाहिनीपतिविवृद्धिखण्डने पुरोपवनगेन प्रभुणा प्रहितोऽग्रत स वाडव पुनरुक्तता दधौ ॥

**व्याख्या—हरिणीदृश इति ॥ अथ हरिणीदृश** हरिणीदृशौ इव दृशौ यस्या सा तस्या । रुक्मिण्या । अनेन तस्या आयते चञ्चले च नेत्रे प्रदर्शिते । **दृशोर्युगलात्** नेत्रद्वयात् । **गलज्जलवाहिनीपतिविवृद्धिखण्डने** गलत् स्रवत् यत् जलम् अश्रु तस्य वाहिनी नदी तस्या पति सागर तस्य विवृद्धिर्विस्तार तस्य खण्डन नाशोऽवरोध तस्मिन् । तस्या नेत्रद्वयाद्गलदश्रुसागरस्यावरोधनार्थे । **पुरोपवनगेन** पुरस्य कुण्डिनपुरस्य उपवन गच्छतीति पुरोपवनग तेन । 'अन्यत्रापि दृश्यते' इति वार्तिकेन गमेर्डे । 'अनुदात्तोपदेश ' इत्यादिना मलोप । कुण्डनपुरस्योपवनस्थितेन **प्रभुणा** श्रीकृष्णेन । **प्रहितोऽग्रत** धा धातोर्निष्ठापेक्षया 'दधातेर्हि' इति सूत्रेण हि स्यात् । प्रहित प्रेषित । पूर्वस्मादेव अग्रे प्रेषित **स वाडव** । वाडवशब्द श्लिष्टत्वेन ब्राह्मणवाडवानलौ बोधयति । उत्प्रेक्षायाम् अस्या अश्रुसागरशोषणार्थं द्विजरूपो वाडवो वाडवानल श्रीकृष्णेन पुरस्तादेव प्रेषित इत्यर्थ । स वाडवो द्विज **पुनरुक्तता दधौ** प्रभो श्रीकृष्णस्य सन्देशरूप प्रतिवचन कथयित्वा अश्रुशोषण चकार । पुनश्च श्रीकृष्णागमनवार्त्ता कथयित्वा तस्या आनन्दाश्रुपातानेव वर्धयन्, अश्रुसागर व्यवर्धयत् इति भाव । उत्प्रेक्षा सश्लिष्टोपमालङ्कार । मञ्जुभाषिणी वृत्तम् ॥५॥

**प्राप्त विलोक्य सहसा कृतकार्यहृष्ट**
**सा भीष्मभूपदुहिता महिता द्विजाग्र्यम् ॥**
**देय बतोचितमिहाऽनुपलभ्य वस्तु**
**लज्जाभरेण ननु नम्रशिरोधराऽऽसीत ॥५१॥**

**अन्वय**—सा भीष्मभूपदुहिता महिता कृतकार्यहृष्ट द्विजाग्र्य सहसा प्राप्त विलोक्य, बत, उचित देय वस्तु इह अनुपलभ्य, लज्जाभरेण नम्रशिरोधरा आसीत् ननु ॥

**व्याख्या—प्राप्तमिति ॥ सा भीष्मभूपदुहिता । महिता** 'मह पूजायाम्' इत्यस्मात् कर्मणि क्त 'आर्धधातुकस्येड्वलादे' इति इट् । महनीया रुक्मिणी । **कृतकार्यहृष्टम्** कृत कार्य कृतकार्य तेन हृष्टो मुदित तम् । कार्यसम्पन्नतया मुदित, द्विजाग्र्य । **सहसा** अतर्कितमिव **प्राप्तम्** आगत **विलोक्य** । **बत** आश्चर्ये । **उचित** योग्य । **देय** दातु योग्य देयम् । 'ईद्यति' इत्यनेन ईत् दा+ई+यत्=देयम् । **वस्तु इह अनुपलभ्य** तस्मै द्विजाय योग्यमुपहार दातुम् अत्र अप्राप्य । इहाविद्यमानत्वादिति भाव । सा **लज्जाभरेण नम्रशिरोधरा आसीत्** । धरतीति धरा पचाद्यच् स्त्रिया टाप् शिरस. धरा शिरोधरा कन्धरा ग्रीवेत्यर्थ. ।

लज्जया नतमुखी बभूव **ननु** निश्चयेन। अथ च खलु प्रणाम चकार, नमनकर्मणा स्वस्या असामर्थ्यं निष्कृतिहेतवे प्रकटीचकारेति भाव ॥ वसन्ततिलका वृत्तम् ॥५१॥

**यया विदर्भेन्द्रभुवान्वभूयत प्रतप्तता खेदमहादवार्तया ॥**
**तयैव मोदाङ्गरुहाङकुरावली निरभ्रवृष्टयेव मुकुन्दवार्तया ॥५२॥**

**अन्वय** —यया विदर्भेन्द्रभुवा खेदमहादवार्तया प्रतप्तता अन्वभूयत, तयैव निरभ्रवृष्टया इव मुकुन्दवार्तया मोदाङ्गरुहाङ्कुरावली अनु अभूयत ॥

**व्याख्या—ययेति** ॥ **यया विदर्भेन्द्रभुवा** भवतीति भू इति क्विप्। विदर्भेन्द्रस्य भू कन्या इत्यर्थ। विदर्भाणाम् इन्द्रो विदर्भेन्द्रो भीष्मकस्तस्मात् भूर्भवन यस्या सा तया। रुक्मिण्या। **पृथ्वीपक्षे**, विदर्भेन्द्रस्य भू विदर्भेन्द्रभू तया। धरित्र्या च। **खेदमहादवार्तया** खेद एव महान् दवो वनाग्नि खेदमहादवस्तेन आर्ता पीडिता या सा तया। दु खवनहुताशनपीडितया। **पक्षे** खेदश्च महादवश्च खेदमहादवौ ताभ्याम् आर्ता पीडिता तया। दु ख तथा दावानलपीडा सहमानया धरित्र्या। **प्रतप्तता** महान्सन्तापोऽन्व**भूयत** अनुभूता। **तयैव** रुक्मिण्या धरित्र्या च **मुकुन्दवार्तया** मुकुन्दस्य श्रीकृष्णस्य वार्ता तया-मुकुन्दागमनवृत्तान्तेन। **निरभ्रवृष्ट्येव** निर्नास्ति अभ्र मेघो यस्या वृष्ट्या सा तया, घनरहित वृष्ट्येव **मोदाङ्गरुहाङ्कुरावली** अङ्गरुहाणाम् अङ्कुरा अङ्गरुहाङ्कुरा। मोदेन अङ्गरुहाङ्कुरा मोदाङ्गरुहाङ्कुरास्तेषाम् आवली पङ्क्तिर्मोदाङ्गरुहाङ्कुरावली। आनन्दोत्पादित रोमाञ्चाङ्कुरावली **अन्वभूयत** अनुभूता ॥ यथा ग्रीष्मे सन्तप्ता भूराकस्मिकजनितवृष्टया स्वान्तस्थगतबीजस्य प्ररोह करोति, एवमेव मुकुन्दागमनवार्ता तस्या खेदजनितसन्ताप दूरीकृत्य तस्या वपुषि आनन्दजान् रोमाञ्चान् प्रकटयामासति भाव। श्लिष्टपरम्परितोपमालङ्कार ॥ वशस्थ वृत्तम् ॥५२॥

**अमहति हृदि स्थित्या क्लिश्नन्प्रसाद इवोच्छ्रितो**
**विनतजनतानल्पाभीष्टप्रपूर्त्तिविधिक्षम ॥**
**बहिरुपगत साकार सन्नलक्ष्यत सच्छबि**
**क्षितिपतिभुवा प्रासादो द्राक्कपर्दिमृगीदृश ॥५३॥**

**अन्वय** —विनतजनतानल्पाभीष्टप्रपूर्तिविधिक्षम, कपर्दिमृगीदृश प्रसाद अमहति हृदि स्थित्या क्लिश्नन्, साकार सन् उच्छ्रित सच्छबि बहिरुपगत प्रासाद इव क्षितिपतिभुवा द्राक् अलक्ष्यत

**व्याख्या—अमहतीति ॥ विनतजनतानल्पाभीष्टप्रपूर्तिविधिक्षम** विनता भक्तिभावेन विनम्रा या जनता जनसमूह तस्या अनल्पमभीष्ट भूरि इच्छित तस्य प्रपूर्तिविधि पूरणविधान तस्मिन् यो क्षम समर्थ स । भक्तिभावेन विनम्राणा भक्तानाम् इच्छितदोऽसौ । **कपर्दिमृगीदृश प्रसाद** कपर्दोऽस्ति यस्य स कपर्दी । 'कपर्दोऽस्य (शङ्करस्य) जटाजूट' इत्यमर । मृग्या दृशाविव दृशौ यस्या सा मृगीदृक् । कपर्दिनो मृगीदृक् कपर्दिमृगीदृक् तस्या । अम्बाया भवान्या । प्रसाद प्रसन्नता । 'प्रसादस्तुप्रसन्नता' इत्यमर । अनुग्रह इत्यर्थ । **अमहति हृदि स्थित्या क्लिश्नन्** न महत् अमहत् लघु तस्मिन् अमहति, हृदि मानसे । स्थित्या स्थितिर्निवास तया । असौ भवान्या प्रसाद तस्या रुक्मिण्या मानसे सङ्कुचित स्थाननिवासत्वेन क्लिश्नन् क्लेश दु खमनुभवन् । क्लिश्नन्निति क्लिशू विबाधने इत्यस्मात् क्लिश्नातीति क्लिश्नन् । शत्रन्तम् । **साकार सन् उच्छ्रित**—श्रीकृष्णागमनवार्तया साकारो भूत्वा मूर्तिमान् उन्नत **स्वच्छवि** शोभनीय । **बहिरुपगतो** हृदो बहि प्राप्त । **प्रासाद इव** प्रासादरूपो मन्दिराकृति **क्षितिपतिभुवा** राजकन्यया रुक्मिण्या **द्राक् अलक्ष्यत** दृष्ट ॥

यो भवान्या प्रसाद सर्वेषा भक्ताना मन कामना पूरयितु समर्थ स तस्या रुक्मिण्या सङ्कुचितस्थानवति हृदि पूर्वमेव वास गत, पर तत्र स्थानसङ्कोचात् तेन कष्टेन वास कृत । सम्प्रति कृष्णागमनवार्तयाऽसौ प्रसाद आकारयुक्त सुन्दर विशालप्रासादरूप धारयित्वा हृदयाद्बहिरागत । अतोऽनया राजकन्यया स प्रसाद साक्षादम्बाया सुन्दरप्रासादरूपेण दृष्ट । प्रसादस्य हृदिस्थितत्वात् अमूर्तत्वाच्च अदृश्यत्वम् । मूर्तत्वात् सुन्दरत्वात् प्रसादस्य प्रासादभवनात् दर्शनीयत्वमिति उत्प्रेक्षा ॥ हरिणी छन्द ॥५३॥

**असुविरहिता अप्यादित्या मनीषितपूरणा-**
**ज्जनमविपद कुर्वन्तीत्थ सुदेवसुशिक्षिता ॥**
**प्रतिकृतिमयीमम्बामार्चन्महीपतिकन्यका**
**विकृतिमनधीयानैर्नूत्नै समर्हणवस्तुभि ॥५४॥**

**अन्वय**—असुविरहिता अपि आदित्या मनीषितपूरणात् जनम् अविपद कुर्वन्ति । इत्थ सुदेवसुशिक्षिता महिपतिकन्यका प्रतिकृतिमयीम् अम्बा विकृतिम् अनधीयानै नूत्नै समर्हणवस्तुभि आर्चत् ॥

**व्याख्या—असुविरहिता इति ॥ असुविरहिता अपि आदित्या** अदितेरपत्यानि आदित्या 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्य' इति ण्य प्रत्यय ।

पाषाणादिनिर्मिता देवता यद्यपि प्राणरहिता अचेतना दृश्यन्ते, तथापि **मनीषित पूरणात्** मनस ईपित मनीषितम्। 'शकन्ध्वादिषु पररूपम् वाच्यम्' इति वार्तिकेन पररूपम्। मनीषितस्य पूरण पृति तस्मात्। इच्छापूर्त्तेर्जन भक्तम् **अविपद्** विपत्तिरहितम् **कुर्वन्ति**। **इत्थ सुदेवेन** द्विजेन **सुशिक्षिता महीपतिकन्यका** भैष्मी। **प्रतिकृतिमयीं** प्रतिमारूपिणीम् **अम्बाम्**। **विकृतिम् अनधीयानै** विकृति विकार प्रकृतेरन्यथाभाव ताम्। अनधीयानै इङ् अध्ययने नित्यमधिपूर्व। अधीते इति अधीयान। इति शानच। न अधीयाना न भजमाना अनधीयाना तै। निरन्तरमप्राप्नुवद्भि। **नूत्नै** नवीनमेवाहृतै। **समर्हणवस्तुभि** पूजोचितै योग्यद्रव्यै। **आर्चत्** पूजयामास ॥ हरिणी छन्द ॥५४॥

**कृतजनकभूप्रान्तस्थित्यात्मकर्णपरिग्रहा-**
**मिव स भगवान्भर्ता भूयात्परो न भवानि मे ॥**
**इति भगवती याच्ञादम्भाच्चिकीर्षति सा पुरा**
**नृपतितनया व्यक्तापर्णाभिधानसमर्थनाम् ॥५५॥**

**अन्वय** —'हे भवानि। मे भर्ता स भगवान् भूयात् पर न' इति सा नृपतितनया कृतजनकभूप्रान्तस्थित्यात्मकर्णपरिग्रहाम् इव पुरा व्यक्तापर्णाभिधानसमथना भगवती याच्ञादम्भात् चिकीर्षति॥

**व्याख्या—कृतजनकेति॥ हे भवानि! मे भर्ता** पति **स भगवान्** श्रीकृष्णो **भूयात्**। भूयादिति आशीर्लिङ्। इत्यनेन भगवत्या आशिष याच्यमाना इति भाव **परो न** अन्यस्तु न भवतु। **इति** इत्थ प्रकारेण **सा नृपतितनया** रुक्मिणी। **कृतजनकभूप्रान्तस्थित्यात्मकर्णपरिग्रहाम् इव** जनकस्य मे पितुर्भीष्मकस्य भूप्रान्तो भूप्रदेश तस्मिन् स्थिति निवास सा एव आत्मकम् ऋणम्। कृत जनकभूप्रान्तस्थित्यात्मकर्ण तस्य परिग्रह आदान स्वीकारो यया सा ताम्। निज पितुर्भूप्रान्ते कृतनिवासत्वात् अधमर्णाम् ऋणवतीमिव। पुन **पुरा** पुरातनकालात् या **व्यक्तापर्णाभिधान-समर्थना** अस्ति ताम् व्यक्त स्पष्ट यत् 'अपर्णा' इति अभिधान नाम तस्य समर्थन सम्प्रधारण पुष्टि करोति या सा। ताम्। 'अपर्णा' इति अपगत ऋण यस्या सा अपर्णा। या स्वाभिधानेनैव ऋणस्यापकर्षण मुक्ति करोति तामित्यर्थ। एतादृशीं **भगवतीं** सा **याच्ञादम्भात् चिकीर्षति** प्रार्थनारूपेण अपर्णा ऋणमुक्ताम् इव कर्तुमिच्छति। अत्र कर्ण, पर्ण शब्दौ सामासिकत्वेन श्लिष्टौ। प्रार्थनाव्याजेन **कृतजनकभूप्रान्तस्थित्या** स्वपितुर्नगरोपशल्यभागे कृताधिष्ठानत्वात्

**आत्मकर्णपरिग्रहाम्** आत्मन कर्णे परिग्रहो यस्या सा ताम् आत्मकर्णपरिग्रहा याच्ञा कर्तुमिच्छति। मम प्रार्थनास्वीकारो भगवती मत्पितृनगरप्रान्तस्थितत्वेन करोतु। तथा च भगवतीमपि व्यक्तापर्णाभिधानसमर्थनाम् अपगत ऋण यस्या सा अपर्णा सा एव अभिधान तस्य समर्थना। व्यक्ता अपर्णाभिधानसमर्थना यस्या सा ताम्। स्पष्टीकृतऋणमुक्तनाम्नीं कर्तुमिच्छति इत्यर्थ ॥ हरिणी छन्द ॥ ५५ ॥

**औत्सुक्यादसमस्तभावितपदा श्रीमत्प्रभो प्राप्तये**
**शृङ्गारैकरसे महत्यधिकृता सा कोमलाङ्गी सती ॥**
**वैदर्भी गिरिजापरिक्रमविधौ रीते सनाम्न्या कर**
**सासूय किल गृह्णतीव शुशुभे सस्नेहमाल्या इव ॥५६॥**

**अन्वय**—सा औत्सुक्यात् असमस्तभावितपदा, शृङ्गारैकरसे महती अधिकृता, कोमलाङ्गी, सती, वैदर्भी, श्रीमत्प्रभो प्राप्तये, गिरिजापरिक्रमविधौ सस्नेह आल्या सनाम्न्या रीते सासूय कर गृह्णतीव शुशुभे ॥

**व्याख्या—औत्सुक्यादिति ॥ सा** रुक्मिणी **औत्सुक्यात्** उत्सुकस्य भाव औत्सुक्य तस्मात्। अत्यन्तोत्सुकत्वात्। **असमस्तभावितपदा** न समस्ते असमस्ते भाविते स्थापिते पदौ चरणौ यस्या सा। यथा वैदर्भीरीति 'माधुर्य व्यञ्जकैर्वर्णै रचना ललितात्मिका। अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते'॥ अवृत्ति अथवा अल्पवृत्ति, समस्तपदरहिता भवति, तद्वत् असौ रुक्मिणी सम्पूर्णचरणन्यास समकुर्वती। पुन **शृङ्गारैकरसे महती अधिकृता**। अस्या वैदर्भीरीते रचना ललितात्मिका शृङ्गाररसप्रधाना तद्वदिय रुक्मिणी शृङ्गारैकरसे शृङ्गार एव एको मुख्यो रस तस्मिन् महती अधिकृता शृङ्गारानुकूलगुणशोभासम्पन्ना। पुनर्माधुर्य व्यञ्जकैर्वर्णैर्वैदर्भीरीते रचना भवति तद्वत् सा रुक्मिणी **कोमलाङ्गी** मृदुशरीरावयवा। **सती** सच्चरित्रा **वैदर्भी** रुक्मिणी **श्रीमत्प्रभो** श्रीकृष्णस्य प्राप्त्यर्थम्। **गिरिजापरिक्रमविधौ** गिरिजाया भवान्या परिक्रमविधि तस्मिन्, प्रदक्षिणा विधाने। **सस्नेह** यथास्यात्तथा स्नेहसहितम् **आल्या** सख्या इव **सनाम्न्या रीते** सदृश नाम यस्या सा सनाम्नी तस्या। वैदर्भीरीते **सासूय** इर्ष्यासहित **कर गृह्णतीव** तस्या वैदर्भीरीतेर्हस्तम् आददाना। ता जेतुमिवेत्यर्थ। **शुशुभे ॥** वैदर्भीरीति समस्तपदरहिता शृङ्गाररसाधिक्या कोमलवर्णा भवति एवमेव सा रुक्मिणी आसीदिति भाव ॥ शार्दूलविक्रीडित वृत्तम् ॥५६॥

**जगज्जनन्या जनिदुर्गतस्य प्रव्यक्तमाढ्यङ्करण कटाक्ष ।।**
**सचक्षुषा दुर्मनसान्नृपाणामवर्ततान्धङ्करणस्तदानीम् ।।५७।।**

**अन्वय** —तदानी जगज्जनन्या जनिदुर्गतस्य प्रव्यक्तम् आढ्यङ्करण कटाक्ष दुमनसा सचक्षुषा नृपाणाम् अन्धङ्करणम् अवर्तत ।।

**व्याख्या—जगज्जनन्या इति ॥ तदानीम्,** तस्मिन्नेव काले । तस्या भैष्म्या प्रार्थनानन्तर प्रमाद कर्तुमित्यर्थ । **जगज्जनन्या** भगवत्या । **जनिदुर्गतस्य** जनेर्जन्मतो दुर्गतस्य । दु खेन गच्छतीति दुर्गत तस्य । 'गत्यर्थाकर्मकश्लिषशीङ् ' इत्यादिना गमे क्त प्रत्यय । 'अनुदात्तोपदेश ' इति 'म' लोप । जन्मत कष्ट सहमानस्य दरिद्रस्य । 'दरिद्रो दुर्गतोऽपि स' इत्यमर । **प्रव्यक्त** यथास्यात् तथा स्फुटम् । **आढ्यङ्करण** अनाढ्य आढ्य करोतीति आढ्यङ्करण । 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु ' इत्यादिना 'ख्युन्' 'अरुर्द्विषद जन्तस्यमुम्' इत्यनेन मुम् । तथैव अन्धङ्करणम् । आढ्यङ्करणो धनीकर्तु समर्थ । 'इभ्य आढ्यो धनी स्वामी' इत्यमर । **कटाक्ष** कृपादृष्टि । एतादृशोसौ भवान्या कृपाकटाक्ष । पर तस्मिन् समये **दुर्मनसा सचक्षुषा नृपाणा** शिशु पालादिदुरात्मना चक्षुष्मतामपि राज्ञाम् **अन्धङ्करणम् अवर्तत** अन्धत्व दृष्टिहीनत्वम् अनयत् ।।५७।।

प्रतीपालङ्कार ।। उपेन्द्रवज्रा वृत्तम् । उपेन्द्रवज्रा प्रथमे लघौसा ।।५७।।

**यानस्थेन श्रीधरेण व्रजन्ती पद्भ्यामीषद्दत्तहस्तावलम्बा ।।**
**प्रत्यर्प्यास्मै यावदङ्गान्युदारा दारा आसीत्सा सदा राजमाना ।।५८।।**

**अन्वय** —पद्भ्या व्रजन्ती यावत् यानस्थेन श्रीधरेण ईषत् दत्तहस्तावलम्बा अस्मै अङ्गानि प्रत्यर्प्य सा तदा राजमाना उदारा दारा आसीत् ।।

**व्याख्या—यानस्थेनेति ॥ पद्भ्या व्रजन्ती** पादचारेण गच्छन्ती । **यावत् यानस्थेन श्रीधरेण ईषत् दत्तहस्तावलम्बा** दत्तो हस्तस्य अवलम्ब आधारो यस्यै सा । यदा रथारूढेन श्रीकृष्णेन कञ्चित् हस्ताधार दत्ता । रथस्थित श्रीकृष्णस्य कञ्चित् हस्ताधार रथारोहणाय वृतवती सा रुक्मिणी इत्यर्थ । **अस्मै अङ्गानि प्रत्यर्प्य,** स्वाङ्गानि कृष्णाङ्गे सन्निपात्य । **सा सदा राजमाना उदारा दारा आसीत्** सा भैष्मी तदैव समयात् सर्वकालेषु राजमाना राजते या सा राजमाना राज्ञीति सन्माननीया इत्यर्थ । उदारा वदान्या दारा कुटुम्बिनी बभूव ।।

शालिनी छन्द । शालिन्युक्ता म्तौ तगौ गोब्धि लोकै ।।५८।।

**कृष्णाङ्गमारादुपकारदक्ष भैष्म्यङ्गमासीदथ सन्निपत्य**
**करग्रहे तत्र खलु प्रधाने स्वेषा परेषा सुखमप्यपूर्वम् ।।५९।।**

**अन्वय** — अथ कृष्णाङ्ग भैष्म्यङ्गम् आरात् सन्निपत्य उपकार-दक्षम् आसीत् । तत्र प्रधाने करग्रहे खलु स्वेषा परेषाम् अपूर्व सुखम् अपि । अथ च परेषाम् अपि अपूर्व सुखम आसीत् ।।

**व्याख्या—कृष्णाङ्गमिति** ।। **अथ** अनन्तरम्, भैष्म्या स्वाङ्ग कृष्णाय प्रत्यर्पणानन्तरमित्यर्थ **कृष्णाङ्ग भैष्म्यङ्गम् आरात् सन्निपत्य**–' आरात् दूरसमीपयो ' इत्यस्मात् तयोरुभयोरङ्गम्, भैष्म्यङ्ग समीपस्थानादागतत्वात् तथा कृष्णस्य तु दूरागमनात्, दूरसमीपाभ्याम् एकरूपत्वमागत्य । **उपकारदक्षम् आसीत्** परोपकारायैवाभवत् । **तत्र प्रधाने करग्रहे** इहात्रविशेषत तयो पाणिग्रहणकर्मणि । **स्वेषाम्** स्वज्ञातिसम्बधिनाम् एव तयोर्द्वयोरपि, तथा **परेषाम्** अन्यजन साधारणानामपि । **अपूर्व सुखम् आसीत्** विशेषमद्वितीयम् आनन्दादायि सुखम् अभवत् । अथ च **परेषा** शत्रूणाम् **अपि 'अ'पूर्व सुखम्** अकारपूर्वक सुखम् 'असुख' दु खम् आसात् ।। तयो पाणिग्रहण स्वजनानान्तु सुखदमभूत् किंतु शत्रूणा दु खकारकमभूदिति भाव ।। प्रधाने कमणि यागादौ यथा प्रयाजादीनि आरात् तथा च अवघातादीनि सन्निपत्य उपकारदक्षाणि भवन्ति । एवम् अत्रापि करग्रहणप्रधानकर्मणि कृष्णाङ्ग तथा भैष्म्यङ्ग सन्निपत्य तथा आरादुपकारदक्षमासीदिति भाव ।। ( मीमासकमतेन ) ।। उपजाति वृत्तम् ।।५९।।

**स विपक्षमण्डलसमक्षमक्षम परिणीतिकमणि बिभीय नाभवत् ।।**
**दयिताकुले मृधवशेन मण्डनोत्तरमुण्डनाघमभिशङ्क्य केवलम् ।।६०।।**

**अन्वय** —दयिताकुले परिणीतिकर्मणि मृधवशेन मण्डनोत्तर-मुण्डनाघम् इति केवलम् अभिशङ्क्य, स विपक्षमण्डलसमक्षम् अक्षम अभवत् । बिभीय न ।।

**व्याख्या—स इति ।। दयिताकुले** दयिताया भार्याया कुल तस्मिन् भार्यावंशे । **परिणीतिकर्मणि** विवाहविधौ । **मृधवशेन** युद्धहेतुना युद्धस्यातिप्रसङ्गादित्यर्थ । **मण्डनोत्तरमुण्डनाघ** मण्डनस्य विवाहादिशुभकर्मण उत्तरम् अनन्तर यत् मुण्डन क्षौरकर्म तत् अघ पाप निषिद्धमित्यर्थ तत् । अस्मिन् समये युद्ध भवति चेत् तर्हि भार्याया ज्ञातीना वधो निश्चित तदर्थे क्षौरकर्म सम्भविष्यति, विवाहपश्चात् मुण्डन भविष्यति । **इति केवलम् अभिशङ्क्य**

इति मुख्यमेव दोषम् आशङ्क्य । **स** श्रीकृष्ण । **विपक्षमण्डलसमक्ष** शत्रुजनसमक्ष युद्ध कर्तुम् **अक्षम** असमर्थोऽभवत् । **विभीय न** शत्रुभयेन युद्ध पराङ्मुखो नाभूत् । 'मुण्डनान्मण्डन कार्यं मण्डनान्नतु मुण्डनमिति' शास्त्रवचनम् ॥ मञ्जुभाषिणी छन्द ॥६०॥

**आगमिष्यदिह चेद्बलो बली विस्मृतात्ममुसलस्तदा कवि ॥**
**किञ्चिदुन्नतभुजो यथा तथाऽवर्णयिष्यदरिसैनिकैर्मृधम् । ६१॥**

**रन्वय** —इह बली विस्मृतात्ममुसल बल आगमिष्यत् चेत् तदा किञ्चित् उन्नतभुज कवि अरिसैनिकै यथा मृध तथा अवर्णयिष्यत् ॥

**व्याख्या—आगमिष्यदिति** ॥ **इह** अत्रास्मिन् युद्धे । **बली** बलवान् किन्तु **विस्मृतात्ममुसलो** विस्मृतम् आत्ममुसलम् येन स । निजमुसलरहित शस्त्रहीन इत्यर्थ । **बलो** बलराम । **आगमिष्यत् चेत्** । हेतुहेतुमद्भावदर्शको लिङ्निमित्तो भविष्यन्त्यें क्रियाया अनिष्पत्तौ गम्यमानायाम् लृङ् प्रयोग । यथा 'सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यदिति' । **तदा उन्नतभुज कविर्लेखन** कर्तुं किञ्चिदुत्साहितो लेखिनीमुद्धृत कविरपि । **अरिसैनिकैर्यथामृधम्** शत्रुसैन्यै सह यादृश युद्धमभविष्यत् तथा **अवर्णयिष्यत्** ॥ यदि शस्त्रहीनो बलराम इहागमिष्यति चेत् तदा युद्ध भविष्यति तत् कविरपि वर्णयिष्यति अन्यथा हलमुसलायुधेन बलरामेण सह युद्ध कर्तुं क समर्थ । इहात्र मुसल विनैव युद्धार्थमागतो बलराम, अत तन्महद्युद्धवर्णने कविरप्यसमर्थ इति भाव । रथोद्धता वृत्तम् ॥६१॥

**ऐक्य सयास्यदन्ते यदुकुलतरणे रोचिषा राजसूये**
**राज्ञो धर्मस्य नून बत विहितमहामङ्गलस्य प्रहृष्टम् ॥**
**शोचिश्चैद्यस्य तस्मिञ्छुभकृति दिवसे प्रस्थित सन्मुहूर्त्ते**
**किम्वा सन्त्यज्य यात परहृतयुवति दूरतस्तन्न विद्म ॥६२॥**

**अन्वय** —विहितमहामङ्गलस्य चैद्यस्य प्रहृष्ट शोचि बत परहृतयुवति यात दूरत सन्त्यज्य, तस्मिन् शुभकृति दिवसे सन्मुहूर्त्ते प्रस्थितम् । किम्वा राज्ञो धर्मस्य राजसूये अन्ते यदुकुलतरणे रोचिषा नून ऐक्य सयास्यत् प्रस्थितम् तत् न विद्म ॥

**व्याख्या—ऐक्यमिति ॥ विहितमहामङ्गलस्य** विहित कृत महामङ्गलो महोत्सवो येन स तस्य । विवाहार्थगमनाय कृतमहोत्सवस्य **चैद्यस्य** शिशुपालस्य । **प्रहृष्ट शोचि** प्रसन्नप्राणज्योति । **बत** आश्चर्ये । **परहृतयुवतिं** परेण हृता युवतिर्यस्य स तम् । 'पुवत्कर्मधारय जातीय देशीयेषु' इत्यनेन पुवद् भाव भार्यापहारिणा श्रीकृष्णेन वञ्चित त शिशुपाल **यात** गतम् । **दूरत सन्त्यज्य** दूरादेव त्यक्त्वा । **तस्मिन् शुभकृति दिवसे सन्मुहूर्ते** एतादृशि शुभवेलायाम् । **प्रस्थित** यथा स्यात् तथा प्रस्थानमकरोत् । **किं वा राज्ञो धर्मस्य राजसूये अन्ते** युधिष्ठिरस्य राजसूययज्ञान्ते । **यदुकुलतरणे**, तॄ प्लवनतरणयो तरतीति तरणि । 'अर्तिसृधृधम्यश्यवितॄभ्योऽनि' इति उणादि सूत्रेण अनि प्रत्यय । यदुकुलस्य तरणि सूर्य तस्य । श्रीकृष्णस्य **रोचिषा** भास्वरेण प्रकाशेन सह **नूनम् ऐक्य सयास्यत्** भविष्यमाणमेकभाव खलु निश्चित कृत्वा **प्रस्थितम्** प्रस्थानमकरोत् **तत् न विद्म** तत् वय न जानीम ॥

अस्मिन् श्लोके कवि उत्प्रेक्षते । विवाहार्थे सम्पादितमहामङ्गलश्चैद्य कस्मिन् सुमुहूर्ते प्रस्थानमकरोत् । तत सुमुहूर्तत्त्व च द्विप्रकारकम् । सप्रति सद्योद्वाहजनितभार्यालाभ । स लाभो 'भार्यालाभो' भार्याहारिणा कृष्णेन वञ्चित । अत स्वप्राणरक्षण प्रथम मन्यमान शिशुपालो भार्याहारिण नानुसृत्य जीवरक्षणे एव सन्मुहूर्तस्य फल मेने । अथवा राजसूययज्ञान्ते भाव्य निजमरणमेव तत्सन्मुहूर्तस्य फल भवेत् इति वय न जानीम । अतो द्वयोरपि फलम् अशुभम् इत्यर्थ ॥ उत्प्रेक्षा । स्रग्धरा छन्द ॥ 'यदुकुलतरणे रोचिषा' इत्यत्र 'रोरि' इति सूत्रेण रेफस्य लोप ॥६२॥

**आप्तै सङ्कल्पिते प्राक् कविभिरनृतताप्याहितावश्यकत्वे**
**साक्षेप सम्प्रदाने विहितविघटन रुक्मिण दुर्मनीषम् ॥**
**त्यक्तग्रामप्रवेश शुचितममशुचि त विधातु कृपालु**
**प्रायश्चित्ताय मन्ये यदुपतिरकरोत्तस्य तत्क्षौरकर्म** ॥६३॥

**अन्वय**—कविभि आवश्यकत्वे अनृतापि आहिता । प्राक् आप्तै सङ्कल्पिते सम्प्रदाने साक्षेप विहितविघटन दुर्मनीष त्यक्तग्राम-प्रवेश अशुचि त रुक्मिण शुचितम विधातु कृपालु यदुपति तस्य तत् क्षौरकर्म प्रायश्चित्ताय अकरोत् । इति मन्ये ॥

**व्याख्या—आप्तैरिति** ॥ रुक्मिण पराजित्य भगवत्कृत तस्य विडम्बनीय क्षौरकर्म दृष्ट्वा कविरुत्प्रेक्षते । **आवश्यकत्वे** सति यदि आवश्यकता अनिवार्यता उपस्थिता चेत् । **अनृतापि आहिता** तदा असत्यस्याप्याश्रय करणीय इति **कविभि** कोविदै

शास्त्रकारै आहिता कथिता उक्त । अत **प्राक्** पूर्व । **आप्तै** स्वजनै पित्रादिभि । **सङ्कल्पिते** मनसा वाचा च निश्चिते । **सम्प्रदाने** रुक्मिण्या कृष्णेन सह विवाहे । **साक्षेपम्** आक्षेपेन सहित साक्षेप व्यङ्ग्ययुक्त निर्भर्त्सनपूर्णम्, **विहितविघटन** विहित विघटन येन स तम् । कृष्णेन सह भविष्यन्त विवाहमपाकृत्य शिशुपालेन सह चिकीर्षुम् । **दुर्मनीष** दुष्टा मनीषा इच्छा यस्य स त दुर्बुद्धिम् । **त्यक्तग्राम प्रवेश** त्यक्तो ग्रामस्य प्रवेशो येन स तम् । स्वेच्छितसाधन विना ग्रामप्रवेश न करोमीति गृहीतशपथम् । **अशुचिम्** अपवित्रम् । **शुचितम विधातु** पवित्री कर्तु **कृपालु** कारुणिको **यदुपति** श्रीकृष्ण **तस्य** रुक्मिण **तत्क्षौरकर्म** तन्मुण्डनमकरोत्, तस्य केशवपन **प्रायश्चिताय** चित्तशुद्धिप्राप्त्यर्थं चकार **इत्यह मन्ये** । इत्युत्प्रेक्षा । स्रग्धरा वृत्तम् ॥६३॥

**मनसि दुरवगाह दुर्वच चैकजिह्वै-**
**विधिमथ च निषेध रुक्मिवैरूप्यकृत्ये ॥**
**युगपदतिविरुद्ध कामपाल प्रवक्तु**
**ननु तदवललम्बे स्व द्विजिह्वत्वमास्ये ॥६४॥**

**अन्वय** —रुक्मिवैरूप्यकृत्ये विधिम् अथ च निषेध युगपत् प्रवक्तुम् एकचिह्वै तत् मनसि दुरवगाह दुर्वच च अतिविरुद्धम्, कामपाल आस्ये स्व द्विजिह्वत्व ननु अवललम्बे ॥

**व्याख्या--मनसीति** ॥ **रुक्मिवैरूप्यकृत्ये** रुक्मिणो वैरूप्य विकृतरूप तस्य कृत्य कर्म तस्मिन् । करोते क्यप् । श्रीकृष्णेन रुक्मिण क्षौरकर्मणा यद्विकृत रूप कृत तत्कर्मणि । **विधिम् अथ च निषेध** 'कुरु मा कुरु' इति सम्मत्य-सम्मतिरूपम् । **युगपत्** एकसमयावच्छेदेन । **प्रवक्तु** कथयितुम् । **एकजिह्व** एका जिह्वा येषा ते एकजिह्वा तै मनुष्यै । **तत्** वचन । **मनसि** हृदि चित्ते **दुरवगाह** चिन्तयितुमशक्यम् । **दुर्वच च** मुखेनापि वक्तुम् अशक्यम् । दु खेन अवगाहतेति दुरवगाह तम् । गाहू विलोडने इत्यस्मात् 'नन्दिग्रहि ' इत्यादिना पचाद्यच् । **अतिविरुद्धम्** अत्यन्त विरुद्ध प्रवक्तुम् अन्योन्यविरुद्ध च । **कामपाल** अतो बलराम । 'कामपालो हलायुध ' इत्यमर । **आस्ये** मुखे **स्व द्विजिह्वत्व ननु अवललम्बे** निश्चयेन अयोजयत् शेषावतारत्वात् इति भाव ॥

मनुष्या एकसमयावच्छेदेन कुर्विद मा कुरु तद्रूप वाक्य स्वैकजिह्वया कथ वक्तु समर्था । यदा ते मनसापि अत्यन्तपरस्परविरुद्ध कार्य चिन्तयितुम् असमर्था तदा तेषा मुखात् एतादृक् अन्योन्यविरुद्धवदर्थवाक्यनिष्पत्तिरपि दुर्वारा । तथापि रुक्मिण

कृष्णकृतमुण्डनकर्मणि यदा बलरामेण कृष्णकर्मानुमोदन तथा च रुक्मिरुक्मिण्यो सा त्वनमपि कृतम् । इद परस्परविरुद्ध वचन यत्कारणात् मुखादुच्चारित बलरामेण तत्रोत्प्रेक्षते कवि । हलायुध शेषावतारत्वात् द्विजिह्व । अत एकजिह्वया तेन कृष्णानुमोदन तथा चापरया जिह्वया रुक्मिणश्च सान्त्वन कृत यत् कर्म एक जिह्वायुक्तप्राकृतमानुषा मनसापि चिन्तितुमसमर्था का कथा वा तस्य कथने इत्यर्थ । उत्प्रेक्षालङ्कार । मालिनी वृत्तम् ॥६४॥

**प्रियाया दृग्युग्माञ्जनमलिनमुच्छूनमयशो**
**वितीर्यात्मद्विड्भ्यो हरि रथ यशो हासधवलम् ॥**
**समाहृत्यानल्प तनुमृदुतर पुष्पनिचय**
**सुरोत्सृष्ट पुष्ट स्वपुरमुररीकृत्य समगात् ॥६५॥**

**अन्वय** - अथ हरि प्रियाया दृग्युग्माञ्जनमलिनम् उच्छूनम् अयश आत्मद्विड्भ्य वितीर्य, अनल्प हासधवल यश समाहृत्य सुरोत्सृष्ट तनुमृदुतर पुष्ट पुष्पनिचयम् उररीकृत्य, स्वपुर समगात् ॥

**व्याख्या—प्रियायारिति** ॥ **अथ हरि** श्रीकृष्ण । **प्रियाया** रुक्मिण्या । **दृग्युग्माञ्जनमलिनम्**—दृशोर्युग्म दृग्युग्म तस्य अञ्जन तेन मलिन कलुषीकृत तत् । **उच्छून** विपुलम् । **अयश** अपकीर्तिम् । **आत्मद्विड्भ्य** स्वशत्रुभ्य । **वितीर्य** विकीर्य, दत्वा । हरे शत्रव रुक्मिणीमप्राप्य तथा पराभव प्राप्य तस्या लोचना ञ्जनेन [illegible] प्रापुरित्यर्थ । यशस्तु धवलम् अपयशोऽस्माद्विरुद्धम् असितम् । पूर्वस्मादेवासितापयश रुक्मिणी नयनाञ्जनेन विपुल कलुषीकृतमिति उत्प्रेक्षा । तथा स हरि स्वकृते तु **अनल्प हासधवल यश समाहृत्य** तेभ्य **शत्रुभ्य** तेषा पराभवात् हास इव धवल शुभ्र विपुल यशो हरण कृत्वा । तथा **सुरोत्सृष्ट** सुरैर्देवैरुत्सृष्ट वर्षितम् । **पुष्ट** विपुलम् । **तनुमृदुतर** तनोर्मृदुतर शरीर- मसृण कोमलमित्यर्थ । **पुष्पनिचय** पुष्पवृष्टिम् । **उररीकृत्य** स्वीकृत्य । **स्वपुर** निजद्वारकापुरीम् । **समगात्** रुक्मिण्या सहागच्छत् ॥ उत्प्रेक्षा ॥ शिखरिणी वृत्तम् ॥६५॥

**श्रीजाने पारिबर्हादृतकरिनिकरस्याधिपु द्वारमार्गे**
**कुर्वाणस्येष्टधूलि करटमदमिषान्मुञ्चतश्चाश्रुधारा ॥**
**अक्रूरस्येव नन्दव्रजगतिसमये प्रेमभक्ति स्फुटाऽभू-**
**द्वैशिष्टच तावदेतत्स विभुमुपगतो नेतुमानेतुमेष ॥६६॥**

**व्याख्या—नृत्यन्तीति** ॥ **अथ श्रीपतेर्नगर्या** श्रीकृष्णस्य द्वारकापुर्याम् । **रम्भाधिकपटुगणिका नृत्यन्ति स्म** रम्भा अप्सरोविशेषा । रम्भाया अधिक पटव गणिका , रम्भाधिकपटुगणिका रम्भाद्यप्सरसामपि नृत्यगीतशास्त्रे विशेषकुशला गायिकास्तत्र नृत्यमकुर्वन् । कथ भूताया नगर्याम् ? **श्रीपते सद्विवाहारम्भाय** प्रभो श्रीकृष्णस्य सुविवाहारम्भ कर्तुम् । **सपदि आयासभाग्भि** सत्वर प्रयत्नशीलै **बहुजनै सङ्कुलाया** सङ्कीर्णायाम् । तथा । **रम्भास्तम्भप्रदीपामृतभृतकलशै ,** रम्भास्तम्भा कदलीस्तम्भाश्च प्रदीपाश्च अमृतभृतकलशा जलपूर्णकुम्भाश्च ते रम्भास्तम्भप्रदीपामृतभृतकलशा तै । एभि सम्भृतसम्भारै , **अञ्चिताया** सुशोभितायाम् । पुन **प्रीत्या आयातैरमर्त्यैर्देवगणै । उच्चध्वजपटपवनव्याजत** उच्चा ध्वजा केतव तेषा पटा वस्त्राणि तेभ्य पवनो वात तस्य व्याजो मिष तस्मात् तसि । उन्नताकाशमार्गेण प्रेम्णाऽऽयातदेवगणस्य सञ्चारेण तत्रस्थितध्वजपट सञ्चलनेनोत्थितपवनमिषात् **वीजितायामिव** व्यजनीकृतायामिव नगर्या गणिका नृत्यति स्म ॥ उत्प्रेक्षा ॥ स्रग्धरा वृत्तम् ॥६७॥

**अथ भगवतो लक्ष्मीजानेर्विवाहमहोत्सव**
**समजनि जनिक्लेशध्वसप्रवीणयशोम्बुधे ॥**
**यमुपजुषत पाणिभ्या गोशत शिरसाम्बरा–**
**ण्यपि च वहतो विप्रस्यासीन्न कस्य धनभर ॥६८॥**

**अन्वय** —अथ जनिक्लेशध्वसप्रवीणयशोम्बुधे भगवत लक्ष्मीजाने विवाहमहोत्सव समजनि । यम् उपजुषत पाणिभ्या गोशतम् अपि च शिरसा अम्बराणि वहत कस्य विप्रस्य धनम्भर न आसीत् ॥

**व्याख्या—अथेति** ॥ **अथ जनिक्लेशध्वसप्रवीणयशोम्बुधे** जनेर्जन्मन , जननमरणस्य क्लेश दु ख तस्य ध्वसो विनाश तस्मिन् प्रवीणश्चतुरो, जनिक्लेशध्वस प्रवीण स एव यशसोऽम्बुधि यस्य स तस्य । **भगवत लक्ष्मीजाने** । जायाया निङ् । प्रभो श्रीकृष्णस्य । लक्ष्मीजाने **इत्यस्य** लक्ष्मी एव रुक्मिणी जाया यस्य स तस्य इति भाव । **विवाहमहोत्सव समजनि** अभूत् । जनी प्रादुर्भावे इत्यस्मात् ‘ दीपजनबुद्ध ’ इति लुङिकर्तरि चिण् । **य** विवाहमहोत्सवम् **उपजुषतो**

गच्छत सयोगकृतस्य। **पाणिभ्या** कराभ्या। **गोशत** तथा **शिरसाऽम्बराणि वहत**, वस्त्राणि नीयमानस्य **कस्य विप्रस्य** द्विजस्य **धनभर न आसीत्** धनस्य भर धनभर धनरूपो भारो न बभूव। डुभृञ् धारणपोषणयो इत्यस्मात् बिभर्तीति भर पचाद्यच् 'सज्ञाया भृतॄवृजि ' इति 'खच्' खचि मुम् धनस्य भर धनभर। अस्मिन् विवाहमहोत्सवे केन विप्रेण प्राप्तधनस्य गुरुता नानुभूता, सर्वैरनुभूता इति भाव ॥६८॥

इति श्रीमता वत्सगोत्रान्तर्गतेन काळेकुलोत्पन्नेन श्रीढुण्ढिराजरामचन्द्रशास्त्रिणा कविवरेण विरचितस्य भागवतव्यञ्जनस्य पञ्चमोल्लास। तस्यैव कविवरस्य पौत्राभ्या गोविन्दकाशीनाथशर्मभ्या कृताया व्यञ्जनसुबोधिनीव्याख्याया पञ्चमोल्लास ॥

---

# महाकविढुण्ढिराजशास्त्रिविरचितम्
# श्रीमद्भागवतव्यञ्जनम्

## अथ षष्ठतमोल्लासः

श्रीकृष्णात्मविदर्भभूपतिसुताचिच्छक्तिजन्मा स्मरो
जीवोश परमात्मन स च महाससारपाथोनिधौ ।।
प्रक्षिप्त किल पूर्वकल्परिपुणा दुर्बुद्धिना शम्बरा-
हङ्कारेण पुनर्झषायितमहामोहेन गीर्णोऽभवत् ।।१।।

**अन्वय**—श्रीकृष्णात्मविदर्भभूपतिसुताचिच्छक्तिजन्मा स्मर परमात्मन जीवोश, स च पूवकल्परिपुणा दुर्बुद्धिना शम्बराहङ्कारेण महाससारपाथोनिधौ किल प्रक्षिप्त, पुन झषायितमहामोहेन गीण अभवत् ।।

**व्याख्या—श्रीकृष्णेति।** श्रीकृष्ण एवात्मस्वरूप तथा विदर्भभूपतिसुता रुक्मिण्येव चिच्छक्तिरादिमाया प्रकृति । एताभ्या प्रकृतिपुरुषाभ्या चिच्छक्ति चेतनारूपसामर्थ्याभ्याम् आत्मतच्छक्तिभ्या वा जन्म उत्पत्तिर्यस्य स । **श्रीकृष्णात्मविदर्भभूपतिसुताचिच्छक्तिजन्मा स्मर** काम । परमात्मन श्रीकृष्णस्यैव । **जीवोश** जीवरूपश्चैत यभाग । शम्भुना दग्ध कामो वैदर्भ्या जात पुनर्जीवितोऽभूदित्यर्थ । **स च** एष बालरूप कामो नाम्ना प्रद्युम्न । **पूर्वकल्परिपुणा** पूर्वमन्वन्तररिपुश्शत्रु तेन, चिरशत्रुणा । **दुर्बुद्धिना शम्बराहङ्कारेण** शम्बर एव अहङ्कार तेन अहङ्काररूपेण नाम्ना शम्बराख्येन दुष्टदैत्येन । **महाससारपाथोनिधौ** महाससारस्य, अस्यैव जगत पाथोनिधि सागर तस्मिन् । **प्रक्षिप्तो** न्यस्त । **किल** निश्चये । **पुनर्झषायितमहामोहेन** झषो मीन इव आचरतीति झषायते । इति क्यङ् । झषायते इति झषायित । इति निष्ठा, स एव महामोहस्तेन । **गीर्णोऽभवत्** निगलितोऽभवत् ।

परमात्मा परमपुरुषश्चिच्छक्त्या प्रकृत्या युक्त स्वांशमेव जीव जगति सृजति। स जीवश्चिरशत्रुणा दुर्बुद्ध्योत्थिताहङ्कारेण व्याप्त सन् अस्मिन् ससाररूपे महासागरे निमज्जति। पुनस्तत्र अज्ञत्वेन महामोहावलिप्त सन् विनश्यति। इत्थ सृष्टिचक्र कविनाऽत्र प्रद्युम्नजन्मरूपकेण वर्णितम्॥ रूपक श्लिष्टपरम्परितम्॥ शार्दूलविक्रीडित वृत्तम्॥ १॥

**नीतो द्वेषणसद्म भोजनकृतेऽसौ धीवरैरिन्द्रियै-**
**र्याऽऽसीच्छत्रुनिगूहिता निजसती दारा रते सञ्ज्ञया॥**
**दिष्टचा तत्सहसङ्गत सुरमुने श्रीसद्गुरो सूचनात्**
**तस्याश्चाऽऽश्रयणान्निहत्य हतक भेजे पुन स्वाशिनम्॥२॥**

**अन्वय** – असौ इन्द्रियै धीवरै भोजनकृते द्वेषणसद्म नीत। या रते सञ्ज्ञया निजसती दारा शत्रुनिगूहिता आसीत्। दिष्टचा तत्सहसङ्गत तस्या आश्रयणात् श्रीसद्गुरो सूचनात् च हतक निहत्य स्वाशिन पुन भेजे।

**व्याख्या—नीत इति॥ असौ झष** मीन (तस्योदरस्थितबालेन कामेन युक्त इति भाव) **इन्द्रियैर्धीवरै**। इन्द्र आत्मा तस्य लिङ्गम्। इन्द्रेण दुर्जयम् **इन्द्रियम्** बलवान् इत्यर्थ। इन्द्रशब्दाद्घच्। रूढिशब्दोऽयम्। इन्द्रस्यात्मनश्चिह्नम् इन्द्रियम्। 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' इति सूत्रेण पाणिनिना षष्ठयन्तादिन्द्रशब्दात् लिङ्गमित्यर्थे 'घ' प्रत्ययविधानात् इन्द्रिय-शब्दस्य इन्द्रलिङ्गार्थकत्वम्। बलवद्भिर्धीवरै कैवर्तकैर्बद्ध सन् इत्यर्थ। **भोजन कृते** भोजनसिद्ध्यर्थम्, भोजनस्य कृते। अव्ययम्। आहारहेतवे। **द्वेषणसद्म नीत** शत्रो शम्बरस्य पाकशाला नीत। **या रते सञ्ज्ञया निजसती दारा शत्रुनिगूहिता आसीत्** तस्य कामस्य रतिरित्यभिधानेन ज्ञेया निजसाध्वी पत्नी शत्रुभि परिवेष्टिता गुप्तरूपेण स्थिता तत्र आसीत्। 'भार्या जायाथ पुम्भूम्नि दारा स्यात्तुकुटुम्बिनी' इत्यमर। **दिष्ट्या** विधिवशात्। **तत्सहसङ्गत** तस्या रत्या सहसङ्गत। रत्या एव सकाशे स्थित सवर्धितश्चेत्यर्थ। **तस्या, आश्रयणात्** रत्या आश्रयेण सवर्धितत्वात् तथा **श्रीसद्गुरोर्नारदऋषे सूचना** दुपदेशाच्च **हतक निहत्य** त घातिन शम्बर हत्वा। **स्वाशिन पुनर्भेजे** अशोऽवयवोऽस्ति यस्य स अशी तम्। इति 'इनि'। स्वस्य अशिन स्वाशिन परमात्मान श्रीकृष्ण प्रति पुनरगात्। जीवपक्षे—असौ कामपीडितो जीव इन्द्रियैर्दशेन्द्रियै। इन्द्रियाधीनैरित्यर्थ। भोजनकृते द्वेषणसद्मनीत इन्द्रियाधीनो विषयलौल्यात् कामक्रोधादिषड्रिपुभि परिवेष्टित सन्। या रते सञ्ज्ञया निजसती

दारा शत्रुनिगृहिता आसीत् तत्सहसङ्गत, तत्र शत्रुनिगूहिता षड्रिपुभि परिबद्धा निजसती पत्नी प्रीति 'धी' वा इति नाम्ना ज्ञेया तया सह दारै स्त्रिया परिवेष्टित । तस्या आश्रयणात् यद्यपि तै कुटुम्बै परिवेष्टितोऽपि दिष्टया सद्गुरो सूचनात् हतक निहत्य स्वाशिन पुन भेजे, सौभाग्यात् यदि सद्गुरुणा प्रबोधित तर्हि तस्या पत्न्याश्रयादेव त कामक्रोधादिरिपु निहत्य मुक्तो भूत्वा पुनरपि त स्वाशिन परमात्मान गच्छति मोक्ष प्राप्नोति इति भाव ॥ श्लिष्टरूपकालङ्कार । शार्दूल विक्रीडित वृत्तम् ॥२॥

**सदार तु काम स्ववध्वाविदार**
**सदा रन्तुकाम हरामर्षदग्धम् ॥**
**विना कञ्जनेत्रात्सदेह पर को**
**विनाक जनेऽत्राकरोद्वा सनाकम् ॥३॥**

**अन्वय** —सदार तु सदा रन्तुकाम काम हरामर्षदग्ध स्ववध्वा विदार सदेह कञ्जनेत्रात् विना पर क अकरोत् । वा अत्र जने विनाक सनाक क अकरोत ॥

व्याख्या— **सदारमिति ॥ सदार तु** दारै सहित सदार पत्नीयुक्तमपि । **सदा** सर्वदा । **रन्तुकाम** रन्तु कामयतेऽसौ रन्तुकाम तम् । आदौ सर्वदा स्त्रिया सह रमणशीलमेव । **काम** कन्दर्पम् । **हरामर्षदग्ध** हरस्य शङ्करस्य अमर्षात् क्रोधात् दग्ध भस्मीभूतम् । **स्ववध्वा** निजस्त्रिया रत्या इत्यर्थ । **विदार** 'दॄ' 'विदारणे' विशेषेण दृणन्त प्रेरयति विदारयति, विदारयतीति विदार त विदारम् । णिजन्त । 'ऋदोरप्' इत्यनेन अप् । वियुक्त विच्छेदभूतम् । एतादृग कामम् । **सदेह** शरीरावयवस्वरूप, शरीरिणम् । **कञ्जनेत्राद्विना** श्रीकृष्णाद्विना । **परोऽन्य । कोऽकरोत्** क समर्थोभूत् न कोपीत्यर्थ । **वा** अथवा जीवपक्षे । **अत्र जने** इहास्मिन् लोके ससारेऽपि जीवम् । सदारम् आदौ दारै स्त्रिया परिवेष्टितम् । काम कामवासनाभिर्लिप्तम् । पुनरपि हरामर्षदग्धम् हरतीति हर 'हरतेरनुद्य मनेऽच्' इति सूत्रेण अच्, हरस्य कालस्य विनाशस्य अमर्षात् कोपात् दग्धम् आधिव्याधिभि परिपीडितम् । स्ववध्वा विदार नष्टस्त्रियम्, त **विनाक** विगतसुख अथ च स्वर्गाद् भ्रष्ट त जीव सदेह **सनाकम्** अनेन शरीरेणैव स्वर्गयुक्तम् अस्मात् भवपाशात् मुक्त कर्तु कञ्जनेत्रात् श्रीकृष्णात् पर **क** कोऽन्य समर्थ ॥ रूपकानुप्राणितयमकानुप्रासौ । भुजङ्गप्रयात वृत्तम ॥३॥

**शम्बरेणुकरणे पटुनाऽसौ शम्बरेण हतये परिपन्थी ॥**
**आख्ययैव समतामवलोच्य क्लीबता न तु पयस्यपविद्ध ॥४॥**

**अन्वय**—शम्बरेणुकरणे पटुना शम्बरेण असौ परिपन्थी हतये पयसि अपविद्ध । आख्यया एव समता अवलोच्य न तु क्लीबताम् ॥

**व्याख्या—शम्ब इति॥ शम्बरेणुकरणे** शम्बो वज्र । "शतकोटि स्वरु शम्बो दम्भोलिरशनिर्द्वयो" इत्यमर । शम्बस्य वज्रस्य रेणुकरणे चूर्णकरणे । **पटुना** कुशलेन समर्थेन इत्यर्थ । **शम्बरेण** शम्बरदैत्येन । **असौ परिपन्थी** शत्रु प्रद्युम्न । **हतये** मृत्यवे **पयसि** शम्बरे जले । 'नीरक्षीराम्बु शम्बरम्' इत्यमर । **अपविद्ध** प्रक्षिप्त । **आख्ययैवसमतामवलोच्य** अत्र तेन दैत्येन पयसो निजनामसादृश्यमेव 'शम्बरम्' इति अवलोकितम् । **न तु क्लीबताम्** अस्य जलस्य क्लीबता नपुसकत्वम् असौ दैत्यो नावलोकितवान् ।

शम्बरदैत्येन कृष्णपुत्र प्रद्युम्नो मृत्युहेतवे जले प्रक्षिप्त । अत्र कविरुत्प्रेक्षते । शम्बरेणुकरणे पटुना एतादृशेन बलवता पुस्त्वयुक्तेन शम्बरदैत्येन निजशत्रु प्रद्युम्न पयसि 'शम्बरे' मृत्यवे प्रक्षिप्त । अत्रास्मिन् कर्मणि तेन दैत्येन, जलस्य शम्बरस्य निजनामसादृश्यमेवावलोकितम् न तु तस्य षण्ढत्व नपुसकलिङ्गत्व, वध कर्तुमसमर्थत्वम् । तस्मात् कारणात् वधाय प्रक्षिप्त प्रद्युम्न पुनरपि जीवितो बहिरगात् इति भाव ॥ उत्प्रेक्षा । स्वागता छन्द ॥४॥

**काले निवेश्योच्चपदे लघीयानप्यार्त्तित पाति सुसत्कृतश्चेत् ॥**
**इतीव शसन्ध्वजचिह्नमीन प्रद्युम्नमात्तात्महती ररक्ष ॥५॥**

**अन्वय**—लघीयान् सुसत्कृतश्चेत् उच्चपदे निवेश्य काले आर्तित्त अपि पाति, इतीव शसन् ध्वजचिह्नमीन आत्तात्महति प्रद्युम्न ररक्ष ॥

**व्याख्या—काले इति॥ लघीयान्** लघुतरो हीनपदे स्थितो जन । **सुसत्कृतश्चेत्** आदृत अवधृतो सवर्धितश्चेत् तर्हि स **उच्चपदे निवेश्य** महत्पदे प्रस्थाप्य । **काले आर्त्तितोऽपि** प्राप्तसमये स्वय दु खितोपि । **पाति** महत्पद स्थापक जन रक्षति । **इतीव शसन्** इत्थ निदर्शयन्निव । **ध्वजचिह्नमीन** ध्वजस्य केतोश्चिह्न मीनो यस्य स । कामदेवस्य ध्वजचिह्नभूत स झषो ध्वजे चिह्नत्व गतत्वात् महत्पद प्राप्त । **आत्तात्महति** आत्ता प्राप्ता आत्मनो हतिर्मृत्युर्येन स । **प्रद्युम्न ररक्ष** । कामदेवस्य ध्वजचिह्नत्व प्राप्तो मीन स्वमरणेनापि तस्य प्रद्युम्नस्य रक्षा चकार । अर्थान्तरन्यासालङ्कार । 'आत्तात्महती ररक्ष' इत्यत्र रोरीत्यनेन रेफस्य लोप । ढ्रलोपे पूर्वस्य दीर्घोऽण इति इकारस्यदीर्घ उपजाति वृत्तम् ॥५॥

**उद्धृत्य युक्त्या जलजन्तुवर्गाञ्जलाशयात्सुष्ठुनिगूढकामान् ॥**
**यच्छम्बरेणाघटयन् प्रवीणा द्राग्धीवरास्तन्न कदापि वाच्यम् ॥६॥**

**अन्वय** —यत् शम्बरेण कदापि न वाच्यम् तत् प्रवीणा धीवरा निगूढकामान् जलजन्तुवर्गान् जलाशयात् सुष्ठु युक्त्या उद्धृत्य द्राक् अघटयन् ॥

**व्याख्या** —**उद्धृत्येति** ॥ **यत्** गुप्त गोपनीय प्रद्युम्नस्य जले प्रक्षेपण । **शम्बरेण** दैत्येन **कदापि न वाच्यम्** न वक्तव्यम् । **तत्** कपटकर्म । **प्रवीणा धीवराश्चतुरकैवर्तका** । **निगूढकामान् जलजन्तुवर्गान्**–निगूढ गुप्त कामयन्ते ते निगूढकामा तान् 'शीलिकामिभक्ष्याचारिभ्यो ण'। इति ण प्रत्यय । अगाधजले गुप्त स्थातुमिच्छन्त जलप्राणिन । **जलाशयात्** समुद्रात् । **सुष्ठु युक्त्या उद्धृत्य** विशेषकौशल्येन बहिर्निष्कास्य । **द्राक् अघटयन्** । घट शब्दे । तद्रहस्य झटिति वाच्यतामनयन् ।

**विषयान्तरेणापि अस्य श्लोकस्य भाव** । तद्यथा । शब्दार्थचमत्कृतिरेव ।

**अन्वय** —प्रवीणा धीवरा सुष्ठु निगूढकामान् जलाशयात् युक्त्या जलजन्तुवर्गान् उद्धृत्य वरेण शम् अघटयन् तत् न वाच्यम् ।

**व्याख्या**—**प्रवीणा** प्रकृष्टा वीणा येषा ते, प्रकृष्टवीणाधारिण । **धीवरा** बुद्धिश्रेष्ठा नारदाद्या मुनय । **सुष्ठु** सुतराम् । **निगूढकामान्** निगूढा कामा वासना यैस्ते तान् । मुमुक्षून् इत्यर्थ । **जलाशयात्** विषयवासनारूपसमुद्रात् । **युक्त्या** सदुपदेशेन । **जलजन्तुवर्गान्** जडपुरुषान् । रलयोर्डलयोरभेदात् । **उद्धृत्य** निष्कास्य उद्धार कृत्वा । **वरेण** वरदानेन बवयोरभेदात् । **यत् श** सुखम् अघटयन् अकुर्वन् **तत् न वाच्यम्** अपरिमितत्वात् न कथनीयम् ॥ श्लिष्टरूपकम् उपजाति वृत्तम् ॥६॥

**ते सूपकारा पुनरुक्तता दधुस्ता दैत्यभर्तु प्रकट भवन्त्यपि ॥**
**रत्या प्रिय काममयोजयन्त ये या प्रेमपाकैरनयोर्घनीकृता ॥७॥**

**अन्वय** —ये रत्या प्रिय काम अयोजयन्त ते सूपकारा पुनरुक्तता दधु । या अनयो प्रेमपाकै घनीकृता, या दैत्यभर्तु प्रकट भवन्ती अपि ता पुनरुक्तता दधु ॥

**व्याख्या—ये सूपकारा** सूदा । **रत्या** मायावत्या रतिरूपिण्या स्त्रिया सह **प्रियम्** अभिलषित **काम** मनोरथम् अथ च बाल प्रद्युम्नम् **अयोजयन्त** तस्यै दत्तवन्त । **ते पुनरुक्तता दधु** पुनर्वाच्यत्वेन तस्या रत्या उपकारमेव चक्रु । अर्थात् मत्स्योदरे प्राप्त बाल प्रद्युम्न तस्यै ददु, इति उपकारकत्वमेव । **या अनयो प्रेमपाकैर्घनीकृता** या का ? प्राप्तबालकस्य लालनपालनकर्मणि वात्सल्ये तच्चेष्टा प्रीतिरित्यर्थ । अनयोर्मायावतीप्रद्युम्नयो, अर्थान्तरेण रतिकामयोर्मध्ये प्रेमपाकैर्घनीकृता प्रेमलीलाभिर्गाढत्व नीता । अर्थात् या प्रीती रतिकामयोर्मध्ये बालसहजवात्सल्येत्तरकामक्रीडावत् अतिशयप्रगाढदाम्पत्यप्रेमक्रीडास्पदीभूता । **या दैत्यभर्तुरपि प्रगट भवन्ती** या शम्बरस्यापि दर्शनपथमागता । भवतीति भवन् स्त्रिया ङीप् भवन्ती । **ता पुनरुक्ता दधु** एतादृशीं शोभनोपकारका ता वार्ता पुन पुनर्वाच्यता चक्रु । उपजाति वृत्तम् ।। ७ ।।

**सपदि बत निशातयाऽसियष्टया रुचिरकलापकरोज्झिताऽभवद्या ।।**
**हृदयजनिरपातयत्तमन्धेतमसि समैक्षत तारक न यत्र ।।८।।**

**अन्वय**—या रुचिरकलापकरोज्झिता अभवत्, तया निशातया असियष्टया, हृदयजनि त अन्धेतमसि सपदि अपातयत् । यत्र तारक न समैक्षत, बत ।।

**व्याख्या—सपदीति ।। या** असियष्टि । **रुचिरकलापकरोज्झिता अभवत्**—रुचिरकलापेन सुन्दराभूषणेन, मुद्रिकादिभिरित्यर्थ, युक्त, करो हस्त स रुचिरकलापकर तेन उज्झिता प्रक्षिप्ता सा । 'उज्झ उत्सर्गे' । या असियष्टि प्रद्युम्नस्य सुन्दराभूषणयुक्तेन करेण प्रक्षिप्ताऽभूत् । अथ च । या निशा रुचिर कलापस्य, कला पाति स कलापश्चन्द्र । क प्रत्यय । सुन्दरचन्द्रस्य करै रश्मिभि किरणै रुज्झिता त्यक्ता शून्या इत्यर्थ । या रात्री रुचिरचन्द्रकिरणै रहिता अभवत् । **तया निशातया** तीक्ष्णया **असियष्ट्या** खड्गेन निशातमसि उद्यम्येति भाव । अथ च तया चन्द्रकिरणशून्यया रात्र्या । **हृदयजनि** हृदये जनिर्जन्म उत्पत्तिर्यस्य स । 'जनिरुत्पत्तिरुद्भव' इत्यमर । मनसिज काम प्रद्युम्न । **त** शम्बर दैत्यम् । पक्षे विषयलम्पट पुरुषम् । **अन्धे तमसि** नरकविशेषे । पक्षे निबिडान्धकारे । अपातयत् । प्रद्युम्न खड्गप्रहारेण त दैत्य नरके आपातयत् । अहन् इत्यर्थ । **यत्र** नरके । पक्षे अन्धे तमसि । **तारक** मुक्तिदम् । पक्षे नक्षत्रम् । **न समैक्षत** न दृष्टम् । **बत** आश्चर्ये ।। स्मर कामासक्त जन रात्रौ परदाराभिमर्शनार्थ पातयतीति प्रसिद्धम् ।। औपच्छन्दसिकम् वृत्तम् । श्लिष्टरूपकमलङ्कार ।।८।।

**सर्वेषामुपरि वसन्स कृष्णरूपो**
**रुक्मिण्याऽपि च सुदृशाऽधिलालितात्मा ॥**
**आदृत्य स्वपदमनल्पतोषदायी**
**तारुण्येऽपि च न मुमोच बालभावम् ॥९॥**

**अन्वय**—रुक्मिण्या अपि च सुदृशा अधिलालितात्मा अनल्पतोषदायी कृष्णरूप सर्वेषाम् उपरि वसन् स तारुण्ये स्वपदम् आदृत्यापि च बालभाव न मुमोच ॥

**व्याख्या—सर्वेषामिति ॥ रुक्मिण्या अपि च सुदृशा** या सुनयना रुक्मिणी तया एव। **अधिलालितात्मा** 'लल् ईप्सायाम्' लालयतेति लालित। भावे क्त। अधिलालित आत्मा यस्य स। अत्यन्तेप्सित, प्रेम्णाऽत्यधिकभावित इत्यर्थ। **अनल्पतोषदायी** अनल्प बहु तोष सुख दातु शीलमस्य स। 'सुप्यजातौ' इति ताच्छील्ये णिनि। शरीरसौष्ठवात् मधुरप्रकृतिस्वभावाच्च सर्वेषा सन्तोषदायी **कृष्णरूप** पुत्रत्वात् श्रीकृष्णस्य प्रतिकृतिरेव। **सर्वेषामुपरि वसन्** रूपसौन्दर्यादिभि सर्वेषामत्यधिक। अथ च सर्वेषा कृष्णपुत्राणा ज्येष्ठ इत्यर्थ, एतादृश **स** प्रद्युम्न। **तारुण्ये स्वपदमाऽऽदृत्यापि** युवावस्था प्रविष्टोऽपि **बालभाव न मुमोच** बालसुलभ सौकुमार्यम् न मुक्तवान् ॥ प्रहर्षिणीय वृत्तम् ॥ ९ ॥

**सम्पाद्य द्युमणि प्रसन्नमनणीयस्यैकभक्त्यार्पित**
**तेनामुच्य गले स्यमन्तकमणि सत्राजिदत्राजितम् ॥**
**पद्भ्या द्रष्टुमुपैति कि तरणिरित्याशङ्क्यमानो गृहा-**
**नेत्यास्मात्कनक मुहु समचिनोद्भाराय भाराष्टकम् ॥१०॥**

**अन्वय**—सत्राजित् अनणीयस्या एकभक्त्या द्युमणि प्रसन्न सम्पाद्य, तेनार्पित स्यमन्तकमणि गले आमुच्य, गृहान् एत्य, अस्मात् भाराष्टक कनक भाराय मुहु समचिनोत्। अत्र अजित द्रष्टु कि तरणि पद्भ्याम् उपैति इति आशङ्क्यमान (जन बभूवेति शेष) ॥

**व्याख्या—सम्पाद्येति ॥ सत्राजित्** यादव **अनणीयस्यैकभक्त्या** न अणीयसी अनणीयसी तया अनणीयस्या प्रभूतया, एका अनन्या भक्तिरुपासना तया। 'अत्यल्पेऽल्पिष्ठमल्पीय कनीयोऽणीय इत्यपि' इत्यमर। अनन्यरूपेण प्रभूत तप आराधनेन। **द्युमणि** सूर्यम्। **प्रसन्न सम्पाद्य** सन्तुष्ट कृत्वा। 'द्युमणिस्तर-

णिर्मित्र ' इत्यमर । **तेनार्पितम्** । तेन 'सूर्यण' दत्तम् । **स्यमन्तकमणिम्** एतत्सज्ञ रत्नम् । **गले आमुच्य** कण्ठे निधाय । **गृहान् एत्य** । 'गृहा पुसि च भूम्न्येव' इत्यमर । **अस्मात्** मणे । **भाराष्टक कनक** भाराणामष्टक भाराष्टक तत् । पलाना द्विसहस्र भार । अथ वा 'तुलास्त्रिया पलशत भारस्याद्विशतिस्तुला' इत्यमर । **भाराय मुहु समचिनोत्** अष्टभार सुवर्ण पुन पुनरहरह प्राप । **अत्र** द्वारकाया यदा स सत्राजित् स्यमन्तकमणि कण्ठे निधाय श्रीकृष्ण द्रष्टुमुपागत तदा । **किं तरणिरजित द्रष्टु पद्भ्याम् उपैति** कि स्वय तरणि सूर्य अजित श्रीकृष्णम् ईक्षितु पादचारेणैवागत इति **आशङ्क्यमानो** जनस्य शङ्कास्पदीभूतो बभूवेति शेष ॥ 'शकि शङ्कायाम्' । शङ्कतेइति शङ्क्यम् 'यत्' आङ् पूर्वात् 'शानच्' आशङ्क्यमान शङ्कास्पदीभूत ॥ शार्दूलविक्रीडितम् ॥१०॥

**धार्यसदाऽऽगममिवाऽशुचिभिन्नहृद्भि**
**काम स्रवन्तमकृश मणिमुज्वलाभम् ॥**
**कण्ठे निबध्य सहसैव विमुच्य शङ्का**
**तस्यानुज श्रितहयो मृगया सिषेवे ॥११॥**

**अन्वय**—अशुचिभिन्नहृद्भि आगमम् इव काम स्रवन्त अकृशम् उज्वलाभ मणि सदा धार्यम् । तस्य अनुज कण्ठे निबध्य सहसैव शङ्काम् विमुच्य श्रितहय मृगया सिषेवे ॥

**व्याख्या**—**धार्यमिति** ॥ **अशुचिभिन्नहृद्भि** अशुचेरपवित्राद् भिन्नम् इतरत् अशुचिभिन्न पवित्रितम्, अशुचिभिन्न हृद् येषा तै, पवित्रितान्त करणै पुरुषै । **अमु** मणिम् **आगममिव** वेदमिव । **काम स्रवन्तम्** इच्छितदातारम् **अकृश** विशालम् । **उज्वलाभम्** उज्वला आभा कातिर्यस्य स तम् । एतादृश मणि स्यमन्तकमणि वेदमिव **सदा धार्य** धारयितु योग्य धार्यम्, इत्यस्मात् **तस्य** सत्राजित **अनुजो** भ्राता प्रसेन । **कण्ठे निबध्य सहसैव शङ्का विमुच्य** न कामपि शङ्का सन्देह पुरतो वितर्क्य । **श्रितहय** अश्वारूढो **मृगया सिषेवे** आखेट कर्तु वनमगात् । वसन्ततिलका ॥११॥

**त क्षुद्रदर्श विपिने प्रसेन कश्चिन्मृगेन्द्र सहय जघान ॥**
**त चापि पाटच्चरमेष आराद्धत्वर्क्षराजो मणि मुल्लुलुण्ठ ॥१२॥**

**अन्वय**—कश्चित् मृगेन्द्र विपिने त क्षुद्रदर्श प्रसेन सहय जघान । एष ऋक्षराज त पाटच्चर चापि आरात् हत्वा मणिम् उल्लुलुण्ठ ।

**व्याख्या—तमिति ॥ कश्चिन्मृगेन्द्र** सिंह । **विपिने** वने **त क्षुद्रदर्शं** क्षुद्र तुच्छ दर्श रूप यस्य स तम् । कर्मणि दृशि विदो साकल्ये' इत्यनेन कर्मण्युपपदे 'णमुल्'। **प्रसेन सहय जघान** कानने स दुर्बल प्रसेन साश्व केनचित् सिंहेन हत । **एष ऋक्षराजो** जाम्बवान् **त पाटच्चर** चोर सिंहमपि। **आरात्** समीपमेव **हत्वा मणि** स्यमन्तकमणिम् **उल्लुलुण्ठ** चोरयामास । सिंह हत्वा तस्मादपि तन्मणिर्जाम्बवता ऋक्षेण नीतश्चोरित । लुठि स्तेये। इन्द्रवज्रा वृत्तम् ॥ १२ ॥

**तेन क्रीडनक कृत निजशिशोस्तद्रत्नमल्पेतर-**
**प्रज्ञेनोष्णगभस्तिनाऽभ्रतमसो भीतेन हृद्य निजम् ॥**
**न्यस्त तेज इवाऽऽबभौ क्षितिबिले यत्रर्क्षराडप्यसौ**
**वर्षीयान् गतभीरुवास धवलैर्लोमाशुजालैर्वृत ॥ १३ ॥**

**अन्वय**—क्षितिबिले तेन अल्पेतरप्रज्ञेन तत् रत्न निजशिशो क्रीडनक कृतम् । यत्र उष्णगभस्तिना अभ्रतमस भीतेन निज हृद्य तेज न्यस्तमिव तत रत्नम् आबभौ । यत्र असौ वर्षीयान् धवलै लोमाशुजालै वृत गतभी ऋक्षराट् अपि उवास ॥

**व्याख्या—तेनेति ॥ क्षितिबिले** भुवोविवरे **तेन अल्पेतरप्रज्ञेन** अल्पात् इतरा अल्पेतरा महती, प्रज्ञा बुद्धिर्यस्य स तेन। महाबुद्धिमता ऋक्षेण **तत्‌रत्न** स्यमन्तकमणिं **निजशिशो क्रीडनक कृतम्** क्रीडनमेव क्रीडनकम्। 'यावादिभ्य कन्' इत्यनेन 'कन्'। स्वसुतस्य दोलावलम्बित क्रीडावस्तु कृतम्। **यत्र** यस्मिन् बिले। **उष्णगभस्तिना** उष्णा गभस्तय किरणा यस्य स तेन। सूर्येण। "गभस्तिघृणिरश्मय" इत्यमर । **अभ्रतमसोभीतेन** निबिडान्धकारभयेन, अय मेघानामन्धकारो मामाच्छादयेदिति भीत्या इत्यर्थ । **निज हृद्य तेज** स्वकीय हृद्गत तेज, ओजस्वीप्रकाश । **न्यस्तमिव** अस्मिन् धराश्वभ्रे मणिरूपेण स्थापित-मिव इति उत्प्रेक्षा। एतादृश **तद्रत्न आबभौ** शुशुभे। आसमतात् तत्स्थान प्रकाशितमकरोदित्यर्थ । **यत्राऽसौ वर्षीयान्** अतिशयेन वृद्धो वर्षीयान्। "प्रियस्थिरस्फिरोरु बहुल ' इत्यादिना वृद्धस्य वर्षि । तस्मात् ईयसुन्। वर्षीयान्। **धवलै** श्वेतत्व गतै । **लोमाशुजालै** लोमानि केशा एव अशव किरणा तेषा जालै समूहै । **वृतो** व्याप्त आच्छादितो वा। **गतभी** गता भीर्भीति-र्यस्य स । भीतिरहितो नि शङ्क । **ऋक्षराडपि** जाम्बवानपि **उवास** वासम-करोत् ॥ उत्प्रेक्षालङ्कार । शार्दूलविक्रीडित वृत्तम् ॥१३।

**यद्रूपमेकमपि दोषमवैति नाल्प-**
**मद्यापि यत्पदरज श्रुतिमृग्यमेव ॥**
**सोय मणेरनुपदी व्यमृशन्मुधाभि-**
**शस्त प्रसेनहरिजाम्बवताम्पदानि ॥१४॥**

**अन्वय**—यद्रूपम् एकम् अपि अल्प दोष न अवैति । यत्पदरज अद्यापि श्रुतिमृग्यम् एव । सोऽय मुधा अभिशस्त मणे अनुपदी प्रसेनहरिजाम्बवताम् पदानि व्यमृशत् ॥

**व्याख्या—यद्रूपमिति** ॥ **यद्रूप** यस्य रूप, यत् सच्चिन्मात्र केवलानन्द स्वरूपम् । **एकम् अल्पमपि** अल्पिष्ठमेव **दोष** विकार **न अवैति** न जानाति । अल्पेनापि विकारेणाऽव्याप्तमित्यर्थ । **यत्पदरजो** यस्य पदधूलि । **अद्यापि** अधुनापि । **श्रुतिमृग्यमेव** श्रुतिभिर्वेदैर्मृग्यम् अन्वेषितु योग्यमेव । यस्य पदन्तु दूरे स्थित किन्तु यस्य चरणावलग्ना धूलिरपि वेदैरद्यापि न ज्ञाता । **सोऽय** पुराणपुरुष श्रीकृष्ण । **मुधाभिशस्त** स्यमन्तकमणिचौय वृथा निन्दित । तस्मादपवाद दूरीकर्तु स **मणेरनुपदी** मणिम् अन्वेष्टा । 'अनुपद्यन्वेष्टा' इति सूत्रेण 'इनि' प्रत्ययनिपातनम् । अनुपद प्रतिपदम् अन्वेष्टा अनुपदी । अनु पश्चात् पदस्य पश्चात् । पश्चादर्थे अव्ययीभाव । पदापेक्षया षष्ठी तस्मात् 'मणे' अनुपदीति सिध्यति । सोऽय हरि मणिम् अन्वेष्टा **प्रसेनहरिजाम्बवता पदानि व्यमृशत्** एतेषा पदचिह्नानि व्यमृशत् । मृशआमर्शने अन्वेषण करोति स्म इत्यर्थ ॥ वसन्त तिलका ॥१४॥

**दूर सन्तमसाविलान्व्रजगृहानन्त प्रविश्यैकको**
**गोपीगोरसलुण्ठन व्यधित यो बाल्येऽपि सोऽय हरि ॥**
**पूर्वाभ्यासबलादिवाऽतिगहन गाढान्धकारावृत**
**भल्लूकाधिपधाम कामपि न वै शङ्काम्प्रवेष्टुन्दधौ ॥१५॥**

**अन्वय**—य बाल्ये अपि एकक दूर सन्तमसाविलान् व्रज-गृहान् अन्त प्रविश्य गोपीगोरसलुण्ठन व्यधित । स अय हरि पूर्वाभ्यासबलात् इव अतिगहन गाढान्धकारावृत भल्लूकाधिपधाम प्रवेष्टु कामपि शङ्का न वै दधौ ॥

**व्याख्या—दूरमिति** ॥ **यो** हरिर्बाल्येऽपि बाल्यावस्थायामेव । **एकक** एकल एकाकी 'एकाकीत्वेक एकक' इत्यमर । **दूर सन्तमसाविलान्** दूरम्

अत्यन्तसुदूरपर्यतम्। 'अत्यन्तसयोगेद्वितीया'। सन्तमसै विष्वक्तमोभि आविला कलुषीकृता तान्। 'विष्वक्सन्तमसम्' इत्यमर। 'अवसमन्धेभ्य तमस' इति सूत्रेण अच् प्रत्यय। 'कलुषोऽनच्छ आविल' इत्यमर। **व्रज गृहान्** अर्थात् सुदूरपर्यतमत्यन्तान्धकारेण व्याप्तान् गोपीगृहानन्त प्रविश्य। **गोपीगोरसलुण्ठन व्यधित** व्रजस्त्रीणा गोरसस्य लुण्ठन चौर्यम्, अपहरणमकरोत् 'लुण्ठ स्तेये' इत्यस्मात् 'ल्युट्' लुण्ठनम्। **सोऽय हरि** श्रीकृष्ण **पूर्वाभ्या सबलादिव** एकाकी चोर इव। अन्धकारे प्रवेष्टु पूर्वस्मादेव कालात् अभ्य-स्तवानिव। **अतिगहन गाढान्धकारावृत भल्लूकाधिपधाम** जम्बवतो गृह **प्रवेष्टु कामपि शङ्का न वै दधौ** नि शङ्कतया खलु प्रविवेश॥ शार्दूल विक्रीडित वृत्तम्॥१५॥

**तत्र प्रविश्य स च ऋक्षपतिं प्रबोध्य**
**स्वप्नाञ्चमुत्स्वनितकम्बुरनेन साकम्**
**भोजेन्द्रससदुपलब्धनियुद्धसूत्र-**
**व्याख्यामिवाभ्यपठदुद्भटशब्दगर्भाम्॥ १६॥**

**अन्वय**—उत्स्वनितकम्बु स तत्र प्रविश्य, स्वप्नाञ्चम् ऋक्ष-पति प्रबोध्य च, अनेन साक भोजेन्द्रससदुपलब्धनियुद्धसूत्रव्याख्याम् इव उद्भटशब्दगर्भाम् अभ्यपठत्॥

**व्याख्या—तत्रेति॥ उत्स्वनितकम्बु** उत् उच्चै स्वनितो ध्वनित कम्बु शङ्खो येन स। शङ्खनिनाद कृतवान् स श्रीकृष्ण। **तत्र** ऋक्षपते बिलं **प्रविश्य। स्वप्नाञ्चम् ऋक्षपतिं प्रबोध्य** स्वप्नम् अञ्चतीति स्वप्नाङ् तम्। 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च' इत्यनेन 'क्विन्'। शयित जाम्बवन्त प्रबोध्य, जागर्तिं नीत्वा। **अनेन साकम्** ऋक्षेण सह। **भोजेन्द्र ससदुपलब्धनियुद्धसूत्रव्याख्याम् इव**—भोजेन्द्रस्य कसस्य ससदि सभाया, रङ्गणे इत्यर्थ। उपलब्ध प्राप्त नियुद्धस्य बाहुयुद्धस्य सूत्र निबद्धनियम तस्य व्याख्या विशदतामिव। **उद्भटशब्दगर्भाम्** उद्भटो विकट शब्द, उद्भटशब्द, स गर्भे यस्या सा ताम्, **अभ्यपठत्** विकटशब्दयुक्ता वाचम् अवदत्।

कसस्य रङ्गणे प्राप्तमल्लयुद्धस्य युक्तिप्रयुक्तीना प्रदर्शनात्मिकया विकटशब्द-युजा वाचा त ऋक्ष नियुद्धायाऽऽह्वयत इत्यर्थ॥ वसन्ततिलकावृत्तम्॥ १६॥

**बिभ्राणोऽपि तनौ प्रकम्पमलघून् नित्य शरारून्वने**
**निघ्नानो बलदर्पनव्यहविषा श्रीकृष्णवैश्वानरम्॥**

**जुह्वान स हि जाम्बवान्स्वहृदयारामाभिरामाकृति-**
**श्रीरामप्रहृतिव्यथाविवशहृन्मन्ये व्यरसीत्तत** ॥१७॥

**अन्वय** —वने नित्यम् अलघून शरारून् निघ्नानोऽपि स हि तनौ प्रकम्प बिभ्राण, बलदर्पनव्यहविषा श्रीकृष्णवैश्वानर जुह्वान, स्वहृदयारामाभिरामाकृतिश्रीरामप्रहृतिव्यथाविवशहृत् जाम्बवान् तत व्यरसीत् । मन्ये ॥

**व्याख्या—बिभ्राण इति ॥ वने नित्यम् अलघून्** महातेजस्विन **शरारून्** घातुकान् । 'शरारुर्घातुकोहिस्र' इत्यमर । 'शॄ हिंसायाम्' शृणाति तच्छील शरारु । 'शॄवन्द्यो रारु' इत्यनन 'आरु'। **निघ्नानो** निहन्तु शीलम् अस्य निघ्नान । 'ताच्छील्यवयोवचन ' इति 'चानश्'। एव बिभ्राणो जुह्वानोपि । **स हि** एतादृश स जाम्बवान् हि निश्चयेनात्र श्रीकृष्णेन साक युद्ध कर्तुम् । **तनौ प्रकम्प बिभ्राण** शरीरे विपुल कम्प धारयन् । **बलदर्पनव्यहविषा** बलस्य शक्तेर्दर्पो गर्वो, बलदर्प स एव नव्यहवि नूतनहवनीय तेन । **श्रीकृष्णवैश्वानर** श्रीकृष्णरूपम् अग्नि **जुह्वानो** जुहोतीति जुह्वानो यजमान, श्रीकृष्ण निजबलदर्पस्य समर्पण कुर्वन् पराभव स्वीकृतवानित्यर्थ । **स्वहृदयारामाभिरामाकृतिश्रीरामप्रहृतिव्यथाविवशहृत्** स्वहृदयस्य आरामा आनन्ददायिका या अभिरामाकृतिर्मनोज्ञमूर्ति सा एव श्रीराम इति तस्य प्रहृति प्रहार तस्या व्यथा तया विवश व्यथित हृन्मानस यस्य स । स्वहृदयाभ्यन्तरे विराजमाना या श्रीरामस्य मनोज्ञमूर्ति (मञ्जुलमूर्ति) तस्या उपरि श्रीकृष्णस्य प्रहारेण व्यथितमानस स जाम्बवान् **ततो व्यरसीत्** नियुद्धात् विरराम इत्यह मन्ये, न तु श्रान्त इति भाव ॥ व्यरसीदिति 'व्याङ्परिभ्योरम' इत्यनेन परस्मैपदम् ॥ शार्दूलविक्रीडित वृत्तम् ॥१७॥

**जानानोदयमानमङ्घ्रियुगलाम्भोजैकभृङ्गायित**
**स्वान्तस्याजितमात्मदैवतमसौ श्रीजानकीजीवनम्** ॥
**पूर्व तद्विहितस्य चास्त्रपवधस्यारादधीयन्नल**
**नेष्टे स्मार्हणकर्मणोऽपि गमितो वैवश्यमुच्चैर्मुदा** ॥१८॥

**अन्वय** —अङ्घ्रियुगलाम्भोजैकभृङ्गायित स्वान्तस्य दयमानम् आत्मदैवतम् अजित श्रीजानकीजीवन उदयमान जानान । (किन्तु) पूर्व तद्विहितस्य अस्त्रपवधस्य आरात् अल न अधीयन् असौ वैवश्य गमित अपि उच्चै मुदा अर्हणकर्मण इष्टे स्म ॥

**व्याख्या—जानान इति ॥ अङ्घ्रियुगलाम्भोजैकभृङ्गायित** प्रभो श्रीरामचन्द्रस्य अङ्घ्रियुगलमेव अम्भोज तत्प्रति एकोऽनन्यो भृङ्गायित । भृङ्ग इव आचरति भृङ्गायते इति क्यङ् । भावे क्त । प्रभुरामचन्द्रस्य पदकम लयोरनन्यभक्त्या भृङ्ग इव लुब्ध । **स्वातस्य** निजमनस **दयमान** दयते इति दयमान त दयमान कृपालु रक्षितार । **आत्मदैवत** प्रियस्वामिन । **अजित श्रीजानकीजीवन** जानकीवल्लभ श्रीरामम् । **उदयमान जानान** श्रीरामचन्द्रोऽ वतरिष्यतीति ज्ञातवान् । 'ज्ञा अवबोधने' 'ज्ञाजनोर्जा' इति जादेश । तस्मात् 'ताच्छील्यवयोवचनशक्तिषु चानश्' इत्यनेन कर्तरि चानश् । जानातीति जानान । किन्तु **पूर्व तद्विहितस्य** पूर्वावतारे तत्कृतस्य । **अस्रपवधस्य** राक्षसवधस्य रावणवधस्येति भाव । 'राक्षस कौणप क्रव्यात्क्रव्यादोऽस्रप आशर' इत्यमर । **आरात्** कतिपयसमयात् स उदेष्यति, स प्रभु पुनरवतरिष्यतीति **अल** पर्याप्त **नाऽधीयन्** न स्मरन् । अधीयन्निति 'इक् स्मरणे' नित्यमधिपूर्व । अध्येति इति अधीयन् शत्र तम् । 'अधीगर्थदयेशा कर्मणि' इत्यनेन कमणि शेषे षष्ठी । तस्मात् अस्रपवधस्य इति षष्ठी । **वैवश्य गमितोऽपि** साक्षात् कृष्णरूपेण पुरत स्थितस्य रामचन्द्रस्य स्मरणेन भक्त्या च विह्वलत्व नीयमानोऽसौ जाम्बवान् । **उच्चैर्मुदा अर्हणकर्मण इष्टेस्स** अति हर्षेण पूजाविधान चकार ॥ **पक्षे** स जाम्बवान् इदमजानाद् यत्प्रभू रामचन्द्रो द्वापरयुगे शीघ्रमेवावतरिष्यति, यस्य रामचन्द्रस्य चरणकमले तस्य मानस भृङ्गीभवति, तथा यश्च जानकीजानिस्तस्याऽऽ राध्यदैवतम् । एव च त्रेतायुगे तेन भगवता रावणादयो राक्षसा हता इत्यपि स पर्याप्तरूपेण सस्मार, पर रामचन्द्र एव साक्षात् कृष्णरूपेण दर्शनपथमुपगत इत्या-नन्दमग्न स्वकर्तव्यकर्मापि विस्मृतवान् । अतस्तस्यापचितिमपि कर्तु न सेहे, दर्शनाऽदर्शनभयात् । पूजाकमणि प्रसक्तश्चेद्भवामि तर्हि सद्यो दृष्टिपथमागत स्वरूप पुन पश्यामि न वेति कारणात् इत्यपि भाव ॥ शार्दूलविक्रीडितम् वृत्तम् ॥ १८ ॥

**तेनार्पित स्वतनयार्पितरत्नसङ्गे**
**तत्पारिबर्हमिव चैव मणि दधान ॥**
**त्विड्भ्या ततोऽलमनयो प्रभुराप्तशोक-**
**मिथ्यापवादतमसोर्वितताान शान्तिम् ॥ १९ ॥**

**अन्वय**—स्वतनयार्पितरत्नसङ्गे तत्पारिबर्हमिव तेन अर्पित मणि चैव दधान, प्रभु तत अनयो त्विड्भ्याम् अप्तशोकमिथ्याप-वादतमसो अल शान्ति वितताान ॥

**व्याख्या—तेनार्पितमिति ॥ स्वतनयार्पितरत्नसङ्गे** स्वतनयया जाम्ब वत्या सह अर्पित दत्त रत्न तस्य सङ्गे सकाशे । **तत्पारिबर्हमिव** कन्याविवाहे तस्यै प्रदत्त यौतक पारिबर्ह । तस्या कन्यकाया पारिबर्ह तत्पारिबर्ह तम् । यथाऽन्यरत्न यौतके दत्त तत्सदृश **तेन** ऋक्षपतिना **अर्पित** दत्त **मणि चैव,** एन स्यमन्तकमणिं चापि **दधान** धारयन्, अलङ्कृत **प्रभु** श्रीकृष्ण । **तत अनयोर्मणिकन्यकयोर्त्विड्भ्याम्** कान्तिभ्याम्, द्वाभ्यामेवाभूषणाभ्याम् । **आप्त-शोकमिथ्यापवादतमसोरल शान्ति विततान**—आप्तशोको मिथ्यापवादश्च आप्तशोकमिथ्यापवादौ तौ एव तम पाप तयो । आप्तस्य स्वजनयादवस्य प्रसे-नस्य मृत्युजनितशोकरूप पाप तस्य । तथा स्यमन्तकापहरणस्य मिथ्यापवादरूप पाप तस्य । एतयोर्द्वयो पापयो अल पर्याप्त शान्ति विततान । मणिकन्यकयो प्रापणेन अपवादद्वयात् स मुक्तोऽभूदिति भाव ॥ वसन्ततिलका ॥१९॥

**मुधाऽनवद्येऽप्यभिशापदानादपण्डितमन्य विरुद्धमानी ॥**
**सत्राजिदप्यात्मसुता व्यतारीत्कृष्णाय कृष्णायतकेशपाशाम् ॥२०॥**

**अन्वय**—अनवद्ये अपि मुधा अभिशापदानात् अपण्डितमन्य विरुद्धमानी सत्राजित् अपि कृष्णायतकेशपाशाम् आत्मसुता कृष्णाय व्यतारीत् ॥

**व्याख्या—मुधेति ॥ अनवद्येऽपि**—'वद व्यक्ताया वाचि' । वदतीति वद्य स्तुत्यम् । न वद्यम् अवद्य पापम् । न अवद्य अनवद्य निर्दोषो निष्पाप । तस्मिन् । 'अवद्यपण्यवर्यागर्ह्य' इत्यनेन 'यत्' एव गर्ह्ये, न तु क्यप् । निर्दोषे अपि । **मुधा** वृथा **अभिशापदानात्** दोषारोपणात् । **अपण्डितमन्य** पण्डितम् आत्मान मन्यतेऽसौ पण्डितमन्य । 'आत्ममाने खश्च' इत्यनेन ख । 'अरुद्विष ' इति मुम् । न पण्डितमन्य अपण्डितमन्यो मूर्ख इत्यर्थ । अस्मिन् प्रसेनहृतौ स्यमन्तकमणिहरणे च कर्मणि श्रीकृष्णोपरि वृथा दोषारोपादात्मानमपण्डितम-विवेकिन मन्यमान । तथा **विरुद्धमानी** विरुद्ध प्रतिकूल मन्यतेऽसौ विरुद्धमानी । 'मन' इति सूत्रेण णिनि । एतद् दोषारोपात् प्रतिकूलोऽसौ **सत्राजिदपि अपी**त्यनेन यथा जाम्बवान् तथा सत्राजिदपि **कृष्णायतकेशपाशाम्** कृष्णा आयता दीर्घा केशपाशा वेणी यस्या सा ताम् । **आत्मसुता** सत्यभामा **कृष्णाय** श्रीकृष्णाय **व्यतारीत्** ददौ । केशेषु पाशपदसयोगात् सत्यभामाया भर्तृ-प्रेमबन्धनचातुर्य दर्शयतीति भाव ॥ उपजाति वृत्तम् ॥ २० ॥

**आत्मान प्रति पूर्वमादृतसुतादानप्रतिज्ञस्य ता-**
**मुद्यम्यानुभुजद्वयेन हृदयेनाऽऽलिङ्गय पद्भ्या गृहम् ॥**

**गत्वा दत्तवतोऽच्युताय वदन चान्यत्ततोङ्ग रुषा**
**द्वेधाऽन्योन्यविरुद्धकृच्छतधनुश्चक्रेऽथ सत्राजित ॥२१॥**

**अन्वय** —पूर्वम् आत्मान प्रति भुजद्वयेन उद्यम्य हृदयेन आलिङ्ग्य आदृतसुतादानप्रतिज्ञस्य, तत अनु अन्यच्च पद्भ्या गृह गत्वा ताम् अच्युताय दत्तवत सत्राजित, अथ शतधनु अन्योन्यविरुद्धकृत् वदनम् अङ्गम् च रुषा द्वेधा चक्रे ॥

**व्याख्या—आत्मनमिति ॥ पूर्व** प्रथमत एव । **आत्मान** मा शतधन्वान **प्रति भुजद्वयेनोद्यम्य** उन्नीय, **हृदयेनाऽऽलिङ्ग्य,** मा दोर्भ्यामुन्नीयाऽऽश्लिष्यापि वञ्चितोहमिति शेष । **आदृतसुतादानप्रतिज्ञस्य** आदृतम् आदरेण सश्रुत सुताया दान तस्मिन् प्रतिज्ञा यस्य स तस्य, अथवा आदृता सुतादानप्रतिज्ञा येन स तस्य ।—स्व प्रति निजकयादानाय कृतवचनस्य **सत्राजित** । **तत अनु अन्यच्च** तत्पश्चात् न केवलमिदम् अन्यदपि यत् । **पद्भ्या गृह गत्वा ताम् अच्युताय दत्तवत,** तस्य अच्युतस्य गृह पादचारेण गत्वा श्रीकृष्णाय तस्या भामाया सम्प्रदान कृतवत **सत्राजित** । तस्मै श्रीकृष्णाय विशेषादर प्रदर्शकस्य इति भाव । **अथ शतधनु** एतस्मात् कारणात् स शतधन्वा । **अन्योन्यविरुद्धकृत्** अन्योन्य प्रति विरुद्ध विपरीत करोतीति अन्योन्यविरुद्धकृत् । अत्र कृञ क्विप् । परस्पर विपरीताचरण कुर्वत् **वदनम् अङ्गम् च रुषा** क्रोधेन **द्वेधा चक्रे** । तस्य शिरो देहात पृथक् चक्रे ॥ वचनस्य कृतेश्च परस्पर विरुद्धव्यवहारात् मिथ्याभाषणपर वदन तथा दोषौ पादौ च याभ्या विरुद्ध कर्म समाचरित तादृशम् अङ्ग कृष्णप्रवण दृष्ट्वा वदनम् अङ्ग च द्वेधा चक्रे इति भाव ॥ शार्दूलविक्रीडित वृत्तम् ॥ २१ ॥

**श्वशुरहननतप्तौ रामकृष्णौ नृशस**
**द्युमणिमणिमपीच्य मुष्टिपीड हरन्तम् ॥**
**अनुसमयतिषाता सत्यभामाक्षिवारा**
**युवतिनयनमध्या कर्तुमादेशमस्य ॥२२॥**

**अन्वय** —श्वशुरहननतप्तौ रामकृष्णौ अपीच्य द्युमणिमणि मुष्टिपीड हरन्त नृशसम् अनु युवतिनयनमध्या सत्यभामाक्षिवारा अस्य आदेश कर्तुम् समयतिषाताम् ॥

**व्याख्या—श्वशुर इति ॥ श्वशुरहननतप्तौ** श्वशुरस्य सत्राजित हननेन वधेन तप्तौ सन्तापितौ **रामकृष्णौ । अपीच्य** सुन्दरम् । **द्युमणिमणि** द्युमणे सूर्यस्य मणि तम् । स्यमन्तकमणिम् । **मुष्टिपीड हरन्त** । मुष्टिना पीडा यस्मिन् कर्मणि यथा स्यात् तथा । अथवा मुष्टिना पीड धृत मुष्टिपीडम् । 'समासत्तौ' इत्यनेन तृतीयासप्तम्योर्धातोर्णमुल् । मुष्टिना पीडयित्वा धृत्वा इत्यर्थ । हरन्त हरण कृतव तम् । नृशस घातुकम् । **अनु** पश्चात् । **युवतिनयनमष्याम्,** युवतीना नयने या मषी कज्जल तस्याम् । गृहे तिष्ठन्तीना रुदतीना स्त्रिया नयनकज्जले । **सत्यभामाक्षिवारा** सत्यभामाया अक्षिवारा अश्रुभि । **अस्य** हतकस्य शतध वन । **आदेश कर्तु** वधादेश लिखितुम् । **समयतिषाताम्** सम्यक् यत्न चक्रतु । 'यती प्रयत्ने' लुडि अन्यपुरुषस्य द्विवचनम् ॥ मालिनीवृत्तम् ॥ ननमयययुतेय मालिनी भोगि लोकै ॥ २२ ॥

**अक्रूरे न्यस्तरत्न सपदि शतधनु प्राणपान्थाध्ववृक्षो**
**विच्छायो धावनेच्छुर्निझितपरिकर कृष्णवर्त्मानुषङ्गात् ॥**
**अन्तस्ताप विवृण्वन्ननु विपुलतर मण्यभावैकहेतो-**
**रश्वस्थोऽस्वस्थचित्तोऽशरण इव बभौ स्व स्थले गन्तुकाम ॥२३॥**

**अन्वय**—सपदि अक्रूरे न्यस्तरत्न शतधनु प्राणपान्थाध्ववृक्ष विच्छाय निझितपरिकर कृष्णवर्त्मानुषङ्गात् धावनेच्छु, ननु विपुलतर अन्तस्ताप विवृण्वन्, मण्यभावैकहेतो अश्वस्थ, स्व स्थले गन्तुकाम, (तदपि) अशरण इव अस्वस्थचित्त बभौ ॥

**व्याख्या—अक्रूरे इति ॥ सपदि अक्रूरे न्यस्तरत्न** तत्कालमेव त्वरया अक्रूरसकाशे स्थापितरत्न । अक्रूराय मणि दत्वा इत्यर्थ । स **शतधनु** । कथभूत ? **प्राणपान्थाध्ववृक्ष** प्राणा एव पान्था पथिका तेषाम् अध्ववृक्ष । अध्वनि वृक्ष अध्ववृक्ष । मार्गे आश्रयभूतकेवलप्राणसहायक । किन्तु अधुना **विच्छायो** विगता छाया यस्मात् स । आश्रयहीन । यथा निष्पत्राध्ववृक्षा छायया पथिकान् तोष दातुमसमर्था तद्वत् स शतधनुर्निजप्राणेभ्यो धैर्य दातुमसमर्थ । प्राणाना जिगमिषुत्वात् पान्थसादृश्यम् । पुन**र्निझितपरिकरो** निझित त्यक्त परिकरो बान्धवादिपरिवारो यस्य स । त्यक्तबान्धव । अथ च निझित शिथिल परिकर कटिबन्धो यस्य स । हतोत्साह इत्यर्थ । कि कारणम् ? **कृष्णवर्त्मानुषङ्गात्** कृष्ण कुटिल वर्त्म मार्ग तस्याऽनुषङ्गात् ससगात् । कठिनमार्गेण गमनात् । अथ वा कृष्णेन श्रीकृष्णेन कृत वर्त्म अनुक्रमण तस्याऽनुषङ्ग तस्मात् । श्रीकृष्ण.

तत्पश्चात् धावन्नागत इतिहेतो । 'अयन वर्त्म मार्गाध्वपन्थान पदवी सृति ' इत्यमर । अथ च कृष्णवर्त्मा वह्नि तस्य अनुषङ्गात् । ' बर्हि शुष्मा कृष्णवर्त्मा ' इत्यमर । गिरिकन्दरप्रदेशे श्रीकृष्णभयात् धावनाद् दावाग्ने ससर्गात् **धावनेच्छु** । **ननु** निश्चयेन **विपुलतर** भूरि । **अन्तस्ताप विवृण्वन्** मुखवैवर्ण्यादिभावान् प्रदर्शयन् इत्यर्थ । **मण्यभावैकहेतो** मणेरभाव इति एक एव हेतु तस्मात् निजसकाशे मणिर्नास्तीति कारणात् । **अश्वस्थोऽ**श्वारूढ **स्व स्थले** निजगृहे **गन्तुकामो** जिगमिषु । तदपि **अशरण इव** न शरण रक्षक अशरण । ' शरण गृहरक्षित्रो ' इत्यमर । यद्वन्नकोपि सहायको विद्यमानत्वा**दस्वस्थचित्त**श्चिन्ताकुलो **बभौ** भाति स्म (बभूव) । श्लेषालङ्कार । स्रग्धरा वृत्तम् ।।२३।।

**दर्यावेश निम्नदेशावपात दिक्सम्पाद नद्यवस्कन्दमेष ।।**
**दुद्राव द्रागत्यक्तवान्नातिदूर वृष्ण्युत्तसौ कालमृत्यू इवोभौ** ।।२४।।

**अन्वय**—एष दर्यावेश निम्नदेशावपात दिक्सम्पाद नद्यवस्कन्द दुद्राव । कालमृत्यू इव उभौ वृष्ण्युत्तसौ द्राक् अतिदूर न त्यक्तवान् ।।

**व्याख्या—दर्यावेशमिति ।। एष** शतधन्वा । **दर्यावेश** दर्या कन्दरस्य आवेशम् प्रवेशम् । दरी प्रविश्य इत्यर्थ । ' दरीतु कन्दरो वा स्त्री ' इत्यमर । **निम्नदेशावपात** निम्नदेशस्य गर्तप्रदेशस्य अवपातम् । अधोगतभूमिम् अवपत्य इत्यर्थ । **दिक्सम्पाद** दिशा सम्पाद सम्पतन, यत्र दिक् विरमति । दिगन्त सम्पाद्य इत्यर्थ । **नद्यवस्कद** नदीनाम् अवस्कन्द प्रवाहगतनिम्नप्रदेशम् । नदीम् अवस्कन्द्य इत्यर्थ । अस्मिन्पद्ये ' विशिपतिपदिस्कन्दा व्याप्यमाना सेव्यमानयो ' इति सूत्रेण द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल् । अत्र कविना साकल्येन सूत्रोदाहरणानि ग्रथिता नीति चित्रम् । एतादृशम् अतिकठिनप्रदेशम् एष शतधन्वा **दुद्राव** रामकृष्णाभ्या भीत्या धावन् अगात् । तदपि **कालमृत्यू इव** कालश्च मृत्युश्च कालमृत्यू, तौ द्वौ मृत्युसदृशौ **वृष्ण्युत्तसौ** वृष्णीना यदूनाम् उत्तसौ श्रेष्ठौ रामकृष्णौ । कर्मणि द्विवचनम् । **नातिदूर त्यक्तवान्** स तौ दूरे न तत्याज । तौ तस्य पृष्ठत एव सलग्नौ अभवताम् इत्यर्थ ।। शालिनीवृत्तम् ।। २४ ।।

**भ्रातु स्वस्याविदूरे निहतशतधनूरत्नमप्राप्य कृष्णो**
**भूयोप्यूढापवादो भवनमुपगतोऽक्रूरमाहूय काश्या ।।**
**लब्धार्थस्तत्प्रकाशादभवदथ भृश निर्मल स्वीय बुध्यो-**
**पात्तज्ञानोऽपि यद्वद्भवति निजगुरोरेव योगान्मुमुक्षु** ।।२५।।

**अन्वय** —अथ स्वस्य भ्रातु अविदूरे निहतशतधनु कृष्ण रत्नम् अप्राप्य भूयोपि ऊढापवाद, भवनमुपगत, काश्या अक्रूरम् आहूय, तत्प्रकाशात् लब्धार्थ, भृश निर्मल अभवत्। यद्वत् स्वीय-बुध्योपात्तज्ञानोऽपि निजगुरो योगादेव मुमुक्षु लब्धार्थो भवति ॥

**व्याख्या—भ्रातुरिति** ॥ **अथ** अनन्तरम्। **स्वस्य भ्रातु** बलरामस्य। **अविदूरे** न विदूरे अविदूरे समीपे इत्यर्थ। **निहतशतधनु** निहतो घातित शतधनुर्येन स। निजभ्रातृसम्मुखे एव येन शतधनुर्हत। एतादृश कृष्णो **रत्न** स्यमन्तकमणिम् **अप्राप्य, भूयोपि** पुनरपि **ऊढापवाद** ऊढ सोढ, अपवादो निन्दा येन स। 'प्रसेन इव शतधन्वापि वृथा हत' इति भूरि निन्दित श्रीकृष्ण। **भवनमुपगतो** द्वारका प्राप्त। **काश्या** काशीनगराद **अक्रूरम् आहूय**। **तत्प्रकाशात्** तेनाक्रूरेण मणिसम्बन्धात् सत्यकथनात्। **लब्धार्थ** लब्ध अर्थ सत्याशयो मणिश्च येन स लब्धार्थ प्राप्तकाम। **भृश निर्मलोऽभवत्** शान्तापवादोऽतिसन्तुष्टमानसोऽभवत्। अत्र कविरुत्प्रेक्षते। **यद्वत्** यथा **स्वीय बुध्योपात्तज्ञानोऽपि** स्वीया स्वकीया या बुद्धि तया स्वीयबुध्या, निजयैव धिया उपात्त प्राप्त ज्ञान येन स। निजबुद्धिप्रभावात् यद्यपि जन ज्ञानवानपि तदपि **निजगुरोर्योगादेव** आत्मदैशिकोपदेशात्प्राप्तज्ञानो **मुमुक्षु**र्मोक्षम् इच्छु**र्लब्धार्थो भवति** ज्ञाततत्वो मोक्षाधिकारी भवति। तद्वत् अत्रापि स श्रीकृष्ण स्वय मणि-सम्बन्धात् सकल जानन्नपि अक्रूरसकाशात् तन्मणे स्फुट ज्ञानमैच्छत् इत्यर्थ ॥ शतधनूरत्नम् इति 'रोरीति' रेफस्य लोप 'ढ्रलोपेति' दीर्घ। दृष्टान्तालङ्कार स्रग्धरावृत्तम् ॥२५॥

**तपस्युदयया यया कुशलया लयादि सकल कल परिहृतम् ॥**
**हृत वनितया तया विभुमनो मनोरथभृतामृतालघुघृणम् ॥२६॥**

**अन्वय** —यया कुशलया तपस्युदयया लयादि सकल कल परिहृतम् ॥ मनोरथभृता तया वनितया अमृतालघुघृण विभुमन हृतम् ॥

**व्याख्या —तपसीति** ॥ कालिन्दीपरिणयमाह। **यया** कालिन्द्या **कुशलया** चतुरया **तपस्युदयया** तपसि उदय उत्थान जन्म वा यस्या सा तपस्युदया तया। 'तत्पुरुषे कृतिबहुलम्' इति सूत्रेण अलुक्समास। अथवा तपसि, उदयया इति भिन्न पदद्वयम्। अर्थात् तपसि तप आराधने, व्रतवैकल्यादि-धर्माचरणेन विशिष्टजीवनोपक्रमात् उदयया उत्थानत्व गतया। अथवा 'यूना परिणता

सेय तपस्येति मत मम’ इति वचनात् प्राप्तयौवनावस्थया। **लयादि** लय आदि र्यत्र तत् लयादि गीतनृत्यवादित्रादि। **सकल कलम्**–सकलानि श्रुतिदृष्टि–सुभगानि मधुराणि कलानि एककालेनैव **परिहृत** त्यक्तम्। अथवा कलम् अव्यक्तम् अस्पष्टमिति कृत्वा त्यक्तम्। गृहीत किमिति पक्षे **मनोरथभृता** मनोरथम् अभिलाष बिभर्ति सा मनोरथभृत् तया। कृष्णप्राप्तिरूपाभिलाषधारिण्या। **तया वनितया** युवत्या। **अमृतालघुघृणम्** अमृत च अलघुश्च घृणा च यस्मिन् तत् अमृतालघुघृणम् तत्। बहुव्रीह्यन्ते नपुसकम् अथवा ‘स नपुसकम्’ इति सूत्रेण समाहारे द्विगुर्द्वन्द्वश्च नपुसकस्यादिति परवल्लिङ्गापवाद। तथा च प्रति पदोक्तस्य बहुप्रकृतिकत्वात् नपुसकत्व सिध्यति। सत्यमहाकारुण्ययुक्तम्। **विभु-मनो हृतम्** एतादृशी सा श्रीकृष्णचित्तमहार्षीत्।

नृत्यगीतवाद्यादिकल्पना प्रावीण्य कृष्णप्राप्तिरूपकर्मसाधक नेति कृत्वा तया त्यक्तम्। तथा च सत्यत्वबृहद्दयाभावधारक प्रभुमन तदेवानुध्यायन्ती हृतवतीति भाव ॥ जलोद्धतगतिर्वृत्तम्। रसैर्जसजसा जलोद्धतगति ॥२६॥

**व्याजेन केनचिदथो पुरि पाण्डवाना**
**तिष्ठन् कियद्दिनममीषु निगूढहार्द ॥**
**सख्या सम यदुपतिर्मृगयाछलेन**
**क्रीडन्वने सपदि ता प्रणिनाय भार्य्याम ॥२७॥**

**अन्वय**—अथो निगूढहार्द केनचित् व्याजेन पाण्डवाना पुरि अमीषु कियद्दिन तिष्ठन्, वने सख्या सम मृगयाछलेन क्रीडन् यदुपति ता भार्या प्रणिनाय।

**व्याख्या—व्याजेनेति** ॥ **अथो** प्रभोश्चित्ताकर्षणादनन्तरम्। **निगूढहार्द** निगूढम् अन्तर्मनस्यव्यक्त स्थित हार्द प्रेमा यस्य स। हृदयस्य इदम् हार्दम् ‘अण्’ प्रत्यय। तया प्रेम्णाऽऽकृष्ट श्रीकृष्ण। **केनचिद् व्याजेन** अभी-प्सितार्थसिद्ध्यर्थ किमपि लक्ष्य कृत्वा। **पाण्डवाना पुरि** हस्तिनापुर्याम्। **अमीषु** पाण्डवेषु **कियद्दिन तिष्ठन्** कतिपयानि दिनानि वसन्। **वने सख्या सम** अर्जुनेन सह **मृगयाछलेन** व्याजेन **क्रीडन्** विचरन्नित्यर्थ। **यदुपति** श्रीकृष्ण **ता भार्या प्रणिनाय** ता कालिन्दीं पत्नीरूपेण स्वीचकार द्वारका निनाय च। ‘उपसर्गा-दसमासेऽपि णोपदेशस्य’ इत्यनेन णत्वम्, प्रणिनाय ॥ वसन्ततिलका वृत्तम् ॥२७॥

**भाव चेतसि रुक्मिवत्प्रदधतौ दुर्योधने चेदिराट्-**
**तुल्येऽयोजयता स्वसारमनघा विन्दानुविन्दौ यदा**

**वैदर्भीमिव तत्परा निजयुजाऽवप्रेषिताप्तामपि**
**स्नेहेनाहृत हृष्टसुस्थसहजा सम्बन्धजेनाऽजित ॥२८॥**

**अन्वय** —चेदिराट्तुल्ये रुक्मिवत् भाव चेतसि प्रदधतौ विन्दानुविन्दौ अनघा स्वसार यदा दुर्योधने अयोजयताम् (तदा) अजित वैदर्भीमिव निजयुजा सम्बन्धजेन स्नेहेन तत्पराम् अवप्रेषिताप्ताम् हृष्टसुस्थसहजाम् अपि अहृत ॥

**व्याख्या**—मित्रवि दापरिणयमाह—**भावमिति ॥ चेदिराट्तुल्ये** चेदीना राजा चेदिराज 'राजाह सखिभ्यष्टच्' इत्यनेन 'टच्'। चेदिराजेन शिशुपालेन तुल्ये सदृशे, चेदिराट् इत्यत्र 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशा ष' 'इत्यनेन ष', षस्य जश्त्वेन चर्त्वम् । **रुक्मिवत् भाव चेतसि प्रदधतौ** यथा रुक्मी स्वभगिनीं शिशुपालाय दातु य भावम् आनुकूल्य दधार तमेव भाव मनसि प्रदधतौ **विन्दानुविन्दौ । अनघा** निष्पापा **स्वसार** निजभगिनीं मित्रविन्दामित्यर्थ । **यदा दुर्योधने अयोजयताम्** यदा ता दुर्योधनाय दातु प्रयत्नवन्तौ बभूवतु । तदा **अजित** स श्रीकृष्ण । अजित इत्यनेन प्रभो श्रीकृष्णस्य अजय्यत्वम् तथा विन्दानुविन्दयो पराभवो दर्शित । **वैदर्भीमिव** रुक्मिणीमिव कृष्णप्राप्त्यर्थं **निजयुजा सम्बन्धजेन, स्नेहेन, तत्पराम्** आत्मान प्रति वाशिकानुरागयुक्तस्नेहसम्बन्धेनासक्ताम्। **अवप्रेषिताप्ताम्**। अव सन्निकृष्टे । अवप्रेषित आप्त प्रत्ययितो विश्वासार्हपुरुषो यया सा ताम्। कृष्ण प्रति दूतप्रेषण कुर्वतीं । **हृष्टसुस्थसहजाम्** हृष्टा प्रसन्ना, सुस्था कुशलाऽऽरोग्ययुक्ता या विन्दानुविन्दयो सहजा भगिनी तामपि अहृत जहार, हृतवान्॥ शार्दूलविक्रीडितम् वृत्तम् ॥२८॥

**स्त्रीजुष्टोऽपि क्ष्मापति नाग्निजित्क कन्या देवोऽयाचतापूर्वलब्ध ॥**
**इभ्यो ज्योतिष्टोमदीक्षामुपेतो वित्त प्रीत्येवात्मनोप्यूनरिक्थम् ॥२९॥**

**अन्वय** —इभ्य ज्योतिष्टोमदीक्षाम् उपेत अपूर्वलब्ध देव स्त्रीजुष्टोऽपि आत्मनोप्यूनरिक्थ क्ष्मापति नाग्निजित्क वित्तमिव कन्या प्रीत्या अयाचत ॥

**व्याख्या—स्त्रीजुष्ट इति ॥ इभ्य** श्रिया विराजितो धनी इत्यर्थ । 'इभ्य आढ्यो धनी स्वामी' इत्यमर । **ज्योतिष्टोमदीक्षाम् उपेत** ज्योतिष्टोम यागस्य दीक्षा व्रतचर्या ताम्। उपेत उपगत । भविष्यद्याग कर्तु, दीक्षित इत्यर्थ ।

'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रुते । **अपूर्वलब्ध** अपूर्व पुण्य लब्ध प्राप्त येन स । पुण्यात्मा। सर्वतया सुसम्पन्न इत्यर्थ । पक्षे यो न पूर्व लब्ध स । अप्राप्तविषयो **देव** श्रीकृष्ण । **स्त्रीजुष्टोपि** स्त्रिया जुष्ट स्त्रीजुष्ट अपूर्वया रुक्मिणीसदृश्या भार्यया सङ्गच्छमानोऽपि। **आत्मनोप्यूनरिक्थम्** आत्मनोऽपि निजस्यापि ऊनरिक्थम् ऊन यून रिक्थ धन यस्य स ऊनरिक्थस्तम्। 'रिक्थमृक्थ धन वसु' इत्यमर । निजात् हीनधनमपि **क्ष्मापति नाग्निजित्कम्** एतत्संज्ञ भूपतिम्। **वित्तमिव कन्या प्रीत्या अयाचत** यथा ज्योतिष्टोमकर्ता सम्राट् माण्डलिकेभ्यो राजभ्यो यज्ञार्थ धन याचते तद्वदत्रासौ ज्योतिष्टोमदीक्षा मुपेत श्रीकृष्ण तस्मात् आत्मनो धनहीनात् नाग्निजित्कात् वित्तार्थे धनरूपिणी तस्य कन्या नाग्निजितीमेव प्रीत्या अयाचत इति भाव ॥ शालिनी वृत्तम् ॥२९॥

**सत्सामुद्रिकचिह्नसूचितमिलत्सप्तान्यमुख्याङ्गना-**
**दृक्पातानिव सप्तदुर्धरतराश्चेद्गोवृषाञ्जेष्यति ।**
**तासा तह्यवशीभवन्स्वतनुजामारस्यतेऽसौ ममे-**
**त्येव ज्ञातुमिवादृतोस्य समय कृष्णेन ससाधित** ॥३०॥

**अन्वय** — 'सत्सामुद्रिकचिह्नसूचितमिलत्सप्तान्यमुख्याङ्गना-दृक्पातान् इव मम सप्तदुर्धरतरान् गोवृषान् जेष्यति चेत् तर्हि असौ तासाम् अवशीभवन् स्वतनुजाम् आरस्यते' इत्येव ज्ञातुमिव अस्य आदृतसमय कृष्णेन ससाधित ॥

**व्याख्या —सत्सामुद्रिकेति ॥ सत्सामुद्रिकचिह्नसूचितमिलत्सप्तान्य मुख्याङ्गनादृक्पातान्** इव—सत्सामुद्रिकचिह्नानि अङ्गोपाङ्गेषु शुभलक्षणानि ते सूचित दर्शित तेन मिलन्त्य सप्तान्यमुख्याङ्गना सप्तेतरप्रधानस्त्रिय तासा दृक्पाता दृष्टिक्षेपा तान् इव। **मम सप्तदुर्धरतरान्** दुर्दान्तान् **गोवृषान्** श्रेष्ठवृष भान् **जेष्यति चेत्**। य एतादृशान् वृषभान् जेतु समर्थो भविष्यति चेत्। दाम्ना बद्धान् करिष्यतीत्यर्थ । **तर्हि असौ** स एव। **तासाम् अवशीभवन्** च्वि प्रयोग । तासा निजसप्तभार्याया वश न गत्वा। **स्वतनुजाम् आरस्यते** ममैव कन्याया स्मृतिपूर्वकेण प्रीति करिष्यतीति। आरस्यते इत्यत्र 'आ' इति अङितस्य ग्रहण न तु 'ङिदन्तस्य आङस्य' अत आत्मनेपदमेव योग्यम्। आ एव किल तत् इति वत् अव्ययम्। 'व्याङपरिभ्योरम' इति सूत्रस्य व्याप्तिर्न भवति। ईषदर्थे क्रियायोगे मर्यादाभिविधौ च य । एतमातङित विद्यात् वाक्यस्मरणयोरङित् ॥ अत्र 'आ' स्मरणे। **इत्येव ज्ञातुमिव** एतत् प्रकारेण तस्य नागजिन्नृपस्य मनोदय ज्ञात्वैव किम्। **अस्य** भूपते**रादृतसमय**

पणेनानुबद्धो शपथाचार । "समया शपथाचारकालसिद्धान्तसविद ' इत्यमर । **कृष्णेन ससाधित** पूर्णत्व नीत । 'राध साध ससिद्धौ' इत्यस्मात् निष्ठा । गोवृषान्विजित्य तस्य कन्यामुदवहत् इत्यर्थ ॥ सप्तबलीवर्दाना सामुद्रिकशास्त्र प्रदर्शितशुभलक्षणाना सप्तान्यमुख्याङ्गनाकटाक्षाणा तुल्ययोगित्व प्रदशित कविना । यदि कश्चित् पुरुष तान् वृषभश्रेष्ठान् जेष्यति तर्हि स पुरुष स्वस्यान्यसप्तस्त्रीषु सतीषु अपि मम कन्यामेव स्नेहभाज करिष्यतीति भाव ॥३०॥ शार्दूलविक्रीडित वृत्तम् ॥

**सन्तर्दनप्रभृतिभि सहजैस्तु रुक्मि-**
**विन्दानुविन्दकलितामपकीर्त्तिमिद्धाम् ॥**
**स्पष्ट सुधीभिरसहै श्रुतिकीर्तिजातै-**
**र्दत्तास्वय स भगवान्भगिनी च वव्रे ॥३१॥**

**अन्वय** —रुक्मिविन्दानुविन्दकलिताम् इद्धाम् अपकीर्तिम् स्पष्टम् असहै श्रुतिकीर्त्तिजातै सन्तर्दनप्रभृतिभि सहजै सुधीभि तु स्वय दत्ता भगिनीम् स भगवान् वव्रे च ॥

**व्याख्या—सन्तर्दनेति ॥** **रुक्मिविन्दानुविन्दकलिताम्** रुक्मी च विन्दश्च अनुविन्दश्च रुक्मिविन्दानुवि दा तै कलिता सम्पादिता ताम् । **इद्धाम् अपकीर्तिम्** रुक्म्याद्यैर्निजनिजभगिन्या उपयमे सम्पादिता या ज्वलितापकीर्ति ताम् । **स्पष्टम्** यथा स्यात् तथा विस्पष्टम् **असहै** सोढुमसमर्थै । **श्रुतिकीर्ति-जातै** श्रुतिकीर्त्यारेतत् सज्ञकाया कृष्णपितृष्वसुर्जाता श्रुतिकीर्तिजाता तै । श्रुति कीर्तिपुत्रै । **सन्तर्दनप्रभृतिभि सहजै** सहजायन्ते ते सहजा तै, सन्तर्दनादि-भ्रातृभि । कथभूतै ? **सुधीभि** सुज्ञै **तु स्वय दत्ता भगिनीं** भद्रानाम्नीं कैकेयी केकयदेशोत्पन्ना **स भगवान्** श्रीकृष्णो **वव्रे** उपयेमे च ॥ वसन्ततिलका वृत्तम् ॥३१॥

**साम्य चिराय लभतामिह सद्रमाया**
**पादेर्पणान्मधुभिदस्तनया स्वकीयाम् ।**
**इत्थ धिया पणमिषात्स च मद्रराजो**
**मद्रङ्कर किल ददावथ लक्ष्मणाख्याम् ॥३२॥**

**अन्वय —**'स्वकीया तनया मधुभिद पादेऽर्पणात्, इह सद्रमाया साम्य चिराय लभताम्', इत्थ धिया स च मद्रङ्कर, मद्रराज, पणमिषात् लक्ष्मणाख्या किल ददौ ॥

**व्याख्या—साम्यमिति ॥ स्वकीया तनयाम्** निजकन्याम्। **मधुभिद** 'भिदिर् विदारणे' मधुम् एतत् सज्ञ दैत्य भिनत्तीति मधुभिद्। कर्मण्युपपदे धातो क्विप्। तस्य मधुभिद श्रीकृष्णस्य। **पादेऽर्पणात्** चरणे अर्पणात् विवाहे सम्प्रदानादित्यर्थ। **इह सद्रमाया साम्य चिराय लभताम्** इहाऽस्मिन कर्मणि श्रीदेव्या लक्ष्म्या समानत्व चिरकालाय भवेत्। लभतामिति विध्यर्थे 'लोट्।' **इत्थ धिया** इति विचारेण। **स च मद्रङ्कर** मद्र भद्र करोतीति मद्रङ्कर। 'क्षेमप्रियमद्रेऽण् च' इत्यनेन खच् खित्वान्मुम्। पक्षे अण् मद्रकार। **मद्रराज,** स भद्रशीलो मद्राधिपतिरपि। **पणमिषात्** मत्स्यवेधनादिपणमिषात्। **लक्ष्मणाख्या** लक्ष्मणानाम्नी कन्याम्। **किल ददौ** श्रीकृष्णाय दत्तवान्॥ वसन्ततिलका वृत्तम्॥३२॥

**स्वीकर्तु शरणार्थिभूपतिसुतास्तद्येयथामामिति**
**स्वोक्त सत्यमथ द्विषद्गृहपथ सेव्यो न निस्तेजसा ॥**
**तस्माद्द्रागरिसम्पदोपहरणी दौर्गत्यवादाश्च मा**
**मन्ये भौमपुर निनाय महिषी नत्वर्थविच्छ्रीपति ॥३६॥**

**अन्वय**—ये यथा मामिति स्वोक्त सत्य स्वीकर्तु, तत् शरणार्थिभूपतिसुता स्वीकर्तुम्, अथ निस्तेजसा द्विषद्गृहपथ न सेव्य, तस्मात् द्राक् अरिसपद, दौगत्यवादान् च अपहरणी मा महिषीम् अर्थवित् श्रीपति भौमपुर नतु निनाय इति मन्ये॥

**व्याख्या—स्वीकर्तुमिति ॥ ये यथा मा प्रपद्यन्ते ता स्तथैव भजाम्यह मिति** भगवद्गीताया **स्वोक्त** स्वय श्रीकृष्णेन कथित **तत्सत्य स्वीकर्तुम्** तद्वचन सत्य कर्तुम् अत **शरणार्थिभूपतिसुता स्वीकर्तुम्** शरण रक्षितार। 'शरण गृह रक्षित्रो'रित्यमर। अर्थयन्ते कामयन्ते ता अर्थिन्य। ताच्छील्ये णिनि। शरणम् अर्थिन्य भूपतीना सुता शरणार्थिभूपतिसुता ता। रक्षणार्थ याचमाना नृपकन्या। भौमासुरबन्धनान्मोचयितु प्रार्थ्यमाना नृपतिदारिका स्वीकर्तुम्। परिणयार्थमित्यर्थ। स्वीकर्तुमिति 'तुमन् ण्वुलौ क्रियाया क्रियार्थाया' मित्यनेन भविष्य दर्थे तुमुन्। **अथ निस्तेजसा** निर्गत तेजो यस्मात् तेन। भा रहितेन इत्यर्थ। 'स्यु प्रभा रुग्रुचिस्त्विड् भा भाश्छविद्युतिदीप्तय' इति 'तेज प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु' इति चामर। **द्विषद्गृहपथ** द्विषदो गृह द्विषद्गृह तस्य पन्था। शत्रुगृहमार्गो **न सेव्यो** नानुसर्तव्य। भारहितेन जनेन शत्रुगेहमार्गानु सरण नाशायैवेति कृत्वा। **तस्मादेव**कारणाद् **द्राक्** शीघ्र भायुक्त सन् तथा **अरिसपद** अरे शत्रो सपद। शत्रुरिक्थानि तथा **दौर्गत्यवादान्** दुष्टा गतिर्दुर्गति. तस्या भावो दौर्गत्य तस्य वादास्तान्। स्त्र्यपहारकौलीनानि **अपहरणीम्**

अपाकर्तुं समर्था **मा महिषीं** राज्ञी भामामित्यर्थः । **अर्थवित्** अर्थमिङ्गितं वेत्तीति अर्थविदिङ्गितज्ञः मर्मज्ञो वा **श्रीपतिः** हरिः श्रीकृष्णः । भौमस्य पूः ता **भौमपुरं नतु** जातु **निनायेति मन्ये** इति कविरुत्प्रेक्षते । श्रीकृष्णः प्रयोजनानुसारेण वर्तते । स्त्रीसहायत्वात् स्त्र्यपहारकौलीनं नैवस्पृशेत् तथा च जेतुः स्त्री यद्यदाकाङ्क्षते तत्तत्परा भूतेन दातव्यमेव । अतः भायुक्ता मा भामा सत्यः निनायेति स्पष्टम् ।। उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ।।३३।।

**अथवा प्रिययाऽपि सयुतः किल यातः शरणं भयेषु नः ।**
**उदरे धृतविश्वसञ्चयो न हि शक्तः किमिहावितुं सतीम् ।।३४।।**

**अन्वयः**--अथवा प्रिययाऽपि सयुतः, भयेषु नः किल शरणम् । उदरे धृतविश्वसञ्चयः इह प्रिययाऽपि सयुतः यातः सतीम् अवितुं हि किं शक्तः न ? ।।

**व्याख्या—अथवेति ॥** प्रभोर्महिष्यासह शत्रुपुरगमनम् प्रकारान्तरेण उत्प्रेक्षते । **अथवा** स्त्रियासह गमनस्येदमपि कारणं सम्भवति । **प्रिययाऽपि सयुतः** स्त्रीसहितोपि यः प्रभुर्वैकुण्ठे प्रियया लक्ष्म्या सह रहसिस्थितोऽपि । **भयेषु** भयसमयेषु **नः** अस्माकं **किल शरणं** निश्चयेन रक्षिता । 'शरणं गृहरक्षित्रोः' इत्यमरः । **उदरे धृतविश्वसञ्चयः** धृतो विश्वस्य अखिलजगतः सञ्चयः समूहो येन सः । यस्योदरे निखिलं ब्रह्माण्डमेव सञ्चितम् । एतादृशोऽसौ इह **प्रिययापि सयुतो यातः** इहभौमपुरप्रवेशे स्त्रीसहितोपि गतश्चेत् । तदा **सतीम् अवितुं हि किं शक्तो न** तां महिषीं रक्षितुं हि किं न समर्थः ? । समर्थः किल इत्यर्थः ।। उत्प्रेक्षा ।। वियोगिनी वृत्तम् ।।३४।।

**प्राकारपङ्क्तीः प्रविभिद्य तत्र दैत्यान्मुरादीन्प्रभुरादिदेवः ।।**
**हत्वा बलौघेन महीसुतेन तेनान्वितास्तत्प्रधनं जगाहे ।।३५।।**

**अन्वयः**—तत्र प्राकारपङ्क्तीः प्रविभिद्य, तेन महीसुतेन बलौघेन अन्वितान् मुरादीन् दैत्यान् हत्वा, आदिदेवः प्रभुः तत्प्रधनं जगाहे ।।

**व्याख्या—प्राकारपङ्क्तीरिति ॥ तत्र** भौमपुरप्रवेशे । **प्राकारपङ्क्तीः प्रविभिद्य** प्राकारो वरणः पुरपरिवेष्टिताभित्यभित्तिः । 'प्राकारो वरणः सालः' इत्यमरः । प्राकाराणां पङ्क्तयः आवलयः ताः प्राकारपङ्क्तीः प्रविभिद्य भेदयित्वा चूर्णयित्वा । **तेन महीसुतेन** भौमासुरेण । **बलौघेन अन्वितान्** साहाय्यार्थं दत्तमहासैन्येन सहितान्, अनुगतान् **मुरादीन् दैत्यान् हत्वा** । **आदिदेवः प्रभुः**

श्रीकृष्ण । **तत्प्रधन जगाहे** तेन भौमेन दत्त प्रधन युद्ध तत्प्रधन जगाहे । भौमासुरेण सह युद्धरतो बभूव । 'युद्धमायोधन जन्य प्रधन प्रविदारणम्' इत्यमर । अथवा प्रकृष्ट धन तत् प्रधन युद्धे जित धनम् । अरित्नपदमपहरणे निमग्नो बभूव इत्यर्थ ॥ इ द्रवज्रा वृत्तम् ॥३५॥

**विप्राकार स्वमपि चकाराऽन्यार्थे वैरोचन्यध्वरवरमेतुम् ॥**
**सोऽय स्वार्थ रिपुपुरमीदृग्सत्वाधारोऽकृत किमिवेद चित्रम् ॥३६॥**

**अन्वय** —अन्यार्थे वैरोचन्यध्वरवरम् एतु स्वमपि बिप्राकार चकार। सोऽय सत्वाधार स्वार्थम् एतु रिपुपुरम् ईदृक् विप्राकारम् अकृत इद किमिव चित्रम् ॥

**व्याख्या—विप्राकारमिति ॥ अन्यार्थे** अन्यस्य अर्थे प्रयोजन तस्मिन् । देवानामुपकार कर्तुम् । योहरि**र्वैरोचन्यध्वरवरम्** । विरोचनस्य अपत्य पुमान् वैरोचनि । 'अत इञ्' इत्यनेन इञ । तस्य वैरोचनेर्बलिदैत्यस्य अध्वरवर याग श्रेष्ठम् **एतु** गन्तु **स्वमपि** आत्मानमेव **विप्राकार चकार** विप्रस्य ब्राह्मणस्य आकारो देहो यस्य स तम् । विप्राकार द्विजदेह वामनरूप चकार । **सोऽयम्** अत्र स एव हरि श्रीकृष्ण **सत्वाधार** सत्वाना प्राणिना आधार एकमात्रावलम्ब सत्वाधार । 'सत्वमस्त्रीतु जन्तुषु' इत्यमर । कर्तुमकर्तुमन्यथाकर्तु समर्थो बलवान् इत्यर्थ । **स्वार्थम् एतुम्** आत्मनोऽर्थ प्रयोजन सम्पादयितुम् । षोडशसहस्र स्त्रीविमोचनार्थे, परिणयार्थ वा । **रिपुपुर** भौमपुरम् **ईदृक् विप्राकारम् अकृत** विगत **प्राकार**श्चिह्न यस्य तत् विप्राकार तत् । शून्यमिति यावत् । नष्टमित्यर्थ । अकृत कृतवान् । **इद किमिव चित्रम्** इदम् आश्चर्य न किमपि । अर्थापत्तिरलङ्कार । कैमुत्येनार्थ ससिद्धि काव्यार्थापत्तिरिष्यते ॥ जलधरमाला वृत्तम्, अब्ध्यङ्कै स्याज्जलधरमालाम्भौस्मौ (४–८) ॥३६॥

**प्राणेशमक्षततनु स्वकटाक्षतोऽपि**
**तीक्ष्णेऽरिशस्त्रनिचये प्रविलोक्य भामा ॥**
**औज्झद्द्विजाग्र्यकुशशूकविरुग्णपाद–**
**घातव्यथासहनविस्मयभारमारात् ॥३७॥**

**अन्वय**—स्वकटाक्षत अपि तीक्ष्णे अरिशस्त्रनिचये प्राणेशम् अक्षततनु विलोक्य, भामा द्विजाग्र्यकुशशूकविरुग्णपादघातव्यथा-सहनविस्मयभारम् आरात् औज्झत् ॥

**व्याख्या—प्राणेशमिति ॥ स्वकटाक्षतोऽपि तीक्ष्णेऽरिशस्त्रनिचये** अपाङ्गदर्शनेन निजनेत्राघातादपि तीक्ष्णतरे शस्त्राघाते सति । **प्राणेश** वल्लभ श्रीकृष्णम् । **अक्षततनुम्** न क्षता छिन्ना तनुर्देहो यस्य स, अक्षततनुस्तम् । **विलोक्य भामा** महिषी सत्यभामा । **द्विजाग्र्यकुशशूकविरुग्णपादघातव्यथासहनविस्मयभारम्** द्विजाग्र्यस्य मुनिश्रेष्ठस्य भृगुऋषे कुशशूकै (कुश तृण विशेष तस्य शूक सूची) कुशसूचिभिर्विरुग्ण त्रुटितकण्टकविच्छिन्न पादश्चरणस्तस्य घात प्रहार तस्मात् व्यथा पीडा तस्या सहन मर्षण तस्य विस्मय आश्चर्य तस्य भारो गुरुत्व तम् यथा स्यात् तथा । **आरात्** दूरे **औज्झत्** तत्याज । 'उज्झ उत्सर्गे' लङि औज्झत् ।

प्रभोर्हृदये कुशकण्टकैर्विच्छिन्नपदा य आघातो भृगुऋषिणा कृत तस्य व्यथा वल्लभेन श्रीपतिना कथ परिसोढा इति विस्मिता भामा अत्र युद्धे तीक्ष्णे शस्त्राघातेऽपि तम् अक्षततनु निरीक्ष्य तत् विस्मयभार त्यक्तवती इति भाव ॥ वसन्ततिलका वृत्तम् ॥३७॥

**तैस्तै शस्त्रप्रहारैस्तृणसममचिरादूर्ध्वशोष विशुष्को**
**भौम सैन्येन साक गलितबलमद क्षुद्रनाश ननाश ॥**
**श्रीशोऽथ क्ष्मेशकन्या प्रसृमरवरणस्रक्तती सत्कटाक्ष-**
**व्याजाद्गृह्णन्निजाङ्के स्वपुरमुपदिवि प्राहिणोद्याप्ययानै ॥३८॥**

**अन्वय**—तै तै शस्त्रप्रहारै सैन्येन साक गलितबलमद भौम, अचिरात् तृणसमम् ऊध्वशोष विशुष्क क्षुद्रनाश ननाश । अथ श्रीश सत्कटाक्षव्याजात् प्रसृमरवरणस्रक्तती निजाङ्के गृह्णन् क्ष्मेशकन्या याप्ययानै उपदिवि स्वपुर प्राहिणोत् ॥

**व्याख्या—तैस्तैरिति ॥ तैस्तै शस्त्रप्रहारै** तैश्चक्रगदादीना नानाघातै । **सैन्येन साक** सैन्यै सह । **गलितबलमद** गलितो नष्टो बलस्य मदो दर्पो यस्य स । **भौमो** नरकासुर । **अचिरात्** शीघ्रमव । **तृणसमम् ऊर्ध्वशोषम्** 'ऊर्ध्वे शुषिपूरो' इत्यनेन ऊर्ध्वे कर्तरि 'णमुल्'। ऊर्ध्व एव तिष्ठन् शुष्यति इत्यर्थ । यथा तृण उपरिष्ठादधोऽध शुष्यति तद्वद् । **विशुष्क** सत्वहीन सन् । **क्षुद्रनाश ननाश** 'कर्त्रोर्जीवपुरुषयोर्नशिवहो'।' 'कषादिषु यथा विध्यनुप्रयोग'। इत्यनेन कर्तरि णमुल् । क्षुद्र इव नाश नश्यति इत्यर्थ । कीटपतङ्गवत् नाश गत । **अथ** तदनन्तरम् । **श्रीश** श्रीकृष्ण **सत्कटाक्षव्याजात्** शोभन कटाक्ष काचित् तिर्यक् अपाङ्गदृष्टि, तस्य व्याजात् मिषात् । **प्रसृमरवरणस्रक्तती** प्रसृमरा प्रसारिता, वरणा वरणार्था, या स्रक्तति ता ।

वरितु प्रसारिता या पुष्पमालाना पङ्क्तय ता । भौमासुरकारागारात् सहस्रशो विमुक्तभूपतिसुताना निजकटाक्षमिषात् वरितु प्रसारिता मालापङ्क्ती । **निजाङ्गे गृह्णन्** स्वीकुर्वन् । **क्ष्मेशकन्या** ता भूपसुता , **याप्ययानै**र्गमनयोग्यै शिबिका दिभि । 'शिबिकायाप्ययान स्यादित्यमर ।' **उपदिवि** । अव्ययम् । स्वर्गतुल्य स्वपुर द्वारका **प्राहिणोत्** प्रेषयामास ॥ स्रग्धरा छन्द ॥३८॥

**तत्पदे तत्सुत देवो हस्तवर्त्तमवीवृतत् ॥**
**सोऽपि वासासि रत्नानि हस्तग्राहमजिग्रहत् ॥३९॥**

**अन्वय**—देव तत्पदे तत्सुत हस्तवर्त्तम् अवीवृतत् । सोऽपि वासासि रत्नानि हस्तग्राहम अजिग्रहत् ॥

**व्याख्या—तत्पद इति** ॥ **देव** श्रीकृष्ण । **तत्पदे** तस्य पद तत्पद तस्मिन् तस्य भौमासुरस्यैव राजपदे । **तत्सुत** तस्य भौमस्य पुत्रम् । **हस्तवर्त्तम्** 'हस्तेवर्तिग्रहो ' इत्यनेन हस्तार्थे करणे णमुल् । हस्तेन वृत्वा इत्यर्थ । **अवीवृतत्** वृतु वर्तने इत्यस्मात् प्रयोजकव्यापारहेतुना धातोर्णिच् । वर्तमान प्रैरयत् अवीवृतत् । देव तत्सुत हस्तेन धृत्वा राजपदे प्रातिष्ठिपत् इत्यर्थ । **सोऽपि** स पुत्रोऽपि । **वासासि रत्नानि च हस्तग्राहम्**, अत्रापि णमुल् । हस्तेन गृहीत्वा **अजिग्रहत्** । 'ग्रह उपादाने' इत्यस्मात् 'णिच्' हस्तेन **ग्रहीतु** स्वीकर्तु प्रैरयत् अजिग्रहत् । स भौमपुत्रोऽपि देव श्रीकृष्ण वस्त्रभूषणानि स्वीकर्तु हस्तेन प्रैरयत् इत्यर्थ ॥ हस्तग्राहपद गृहीतुरनिच्छा प्रकटय्य दातुरिच्छावलीयस्त्व द्योतयति तेन कौलीन नाभूदित्यर्थ । अतो हस्तवर्त तथा हस्तग्राहमिति विशेषणाभ्या प्रयुक्त परिकरालङ्कार ॥ अनुष्टुप् छन्द ॥३९॥

**द्विजवरयुत पत्नीजुष्ट स्वधर्मपथे स्थित**
**सपदि नरक प्रोज्झित्याऽऽरात्सुधीरुपरि व्रजेत् ॥**
**इति विशदयन्भाव भामान्वितो यमराजसात्-**
**कृतधरणिजस्तार्क्ष्यारूढोऽसुरद्विडगाद्दिवम् ॥४०॥**

**अन्वय**—'द्विजवरयुत पत्नीजुष्ट स्वधर्मपथे स्थित सुधी नरक सपदि प्रोज्झित्य आरात् उपरि दिव व्रजेत्' इति भाव विशदयन् तार्क्ष्यारूढ भामान्वित यमराजसात्कृतधरणिज असुरद्विट् दिवम् अगात् ॥

**व्याख्या—द्विजवरेति ॥ द्विजवरयुत** द्विजवरेण सच्छीलब्राह्मणेन युत सयुक्त । सद्विजसमागमेन सुसयुक्त । **पत्नीजुष्ट** सद्वर्तनाया पत्न्या समागमेन सुशोभित । **स्वधर्मपथे स्थित** स्वधर्म एवाचरित , सन्मार्गे रत । एतादृक् **सुधी**र्विद्वान् बुध । **नरक सपदि प्रोज्झित्य** त्यक्त्वा, **आरात् उपरि दिव** स्वर्गं व्रजेत् । नरकमगत्वा, उपरि स्वर्गमेव गच्छेत् । **इति भाव विशदयन्** एतादृशमभिप्राय स्वानुवर्तनेन स्पष्टीकुर्वन्निव । द्विजवरयुतो द्विजवरेण श्रेष्टपक्षिणा गरुडेन युत , **ताक्ष्योरूढो** गरुडोपरि सस्थित । पत्नीजुष्टो **भामान्वितो** भार्यासत्यभामासहित । **यमराजसात्कृतधरणिज** ' तदधीनवचने ' इत्यनेन कृभ्वस्तियोगे साति स्यात । यमराजाधीन कृतो यमराजसात्कृतो धरणिजो भौमासुरो येन स । **असुरद्विट्** दैत्यारि । इति पदद्वयेन दुष्टसहारमेव धर्माचरणस्याङ्ग प्रभुणा तदा सम्पादितम् । तत श्रीकृष्ण **दिवमगात्** स्वर्गमगच्छत् । पारिजातहरणायेति भाव ॥ हरिणी छन्द ॥४०॥

**छत्र प्राचेतस तद्रुददिव विरहात्स्वामिनो यत्तदम्भ-**
**स्तस्मै प्रायच्छदच्छ श्रवणयुगमथो यच्चिर लुप्तरन्ध्रम् ॥**
**तद्भूय कुण्डलाभ्या स बलभिदनुजोऽबूभुषद्देवमातु**
**स्वर्गे सस्थाप्य चैक नगमपरमर द्वारकामानिनाय ॥४१॥**

**अन्वय**—तत् प्राचेतस छत्र यत् तदम्भ स्वामिन विरहात् रुददिव तस्मै प्रायच्छत् । अथो देवमातु अच्छ श्रवणयुग यत् चिर लुप्तरन्ध्रम् तत् बलभिदनुज कुण्डलाभ्या भूय अबूभुषत् । स एक नग स्वर्गे सस्थाप्य अपर च द्वारकाम् अरम् आनिनाय ॥

**व्याख्या—छत्रमिति ॥ तत् प्राचेतस** प्रचेतस इद प्राचेतसम् । ' तस्येदम् ' इति अण् । ' प्रचेता वरुण पाशी ' इत्यमर । वरुणस्य तत् प्रसिद्ध **छत्रम् आतपत्र यत् तदम्भ** तस्माच्छत्राच्च्युतम् अम्भो जल तदम्भ । **स्वामिनो** वरुणस्य **विरहात् रुददिव** भौमासुरेण नीयमानत्वाद्वरुणस्य वियोगाद् रुदत् इव, सन्ततजलप्रस्रवणाद् वियोगाश्रुबिन्दून् मुञ्चदिति उत्प्रेक्षा । वरुणस्य छत्र सदैव जलप्रस्रवणशीलमितिभाव । एतादृश छत्र श्रीकृष्णस्तस्मै वरुणाय प्रायच्छत् पुनर्ददौ इत्यर्थ । **अथो** तदनन्तरम् । **देवमातु**रदितेे **अच्छ** निर्मल शोभन वा । **श्रवणयुग** कर्णद्वय । **यत् चिर लुप्तरन्ध्र** लुप्त नष्ठ रन्ध्र छिद्र यस्य तत् । भौमासुरेण कर्णभूषणहरणाद् बहुकाल कर्णाभरणाधारणात् लुप्तरन्ध्रम् । **तत्** श्रवण युगम् । **बलभिदनुजो** बलभिद इन्द्रस्य अनुज उपेन्द्र श्रीकृष्णो लघुभ्राता इति भाव । **कुण्डलाभ्या भूयोऽबूभुषत्** पुनरपि ता देवमातरम् अदिति कर्णभूषणा

न्याम् अलञ्चकार । 'भूष अलङ्करणे' भूषयति लुङि अबूभुषत् । एतेन प्रकारेण **स** प्रभुरेक **नग,** न गच्छतीति नग, शैलो ग्राव, तदेव रत्नमित्यर्थ । **स्वर्गे सस्थाप्य** देवमात्रे अदित्यै दत्वा । **अपर नग** वृक्ष, पारिजातसज्ञक **द्वारकाम् अर** द्रुतम् **आनिनाय** सत्यभामाया सन्तोषायेति भाव ॥ उत्प्रेक्षालङ्कार । स्रग्धरा वृत्तम् ॥४१॥

**कृष्ण कदाचिदधिमञ्चमनल्पहृष्टो**
**द्रुह्यन्किलालघुविनोदघनोदयाय ॥**
**भैष्म्याऽऽचरन्त्सह परक्षितिपालयोग**
**तच्चेतसोऽनभिमत स्फुटमादिदेश ॥४२॥**

**अन्वय** --कदाचित् अधिमञ्चम् अनल्पहृष्ट कृष्ण भैष्म्या सह अलघुविनोदघनोदयाय आचरन्, किल अद्रुह्यन्, तच्चेतस अनभिमत परक्षितिपालयोग स्फुटम् आदिदेश ॥

**व्याख्या—कृष्ण इति ॥ कदाचिदधिमञ्चमनल्पहृष्ट कृष्ण** । मञ्चे पर्यङ्क इति अधिमञ्चम् । अव्ययीभाव । कस्मिंश्चित् दिने अत्यानन्दितो मञ्चो परिसुखासीन श्रीकृष्णो **भैष्म्यासहाऽलघुविनोदघनोदयाय** अलघुर्भूरि यो विनोद परिहास तस्य घनोदय घन सान्द्रत्व दृढत्व, तस्य उदय प्रकटन तस्मै । रुक्मिण्या सहाऽत्यन्त परिहासाय आचरन् वर्तन कुर्वन् **किल अद्रुह्यन्** किञ्चिदपि विद्रोहेण विना, किन्तु निश्चयेन परिहासमेव कुर्वन् । **तच्चेतसोऽनभिमतम्** तस्या मनसोऽमान्यम्, अरुच्युत्पादकम् । **परक्षितिपालयोगम्** परक्षितिपालस्य कस्य चिदन्यभूपतेर्योगो विवाहार्थ सयोग तम् । केनाप्यन्यराजपुरुषेण सह विवाह प्रबन्धम् । **स्फुट** यथा स्यात् तथा प्रव्यक्त कर्तुम् । **आदिदेश** अनुज्ञातवान् ॥ 'आचरनन्त्सह' इत्यत्र 'नश्च' इतिसूत्रेण धुट् । वसन्ततिलक वृत्त ॥४२॥

**उररीकुरु नव्यजन सुमुखीत्यवमानितवद्व्यजन सुतनो ॥**
**प्रथम व्यलुठत्पुर एव हरेर्न विभो त्यज मामिदमर्थयितुम्*॥४३॥**

**अन्वय** —हे सुमुखि ! नव्यजनम् उररीकुरु इति व्यजनम् अवमानितवत् सुतनो प्रथममेव हरे पुर व्यलुठत्, विभो ! माँ न त्यज इदम् अर्थयितुम् ॥

**व्याख्या—उररीकुर्विति ॥ हे सुमुखि** शुभानने ! **नव्यजनम् उररीकुरु** कमपि नवीन राजपुरुषम् उररीकुरु, स्वीकुरु, भजस्व । 'ऊर्यादि च्वि• । '

**इति** इत्थ प्रबन्धश्रवणादित्यर्थ । **व्यजन** भैष्म्या हस्तेन वलयित तालवृन्तकम् । **अवमानितवत्** यथा स्वयमेव जातापमानित तद्वत् । **सुतनो प्रथममेव** सुशोभना तनुर्देहो यस्या सा सुतनु तस्या । रुक्मिण्या पतनस्य पूर्व स्वयमेव **हरे पुरोऽग्रे व्यलुठत्** पपात । किमर्थ पपात ? **विभो** हे हरे ! **मा न त्यज** मा व्यजन न त्यज । अथवा **मा** लक्ष्मी रुक्मिणी न त्यज । **इदमर्थयितुम्** इम भाव प्रदर्शयितु तत् व्यजन हरिचरणे लुलोठ ॥ तोटक वृत्तम् । इह तोटकमम्बुधिसै प्रथितम् ॥४३॥ (४ सगण)

**परिहासवचोऽमृतमप्यवशा कटुभावतया हृदये दधती ॥**
**परिहारभयज्वरदूनतनूरतनोर्जननी न्यपतद्भुवि सा** ॥४४॥

**अन्वय** —अमृतमपि परिहासवच कटुभावतया हृदये दधती अवशा परिहारभयज्वरदूनतनू सा अतनो जननी भुवि न्यपतत ॥

**व्याख्या—परिहासवच इति** ॥ **अमृतमपि परिहासवच** परिहासस्य विनोदस्य वच वचन परिहासवच तत् । यद्यपि हरेर्भाषणम् अमृत सत्य, कटुतारहित, विनोदमयमेव तथापि । **कटुभावतया** कटुर्भाव लक्षण यस्य स कटुभाव तस्य भाव कटुभावता (भावे तल् स्त्रियाम्) तया, तद्वचसोऽतितीक्ष्णत्वेन **हृदये दधती** ता वाच सत्या जानती । **अवशा** अतो विह्वलता गता, अस्वाधीना । **परिहारभयज्वरदूनतनू** परिहारस्य वियोगरूपविच्छेदस्य भय तस्मात् ज्वर सन्ताप तेन दूना पीडिता तनूर्यस्या सा । श्रीकृष्णस्य विच्छेदभयात्तापसन्त्रस्ता । अनेन तात्कालिक विह्वलत्व ध्वन्यत । (shocked इति आङ्ग्लभाषायाम्) । **सा अतनो** कामस्य **जननी** रुक्मिणी **भुवि न्यपतत्** भूमौ पपात ॥ कटुभावोत्पन्न विकारेण सा विह्वलत्व तथा च त्यागभयज्वरेण पीडिता सन्ताप प्राप्य भुवि पपातेति भाव ॥ तोटक वृत्तम् ॥४४॥

**तन्नर्मवाग्विकलचित्तनिवासहेतो**
**सङ्क्रान्ततद्गुण इवाथ भृश विषण्ण ॥**
**तस्मिन्विनोदकलिते कलहे कृशाङ्ग्या**
**लोप चकार करुणस्स विहस्य हस्य** । ४५॥

**अन्वय** —अथ तन्नर्मवाग्विकलचित्तनिवासहेतो भृश विषण्ण सङ्क्रान्ततद्गुण इव स करुण विहस्य कृशाङ्ग्या तस्मिन् विनोद-कलिते कलहे हस्य लोपम् चकार ॥

**व्याख्या—तन्नर्मवागिति ॥** **अथ** तस्या भैष्म्या भुवि पतनादनन्तरम्। **तन्नर्मवाग्विकलचित्तनिवासहेतोर्भृश विषण्ण** सा नर्मवाक् परिहासवाणी तन्नर्मवाक्, तया विकल दु खित चित्त, तस्य निवास स्थिति सौस्थ्यमित्यर्थ, तस्य हेतुस्तस्मात्, तत्परिहासवचनजनितव्याकुलस्वान्तस्य, सौस्थ्यलाभहेतो स्वयमपि भृश विषण्णोऽतिदु खित श्रीकृष्ण । क इव ? **सङ्क्रान्ततद्गुण इव** सम्यक् क्रान्तो व्याप्त सङ्क्रान्त, स एव गुण तद्गुण । सङ्क्रान्त तद्गुणो येन स सङ्क्रान्ततद्गुण । यथा वस्तु अन्यबलवद्गुणस्य योगात् स्व गुणमुत्सृज्य तद्गुणताम् एति तद्वदत्र स श्रीकृष्णो निजविनोदगुण सन्त्यज्य भैष्म्या विषादगुण दधार। तामाकुला दृष्ट्वा स्वयमपि व्याकुलो बभूवेतिभाव । अत **स करुणो** दु खितो **विहस्य** हास्य कृत्वा। **कृशाङ्ग्या** रुक्मिण्या । **तस्मिन् विनोदकलिते** विनोदेन कलित प्रभावितो जनितो वा विनोदकलित तस्मिन्। रुक्मिणीकृष्णयो परिहासाज्जनिते। **कलहे** विवादे। **हस्य लोप चकार** कलहस्य परिहास कृत्वा 'हस्य' हकारस्य लोपम् अदृश्यत्व चकार। हकार रहित कलह 'कल' इति वर्तते। मधुरास्फुटे ध्वनौ 'कल', सचासौ अस्फुटोऽव्यक्ताक्षर । तस्मात् स श्रीकृष्णो रुक्मिणीं भूमौ पतिता दृष्ट्वा तत्र सीत्कारशब्देनैव दु खप्रकटन कृत्वा कलहनाश व्यतनुतेति भाव ॥ तद्गुणोऽलङ्कार ॥ वसन्ततिलका वृत्तम् ॥४५॥

**सर्वास्ता वनिता हरेर्दशदशाऽहीनान् गुणैरात्मजा–**
**नेकैकामपि चात्मजा सुषुविरे सद्भिर्युता लक्षणै ॥**
**तत्राद्यै क्रमभाग्भिरङ्कवसतौ तादृङ्न यादृक्पितु**
**प्रेमालम्भि दृढ पराभिरपरोत्सङ्गेऽचिर स्थास्नुभि ॥४६॥**

**अन्वय**—हरे ता सर्वा वनिता गुणै अहीनान् दशदश आत्मजान्, अपि च सद्भि लक्षणै युताम् एकैकाम् आत्मजा सुषुविरे। तत्र आद्यै क्रमभाग्भि पितु अङ्कवसतौ तादृक् प्रेमा न अलम्भि यादृक् पराभि अपरोत्सङ्गे अचिर स्थास्नुभि दृढ प्रेमा अलम्भि ॥

**व्याख्या—सर्वा इति ॥ हरे** श्रीकृष्णस्य **ता सर्वा वनिता** स्त्रिय । **गुणैरहीनान्** सर्वगुणोपेतान्। **दशदशात्मजान्** दशदशपुत्रान् **सुषुविरे** जनयामासु । **अपि च सद्भिर्लक्षणैर्युता** सुलक्षणाम्। **एकैकाम् आत्मजा** कन्या सुषुविरे। **तत्राऽऽद्यै क्रमभाग्भि** प्रथमद्वितीयतृतीयेतिक्रमेण ये पुत्रा आसन् तै, **पितु** श्रीकृष्णस्य **अङ्कवसतौ** अङ्कस्य उत्सङ्गस्य वसतिर्निवास तस्याम् श्रीकृष्णस्योत्सङ्गनिवासे। **तादृक् प्रेमा न अलम्भि** प्राप। 'डुलभष्'

प्राप्तौ लभते इत्यस्मात् कर्मणि लुङि चिण्। 'विभाषाचिण्णमुलो' इत्यनेन भाव कर्मणि लभेर्नुमागमो वा स्यात् लुङि अलम्भि अलाभि इति। (णमुलि लभ लभ, लाभ लाभम् वा)। **यादृक् पराभि** तदुत्तरजनिताभि कन्याभि। कथभूताभि? **अपरोत्सङ्गेऽचिर स्थास्नुभि**। 'स्थास्नु'रिति 'ग्लाजिस्थश्चग्स्नु इत्यनेन 'ष्ठा=स्था गतिनिवृत्तौ' इत्यस्मात् 'ग्स्नु' प्रत्यय। परस्य उत्सङ्ग तस्मिन् परोत्सङ्गे न परोत्सङ्गे अपरोत्सङ्गे अन्यपुरुषस्य अङ्के। अचिर स्थास्नुभि कञ्चित् कालमेव स्थास्नुभि अर्थात् न स्थायिनीभि किन्तु पितु श्रीकृष्णस्यैवोत्सङ्ग चिर तिष्ठन्तीभि, **दृढ प्रेमा अलम्भि** प्राप। पुत्रेभ्योपि कन्या श्रीकृष्णस्यातिप्रिया आसन्निति भाव ॥ शार्दूलविक्रीडितम् छन्द ॥४६॥

**आकल्पमुर्वीं शिरसाप्युदूढा निधास्यतान्तेमुखहव्यवाहि ॥**
**सङ्कर्षणेनोचितमीहित प्राग्विमोचितोऽग्रे यदघानि रुक्मी ॥४७॥**

**अन्वय**—आकल्प शिरसाऽपि उदूढाम् उर्वीम् अन्ते मुखहव्यवाहि निधास्यता सङ्कर्षणेन उचितम् ईहितम्, यत् प्राक् विमोचित रुक्मी अग्रे अघानि ॥

**व्याख्या—आकल्पमिति॥** **आकल्प** कल्पात् आ इति आकल्पम्। 'आङ् मर्यादाभिविध्यो' इत्यनेन अव्ययीभाव समास। सृष्टे आदित। **शिरसाऽप्युदूढाम्** मूर्ध्नापि धृताम् **उर्वीम्** पृथ्वीम् **अन्ते** कल्पान्ते **मुखहव्यवाहि** हव्य वहतीति हव्यवाट्। 'वहश्च' इति ण्वि। अग्नि। मुखमेव हव्यवाट् मुखहव्यवाट् तस्मिन् मुखहव्यवाहि मुखाग्नौ **निधास्यता** स्थापयिष्यता, **सङ्कर्षणेन** शेषावतारेण बलरामेण। **उचित** योग्यम्। **ईहित** चेष्टितम्। 'ईह चेष्टायाम्' इत्यस्मात् निष्ठा क्त। कथम्? **यत् प्राक् विमोचितो रुक्मी** यो रुक्मी रुक्मिणीविवाहसमये मरणाद्रक्षित स एव रुक्मी **अग्रे** प्रद्युम्नविवाहसमये **अघानि** व्यापादित। 'हन् हिंसागत्यो' इत्यस्मात् कर्मणि लुङि चिण् अघानि॥ समये समये कर्तव्यानि कर्माणि यथासमयमेवाचरणीयानीति विशदयितुमेव समये मूर्ध्ना धृत जगत्कल्पान्ते मुखाग्नौ प्रक्षिप्यते इति भाव ॥ उपजाति वृत्तम् ॥४७॥

**हरये प्रतिहारपालता ददत सुष्ठु बलेर्गुणाधिक ॥**
**उदभूत्किल बाणसञ्ज्ञक पुरपालीकृतशम्भुरङ्गज ॥४८॥**

**अन्वय**—हरये प्रतिहारपालता ददत सुष्ठु बले अङ्गज पुरपालीकृतशम्भु गुणाधिक बाणसञ्ज्ञक उदभूत् किल ॥

**व्याख्या—हरय इति ॥ हरये** विष्णवे । **प्रतिहारपालता** प्रतिहार द्वार पालयति इति प्रतिहारपाल द्वाररक्षक तस्य भाव प्रतिहारपालता ताम् । द्वाररक्षकत्वम् । ददत ददानस्य । **सुष्ठु** प्रशसने अव्ययम् । **बले** बलिदैत्यस्य । येन बलवता बलिदैत्येन विष्णुर्द्वाररक्षक कृत तस्य बलिदैत्यस्य । **अङ्गज** पुत्र । **पुरपालीकृत शम्भु** पुर पालयति रक्षति य स पुरपाल । अभूततद्भावे च्वि, पुरपालीकृत । पुरपालीकृत शम्भुर्येन स । येन शङ्करोपि नगररक्षक कृत । एतादृक् **गुणाधिको** जनकादधिकगुणवान् **बाणसंज्ञको** बाणासुर । **उद्भूत् किल** जात खलु ।

बलिस्तु विष्णु द्वाररक्षक कृतवान् तत्पुत्रो बाणस्तु विनाशकर्मणि दक्षम् ईश्वरमेव रक्षणकर्मणि न्ययोजत् अत स [illegible] भाव ॥ परिकरालङ्कार साभिप्रायविशेषणत्वात् ॥ वियोगिनी छन्द ॥४८॥

**यो वै त्रिविक्रमतनु सघृण ययाचे**
**पाद तृतीयमलघु शिरसाधिवोढुम्** ॥
**तस्याप्यभूत्स सुकुमारशताग्रगण्यो**
**येनान्वभावि जगदीशकरोऽपि भार** ॥४९॥

**अन्वय**—य त्रिविक्रमतनु सघृण तृतीय अलघु पाद शिरसा अधिवोढु ययाचे वै, तस्यापि सुकुमारशताग्रगण्य स अभूत्, येन जगदीशकर अपि भार अन्वभावि ॥

**व्याख्या—यो वै इति ॥** यो बलिदैत्य । **त्रिविक्रमतनुम्** त्रीणि विक्रमाणि पाद यासानि यस्य तनौ स त्रिविक्रमतनु तम् । त्रिपदा निखिल जगदाक्रान्तु समर्थम् । **सघृण** कृपालु वामनम् । **तृतीयम् अलघु** सुविस्तीर्ण **पाद शिरसाऽधिवोढु** स्वमूर्ध्नि निधातु **ययाचे वै** खलु याचितवान् । तस्य बलेरपि सुदृढतनोरिति भाव । **तस्यापि सुकुमारशताग्रगण्य** एतादृशो बलवतो बलिदैत्यस्य, सुकुमाराणा कोमलाङ्गाना पुत्राणा शत तस्मिन् अग्रे प्रथमे गण्यते स । 'यत्' प्रत्यय । **स** बाणासुरोऽ**भूत्** । **येन** बाणासुरेण **जगदीशकर अपि च भार अन्वभावि** समरे निजसहस्रबाहुछेदने श्रीकृष्णस्य हस्तलाघव तथा गुरुत्व चानुभूतम् । यस्य पिता बलि प्रभो पदभारम् अन्वभवत् तस्याऽसौ पुत्रो बाण प्रभोर्हस्तभारम् अन्वभवत् । पदभारात् हस्तभारोल्पतर तथापि बाणासुरेण तदपि बहु गुरुतर मतमित्यर्थ । वसन्ततिलका वृत्तम् ॥४९॥

**लावण्येन जगत्त्रयस्य घटिता भूषाभृतेनेव या**
**वक्तु सङ्कुचतीव या रतिरिति ब्राह्मी स्मरेशस्नुषा** ॥

**यस्या दर्शनमाप नापि भगवान्पूषा कुतो मानवा**
**सा बाणासुरभूरभूत् क्षितिशिरोभूषा ननूषाभिधा ।।५०।।**

**अन्वय** — या जगत्त्रयस्य भूषाभृतेन लावण्येन घटिता इव । या ब्राह्मी 'स्मरेशस्नुषा रति ' इति वक्तु सङ्कुचतीव । यस्या दर्शन भगवान पूषाऽपि न आप मानवा कुत , सा क्षितिशिरोभूषा ऊषाभिधा बाणासुरभू अभूत् ननु ।।

**व्याख्या—लावण्येनेति ॥ या जगत्त्रयस्य भूषाभृतेन लावण्येन घटिता इव**-या बाणासुरकन्यका त्रिलोकस्य यदलङ्कारभूत लावण्य सौन्दर्य तेनैव घटिता विरचिता इव, यथाऽलङ्कारो नाना रत्नै सुरुच्या निर्मितो भवति तद्वत् सा जगत्त्रयस्य शिरोधार्यसौदर्येण निर्मिताऽपि किम् इत्यर्थ । **या ब्राह्मी** वाणी साक्षात् सरस्वती इति भाव । **स्मरेशस्नुषा** स्मरेशस्य श्रीकृष्णस्य स्नुषा पुत्रवधू , प्रद्युम्न भार्या **'रति ' इति वक्तु सङ्कुचतीव,** या वाण्यपि सा रति अथवा रत्या प्रतिकृतिरिति सम्बोधनाय सङ्कोच दधतीव । सा अद्वितीयसौन्दर्यमयी इति भाव । **यस्या दर्शन भगवान् पूषा** सूर्योपि **न आप, मानवा कुत** या सूर्येणापि न दृष्टा सा मानवै कथ द्रष्टु शक्या । सौधाभ्यन्तरे सुरक्षितत्वादिति भाव । एतादृशी **सा क्षितिशिरोभूषा** या शिर श्रेष्ठत्वेन सौदर्येण च भूषयति सा शिरोभूषा सुन्दरस्त्री इत्यर्थ । क्षित्या शिरोभूषा क्षितिशिरोभूषा । यत्र पृथिव्या सुन्दरस्त्रीषु श्रेष्ठा । **ऊषाभिधा** ऊषा इति अभिधानेन कथिता । **सा बाणासुरभू** बाणासुरकन्या **अभूत्** । **ननु** निश्चयेन ।। शार्दूलविक्रीडित वृत्तम् ।।५०।।

**आश्लेषोऽपि न यत्र पत्ररचनाभङ्गो न यत्र त्रपा–**
**भारेणाऽपि न वर्णवर्णनरवोऽभ्यर्णे श्रुते प्रेयस ।।**
**नो यत्रापि च भूषणच्युतिकथा तादृक् क्वचिद्वासरे**
**प्रद्युम्नात्मभवेन सङ्गतमभूत्तस्या अजर्येतरत् ।।५१।।**

**अन्वय** —यत्र आश्लेषोऽपि न, यत्र पत्ररचनाभङ्गोऽपि न, यत्र त्रपाभारेण श्रुते अभ्यर्णे वर्णवर्णनरवोऽपि न, यत्र प्रेयस भूषणच्युनि-कथा अपि नो। तादृक् क्वचिदपि वासरे प्रद्युम्नात्मभवेन तस्या सङ्गतम् अजर्येतरत् अभूत् ।।

**व्याख्या—आश्लेष इति ॥ यत्र आश्लेषोऽपि न** यत्र ऊषानिरुद्धमीलन विषये य आश्लेष. परस्परालिङ्गन सोपिनाभूत् । **यत्र पत्ररचनाभङ्गोऽपि न**

कस्तूरीकुङ्कुमादिना स्त्रीजनस्य शरीरोपरि या आलेख्यलेखा सा पत्ररचना, तस्या भङ्ग च्युति सोप्यत्र नाभूत्। सङ्गतस्य स्वाप्निकत्वादिति भाव सर्वत्र। **यत्र त्रपाभारेण** ल॰ञ ॰य त **श्रुते** कर्णस्य। **अभ्यर्णे** अन्तिके, समीपे। **वर्ण वर्णनरव** अक्षरवर्णनशब्दोऽ**पि न** परस्परप्रेमालापोपिनाभूत्। अन्य श्रृणोतीति लज्जया भयाद्वा प्रेयस कर्णान्तिके शनै शनै कृतो यो वार्तालाप सोपि नाभूत् इत्यर्थ। **यत्र प्रेयसो** वल्लभस्य **भूषणच्युतिकथापि नो** भूषणस्य अलङ्कारस्य च्युति स्खलन तस्या कथा वार्ता। सापि नाभूत्, भूमौपतनात् प्राप्तालङ्कारेण प्रेयसो परस्परभूषणपतनोद्भूतवार्ता, प्रवृत्तिरपि नाभूदित्यर्थ। **तादृक् क्वचिदपि वासरे** यथोपरिवर्णिता तादृशीघटना कस्मिन्नपि दिवसे। **प्रद्युम्नात्मभवेन** प्रद्युम्न पुत्रेण अनिरुद्धेन सह **तस्या** ऊषाया **सङ्गत** सङ्गमन **अजर्येतरत्** नाशयुक्तम् असत्य**मभूत्**। स्वाप्निकत्वात् इतिभाव।

अजर्येतरत् इति जॄष् वयोहानौ जीर्यति इत्यस्मात् 'अजर्यसङ्गतम्' इति सूत्रेण नञ्पूर्वाज्जीर्यते कर्तरि 'यत्' अजर्यम् अविनाशि तस्मात् इतरत् भिन्न नाशयुक्तमित्यर्थ ॥

यत्र प्रेयसो परस्परसयोग प्रत्यक्षोभवति तत्रैवोपरिनिर्दिष्टप्रकारा सम्भवन्ति, किन्त्वत्र स्वाप्निकत्वात् तयो सयोग परस्परमीलनोद्भूतपरिणामरहित एव सञ्जात इति भाव ॥ शार्दूलविक्रीडितम् वृत्तम् ॥५१॥

**चित्रेषु द्रुतकल्पितेष्ववगतोऽथोचित्रलेखाख्यया**
**सख्या योजयितु पुर स रमणीरत्नेन कामाङ्गज ॥**
**विप्रेणेवपितामह स च पिता तद्वैरिणेवाचिरा–**
**न्नीत किन्नु यदो कुलव्रतमिद भार्याप्तिरन्योद्यमात् ॥५२॥**

**अन्वय** —अथो चित्रलेखाख्यया सख्या द्रुतकल्पितेषु चित्रेषु अवगत स कामाङ्गज रमणीरत्नेन योजयितु अचिरात् पुर नीत। (केनइव) पितामह विप्रेण इव। स च पिता तद्वैरिणा इव। 'अन्योद्यमात् भार्याप्ति' इइ यदो कुलव्रत कि नु ॥

**व्याख्या—चित्रेष्विति ॥ अथो** ऊषावल्लभ कथ जातस्तद्वर्णयति। **चित्रलेखाख्यया** चित्रलेखा इति आख्या नाम यस्या सा चित्रलेखाख्या तया। **सख्या** आल्या। **द्रुतकल्पितेषु चित्रेषु अवगत** शीघ्रलेखन कृत्वा प्रदर्शितेषु चित्रेषु ज्ञात, **स कामाङ्गजोऽ**निरुद्ध। **रमणीरत्नेन योजयितुमचिरात् पुर नीत** रमणी एव रत्न तेन। तया **ऊषया** सह सम्मेलनाय द्रुत शोणितपुर नीत।

स्यासुरस्य पापोदयात् स **क्रुद्धान्तरात्मा सन्** क्रुद्ध अन्तरात्मा यस्य स । क्रुद्धो भूत्वा । **उद्धामखेदार्त्त इव** उत् उत्गत उद्ध्वस्त धाम गृह तस्य खेदात् आर्त्तो पीडित । उद्ध्वस्तगृहपीडित इव **अच्युतो युद्धाय अतितत्वरे** त्वरयामास ॥ करुणार्णव इति यस्य कीर्त्ति प्रसिद्धा सोपि श्रीकृष्णोऽधुना पौत्रस्याऽनिरुद्धस्य बन्दि शाग्लाया प्रक्षेपणात् क्रुद्धो भूत्वा युद्धाय त्वरयामास इति भाव ॥ वशस्थ वृत्तम् ॥५४॥

**आगते भगवति प्रतियोद्धु सोऽपि दैत्यपतिरुद्धतसैन्य**
**दत्तदृष्टिरधिशोणितपूर मुक्तशोणितपुर प्रबभासे ॥५५॥**

**अन्वय**—भगवति आगते । प्रतियोध्दुम् उद्धतसैन्य स दैत्य-पतिरपि, अधिशोणितपूर दत्तदृष्टि मुक्तशोणितपुर प्रबभासे ॥

**व्याख्या—आगत इति ॥ भगवति** श्रीकृष्णे । **आगते** युद्धाय प्राप्ते सति । **प्रतियोद्धुम्** श्रीकृष्णेन सह प्रतियुद्ध कर्तुम् । विरुद्धपक्षेण सह युद्ध कर्तुमित्यर्थ । **उद्धतसैन्य** उद्धतम् उन्मत्त सैन्य यस्य स । स दैत्यपतिर्बाणासुरोऽपि । **अधिशोणितपूरम** शोणितस्य रक्तस्य पू प्रवाह शोणितपूर । 'ऋक्पूरब्धू पथामानक्षे' इति सूत्रेण समासस्य 'अ' प्रत्ययोऽन्तावयव स्यात् । तस्मिन् शोणितपूरे । शोणित-पूरे इति [illegible] । अव्ययीभावसमास । भविष्यद्युद्धस्य रक्तप्रवाहे । **दत्तदृष्टि** दत्ता दृष्टिर्येन स । युद्धाय सोत्साह इत्यर्थ । **मुक्तशोणितपुर** मुक्त त्यक्त शोणितपुरम् एतत् सज्ञ निजनगर येन स । युद्धाय नगराद्बहिरागत स बाणासुर **प्रबभासे** शुशुभे । युद्धाय सज्जो बभूवेति भाव ॥५५॥ स्वागता वृत्तम् ॥

**पदाति पदाती रथस्थ रथस्थो गजारूढमन्यो गजारूढ एव ॥**
**मुहुस्सादिन चापि सादी विनिघ्नन्व्यधत्तैकतूणीरशेष समीकम् ॥५६॥**

**अन्वय**—पदाति पदाति विनिघ्नन् एवम् रथस्थ रथस्थम्, अन्य गजारूढ गजारूढ, सादी अपि सादिन एव मुहु विनिघ्नन् एकतूणीरशेष समीक व्यधत्त ॥

**व्याख्या—पदातिमिति ॥ पदाति** पदगसैनिक, **पदातिं विनिघ्नन्** प्रहार कुर्वन् । 'पदाति पत्ति पदग पादातिकपदाजय' इत्यमर । **एवम्** एतादृक् **रथस्थो** रथारूढो **रथस्थम्** । **अन्यो गजारूढो गजारूढ** प्रहार कुर्वन् । सादी अश्वारोही सादिन विनिघ्नन् एव मुहुर्विनिघ्नन् सैनिका परस्पर पुन पुनर्बाणखड्गादिभि प्रहार कुर्वन्, एतादृक् तत् **समीक** युद्धम् **एकतूणीरशेष व्यधत्त** एक कवल तूणीर निषङ्ग शेषो यस्मिन तत् । यस्मिन्

सङ्ग्रामे केवल निषङ्ग शेषोऽभवत् । सर्वेषा बाणाना प्रयोजितत्वात् केवल तूणीरशेष तत् युद्धमभूदित्यर्थ । श्लोकोऽय "पत्ति पदाति रथिन रथेशस्तुरङ्गसादी तुरगाधिरूढम् यन्ता गजस्याभ्यपतद्गजस्थ तुल्यप्रतिद्वन्द्विबभूव युद्धम् ॥" इत्येव कालिदासश्लोक स्मारयति ॥ पदातीरथस्थमिति 'रोरी' त्यनेन रेफस्य लोप । 'ढ्रलोपे पूर्वस्य दीर्घोऽण' इत्यनेन इकारस्य दीर्घ । भुजङ्गप्रयात वृत्तम् ॥५६॥

**प्रायोन्यत्र कृतश्रमा न हरिणा मुक्ता पृषत्का पर**
**शेषस्यैवनियोजितस्य मुखतस्तत्रोद्गत पावक ॥**
**सन्त्रस्तैर्भुवनैस्तत प्रलयकृत्काल शशङ्कतरा**
**विश्वात्मापि शयिष्यमाण इव यद्भर्गो जजृम्भे चिरम् ॥५७॥**

**अन्वय**—हरिणा प्राय अन्यत्र कृतश्रमा पृषत्का न मुक्ता, पर शेषस्य नियोजितस्यैव मुखत तत्र पावक उद्गत । तत सन्त्रस्तै भुवनै प्रलयकृत् काल शशङ्कतराम् । यत् विश्वात्मा भर्गोपि शयिष्यमाण इव चिर जजृम्भे ॥

**व्याख्या—प्राय इति ॥ हरिणा** श्रीकृष्णेन । **प्राय** बहुधा । **अन्यत्र कृतश्रमा** कृता श्रमा यैस्ते । रणान्तरे उपयोजिता । **पृषत्का** बाणा । **न मुक्ता** न प्रक्षिप्ता । **पर** परन्तु । **शेषस्य** अस्मिन् युद्धे यस्तूणीरे अवशिष्ट अकृत श्रमबाण तस्य । अथ च सर्पबाणस्य । **नियोजितस्यैव** अस्मिन् युद्धे कृतो पयोगस्यैव **मुखतो** मुखात् । **तत्र पावकोऽ**ग्नि **उद्गत** उत्थित । **तत** तस्मात् कारणात् । **सन्त्रस्तैर्व्याकुलैर्भुवनै** त्रिजगद्भि । **प्रलयकृत्काल शशङ्केतराम्** प्रलयान्तसमय एवाऽऽगत इति अतिशयेन शङ्कित । द्विवचनविभज्योपपदे तरबीयसुनौ' इत्यनेन तिङन्तात् तरप । **यत्** यस्मात् पावकत्रासात् प्रभावाद्वा, **विश्वात्मा** जगदाधारो **भर्ग** शङ्करोपि **शयिष्यमाण इव** शयिष्यते इति शयिष्यमाण 'लृट शानच्' निद्रया व्याप्तो निद्रालुश्चिर **जजृम्भे** युद्ध त्यक्त्वा बहुकाल पर्यन्त जृम्भण चक्रे ॥ शार्दूलविक्रीडितम् वृत्तम् ॥५७॥

**क्रौञ्चाचले चिरमनर्ति तु यन्मयूर**
**तत्केन दृष्टमिह सङ्ख्यचमत्कृति न ॥**
**सन्दर्शय क्षणमितीव तमर्दति द्राक्**
**प्रद्युम्नमार्गणगणे सशिखी गुहोऽगात् ॥५८॥**

**अन्वय**—हे मयूर ! यत् (त्वया) क्रौञ्चाचले चिरम् अनर्ति, तत् केन दृष्टम् । 'न सङ्ख्यचमत्कृति क्षण सन्दर्शय' इतीव तम्

अर्दति । इह प्रद्युम्नमार्गणगणे अर्दति ( सति ) सशिखी, गुह द्राक् अगात् ।

**व्याख्या—क्रौञ्चाचल इति ॥** हे **मयूर** ! **यत्** नृत्य त्वया **क्रौञ्चाचले चिरम् अनर्ति** क्रौञ्चपर्वते बहुकाल सदा इत्यर्थ **अनर्ति** नर्तितम् । **तत्** नृत्य **केन दृष्टम्** न केनापीत्यर्थ । **'न सङ्ख्यचमत्कृतिम् क्षण सन्दर्शय'** **इतीव** अस्माकम् अस्य कृष्णबाणासुरयुद्धस्य युद्धजन्यचमत्कार कञ्चित्काल सन्दर्शय **इतीव** इत्थमेव **त** मयूरम् **अर्दति** याचते । **इह** अस्मिन् युद्धभूमौ आगमनादनन्तरम् । **प्रद्युम्नमार्गणगणे** प्रद्युम्नस्य कृष्णपुत्रस्य मार्गणाना बाणाना गण समूह तस्मिन्, प्रद्युम्नस्य बाणसमूहे अर्दति पीडयति सति ! सशिखी शिखिना मयूरेण सहित सशिखी 'वोपसर्जनस्य' इत्यनेन सहस्य स । **गुह** षडानन । **द्राक् अगात्** रणाङ्गणात् पलायन चकार । अर्द धातु पीडने अपि ॥ वसन्ततिलक वृत्तम् ॥५८॥

**वरिष्यतो हन्त विहस्तता भृश तदैव बाणाद्विहताशका इव ।**
**श्रियोपि भर्तारमुपेत्य मार्गणा वृथैव जग्मुर्गुणविच्युता यत ॥५९॥**

**अन्वय**—हन्त ! तदैव भृश विहस्तताम् वरिष्यत बाणात् मार्गणा विहताशका इव श्रिय भर्तारम् उपेत्यापि वृथा जग्मु यत गुणविच्युता ॥

**व्याख्या—वरिष्यत इति ॥ हत** खेदे ! **तदैव** तस्मिन्नेव समये निज सहस्रबाहूना भारभूतत्वादिति भाव । **भृश** भूरि । **विहस्तताम्,** हस्तस्य भाव हस्तता । भावे तल् स्त्रियाम् । विगता हस्तता विहस्तता ताम् । निजबाहूना राहित्यम् । अथ च व्याकुलत्वम् । 'विहस्तव्याकुलौ समौ' इत्यमर । यतो याचितोपि प्रापयिष्यतीति वा न वा इति भावाद् व्याकुलत्वम् । **वरिष्यत** 'वृञ् वरणे' वरिष्यति इति वरिष्यन् तस्मात् । याचयिष्यतो **बाणात्** बाणासुरात् । **मार्गणा** शरा । 'कलम्ब मार्गण शरा' इत्यमर । अथ च **मार्गणा** याचका । 'मार्गणौ याचकार्थिनौ' इत्यमर । **विहताशका इव** विहता नष्टा आशा अकाङ्क्षा येषा ते विहताशका । बहुव्रीह्यन्ते कप प्रत्यय । 'आपो यतरस्याम्' इत्यनेन ह्रस्वत्व वा स्यात् । नष्टमनोरथा इव **श्रियो** लक्ष्म्या **भर्तार** श्रीपतिं श्रीकृष्णमित्यर्थ । **उपेत्यापि वृथा जग्मु** प्रभुसान्निध्यमागतोप्यपूर्णमनोरथास्तस्थु । किं कारणम् ? **यतो गुणविच्युता** गुणात् मौर्व्या विच्युता भ्रष्टा ते बाणा गुणरहितात् निष्फला आसन् । अर्थिन पक्षे यत तप स्वाध्यायादि गुणरहिता अभक्ता इत्यर्थ. । सश्लिष्टोत्प्रेक्षा । वशस्थ वृत्तम् ॥५९॥

**व्यश्वेविकार्मुकशरे विरथे विसूते**
**चित्रपराक्रमिणि सत्यपि तत्र बाणे ।।**
**शार्ङ्गप्रसर्पदिषुसङ्घनिपीतदेह**
**निर्वाणभावमखिल समगादनीकम् ।।६०।।**

**अन्वय** —तत्र व्यश्वे, विरथे, विसूते, विकार्मुकशरे, चित्र यत् तत्र पराक्रमिणि बाणे सति अपि, शार्ङ्गप्रसर्पदिषुसङ्घनिपीतदेहम् अखिलम् अनीक निर्वाणभाव समगात् ।।

**व्याख्या—व्यश्व इति** ॥ **तत्र** तस्मिन् कृष्णबाणासुरयुद्धे । **व्यश्वे** विशेषेण योग्ये अश्वे, **रथे, सूते** तथा **विकार्मुकशरे** विशेषेण कार्मुक कर्मणिसमर्थ धनु शरश्च एतयो समाहार । विकामुकशर तस्मिन् । 'धनुश्चापौ धन्वशरासनकोदण्ड कार्मुकम्' इत्यमर । तत्र विशेषयोग्ये धनुश्शरे सति । **चित्र** अपितु इदमाश्चर्यम् **यत् तत्र पराक्रमिणी बाणे सत्यपि** तस्मिन् युद्धे बलवति बाणासुरे विद्यमाने सत्यपि । **पक्षे पराक्रमिणि बाणे सत्यपि** बाणासुरसम्मुखेपि **व्यश्वे** विगते अश्वे अश्वरहिते, रथरहिते, सूतरहिते धनुर्बाणरहिते एतादृशे युद्धोपयुक्तसकलसामग्रिणा विनाशे सति । **शाङ्र्गप्रसर्पदिषुसङ्घनिपीतदेहं** शार्ङ्गात् प्रभोश्शरासनात् प्रसर्पन् य इषुसङघो बाणसमूह तेन निपीत शोषित देह यस्य । तत् । तत् । **अखिलम् अनीक** सकल सैन्य **निर्वाणभाव समगात्** हतमित्यर्थ । प्रभुणा निहतात् मोक्ष प्रापेति भाव । बाणासुरविरहित सकल सैन्य ननाश इत्यर्थ ।। वसन्ततिलका वृत्तम् ।।६०।।

**दृष्ट्वाऽपत्यपरिग्रहा प्रभुवरो बाढ प्रसीदेदिति**
**प्रायो दिग्वसना तदा दितिसुताधीशप्रसू कोटराम् ।।**
**अप्येत कुटिल विमुञ्च समितेरित्यर्थसमसूचने**
**नून मुक्तकचा दृशापि बहु नो मेने स तिर्यङमुख ।।६१।।**

**अन्वय** —तदा 'एत कुटिलम् अपि समिते विमुञ्च' इत्यर्थ-ससूचने, प्राय दिग्वसना दितिसुताधीशप्रसूम् अपत्यपरिग्रहा कोटरा मुक्तकचा दृष्ट्वा, प्रभुवर बाढ प्रसीदेत् इति । स तिर्यङमुख नून दृशापि बहु नो मेने ।

**व्याख्या—दृष्ट्वेति** ॥ **तदा** अखिले सैन्ये निहते सति । **एत कुटिल** नीचमपि बाणासुरम् । **समितेर्युद्धाद् विमुञ्च** त्यज । **इत्यर्थससूचने** इत्याशय-प्रदर्शनेपि किम् । **प्रायो दिग्वसनाम्—**बहुशेन दिगम्बरा नग्नामित्यर्थ । **दितिसुता-**

**धीशप्रसू** दितिसुताना दैत्यानाम् अधीश तस्य प्रसूर्माता ताम् । दैत्याधिपतेर्बाणस्य मातर कोटरानाम्नीम् **अपत्यपरिग्रहाम्** अपत्यस्य बाणस्य परिग्रहा आदान रक्षण मिच्छन्तीम् । 'पत्नीपरिजनादानमूलशापा परिग्रहा' इत्यमर । **दृष्ट्वा प्रभुवरो बाढ प्रसीदेदिति** इत्थ प्रकारेणात्मान बीभत्सरूपिणीं **मुक्तकचा** विमुक्तकेशा च दृष्ट्वा श्रीकृष्ण कृपालुर्भूत्वा पुत्र त्यजेत् इति तस्या आशय ज्ञात्वा। **स तिर्यङ्मुखस्ताहक्** दर्शनस्याऽयोग्यत्वात् साचिकण्ठ । **दृशापि** दृष्टैव **नून** निश्चयेन **बहु नो मेने** विशेष महत्व नादात्, किन्तु तिर्यङ्मुखत्वात् युद्धात् विरराम । एव तस्या आशय सफलितोऽभूदिति भाव । शार्दूलविक्रीडित वृत्तम् ॥६१॥

**सज्जीभूय पुन पुरात्स पृतनामानीय मानी तत**
**सज्जीमूतघनस्वनो निजपराभूत्या सलज्जीकृत ॥**
**यावत्सङ्गरतत्पर प्रविहितद्वन्द्वाजिरुत्कम्पयन्**
**भूमिं तावदिह ज्वरो विजितवान्माहेश्वर वैष्णव ॥६२॥**

**अन्वय** —निजपराभूत्या सलज्जीकृत स मानी सज्जीमूतघनस्वन तत पुन सज्जीभूय पुरात पृतनाम् आनीय सङ्गरतत्पर भूमिम् उत्कम्पयन् यावत प्रविहितद्वन्द्वाजि तावत् इह वैष्णव ज्वर माहेश्वर विजितवान् ॥

**व्याख्या—सज्जीभूयेति** ॥ **निजपराभूत्या**–निजपराभवेण, **सलज्जीकृत** लज्जया सहित सलज्ज । कृभ्वस्ति योगे च्वि । सलज्जीकृत सव्रीडीकृत । **स मानी** अहमन्यो बाणासुर । **सज्जीमूतघनस्वन** सज्जीमूतस्य मेघस्य घनस्वन इव स्वनो घोरस्तनितमिव शब्दो यस्य स । **तत** तदनन्तर **पुन सज्जीभूय** सकलसामग्र्या सहितो भूत्वा, **पुरात् पृतना** सेनाम् **आनीय सङ्गरतत्परो** युद्धासक्त **भूमिम् उत्कम्पयन्** विचलयन् **यावत् प्रविहितद्वन्द्वाजि** प्रविहित प्रारब्धो द्वन्द्वस्य आजिर्युद्ध येन स । द्वन्द्वयुद्ध कर्तुं सन्नद्ध **तावत् इह वैष्णवो ज्वरो माहेश्वर विजितवान्** विष्णोर्ज्वररूपास्त्र माहेश्वरास्त्रम् अजयत् । जिजये इत्यस्मात् क्तवतु प्रत्यय विजितवान् ॥ शार्दूलविक्रीडितम् वृत्तम् ॥६२॥

**निहत्य शत्रूंस्त्स्वतनु प्रयच्छता**
**प्रयुध्य साक सदयेन शार्ङ्गिणा ॥**
**शिवप्रसादैधितजीवितोऽप्यसौ**
**सजीव एवेह चतुर्भुजोऽभवत् ॥ ६३ ॥**

**अन्वय**—शत्रून् निहत्य स्वतनु सदयेन प्रयच्छता शार्ङ्गिणा साक प्रयुध्य, शिवप्रसादैधितजीवित असौ इह सजीव एव चतुर्भुज अभवत् ।

**व्याख्या—निहत्येति ॥ शत्रून् निहत्य** शत्रुनाश कृत्वा । स्वतनु निजदेह श्रीकृष्णस्य आत्मन एव चतुर्भुजात्मक देहमित्यर्थ । **सदयेन** दयया सह वर्तते इति सदय तेन । 'वोपसर्जनस्य' इत्यनेन सहस्य स । कृपालुना । **प्रयच्छता** ददता **शार्ङ्गिणा** श्रीकृष्णेन **साक** सह **प्रयुध्य** युद्ध कृत्वा । मरणान्ते स्वशरीर दत्तवता कृपालुना श्रीकृष्णेन सह युद्ध कृत्वा । **शिवप्रसादैधितजीवित** शिवस्य प्रसादात् एधित वर्धित जीवित यस्य स । शङ्करस्य प्रसादात् विवर्धितायुरसौ बाणासुर, **इह सजीव एव चतुर्भुजोऽभवत्** शङ्करस्य कृपाप्रसादाद् अमरत्वान्मरणपश्चात् प्राप्तव्य कृष्णदेहत्व तत्पूर्वमेवास्मिन्नेव जन्मनि अस्मिन्नेव कलेवरे चतुर्भुजोऽभवत् । मरणात्पूर्वमेव प्रभो श्रीकृष्णस्य चतुर्भुजमयीं सरूपता प्रापेति भाव । शङ्करस्यानुनयेन जीवन्मुक्त स बाण श्रीकृष्णेन तस्य अन्यबाहून् छित्वा चतुर्भुज कृत इत्यर्थ ॥ वशस्थ वृत्तम् ॥६३॥

**वासुदेववियुतस्तु निरुद्ध तद्युत किल भवत्यनिरुद्ध ॥**
**इत्युषापतिरुपादिशदैश नाम नामनि निजे परिगृह्णन् ॥ ६४ ॥**

**अन्वय** —'वासुदेववियुत तु निरुद्ध , तद्युत अनिरुद्ध भवति किल' इति निजे नामनि ऐश नाम परिगृह्णन् उषापति उपादिशत् ॥

**व्याख्या—वासुदेवेति ॥ वासुदेववियुतो** वासुदेवात् ब्रह्मण परमात्मनो वियुतो रहितो भिन्नो भेददर्शी इत्यर्थ । यदा जनो जीव इति यावत्, आत्मान परमात्मनो भिन्नत्व दर्शयन् वर्तते । **स तु निरुद्ध** तदा स मायावलिप्त सन् ससृतिबद्ध, ससारसागरे निमज्जति । **तद्युत** तेन परमात्मना युत तद्युत । यदा स जीव आत्मपरमात्मभेदरहित, 'अह ब्रह्मास्मीति' तेन ऐक्य प्राप्त, तदा **अनिरुद्धो भवति किल,** न निरुद्धो बद्धोऽनिरुद्ध, ससृतिबन्धनान्मुक्तो भवति किल निश्चयेन । **इति** इत्थ प्रकारेण । **निजे नामनि** आत्मनि नामधेये अनिरुद्ध इत्याकारके **ऐश नाम** प्रभो श्रीकृष्णस्य वासुदेव इति अकाररूप नाम । 'अकारो वासुदेव' इति अभिधानात् । **परिगृह्णन्** स्वीकुर्वन् । **उषापति** प्रद्युम्नपुत्र **उपादिशत्** ससूचयति स्म । कथम् ? यत इह बाणासुरनगरे यदा वासुदेववियुत श्रीकृष्णेन वियुक्त, श्रीकृष्ण रहित तदा बाणासुरकारागारे निरुद्धो बन्दीकृत । यदा पुन श्रीकृष्णेन सयुक्त श्रीकृष्णेन सयोग कृत तदा अनिरुद्धत्वम् प्राप्त । इति स प्रद्युम्नपुत्रोऽनुभवति स्म । इति स्पष्टभाव ॥ स्वागता वृत्तम् ॥६४॥

**सत्कृत स बहुतेन माधव सोत्सवा सुकुतुका निजा पुरीम् ॥**
**आययौ वरवधूसमन्वितो मूर्त्तिमद्विजयसिद्धिभागिव ॥६५॥**

**अन्वय** —तेन बहु सत्कृत मूर्त्तिमद्विजयसिद्धिभाक् इव वरवधू-समन्वित स माधव सोत्सवा सुकुतुका निजा पुरीम् आययौ ॥

**व्याख्या—सत्कृत इति** ॥ **तेन** बाणासुरेण । **बहुसत्कृतो** बहुप्रकारेण सम्मानित । **मूर्त्तिमद्विजयसिद्धिभाक् इव** मूर्तिमान् साकाररूपो विजयो, मूर्त्तिमद्विजय तस्य सिद्धि सम्पन्नता भजतेऽसौ सिद्धिभाक् । 'भजोण्वि' इति भजते ण्वि । अथवा मूर्त्तिमती विजयसिद्धि भजतीति मर्त्तिमद्विजयसिद्धिभाक् । वधूवरलाभरूपेण मूर्तिमन्त विजय प्राप्त इव **स माधव** श्रीकृष्ण । **वरवधूसमन्वित** वरश्च वधूश्च वरवध्वौ ताभ्या समान्वित । उषानिरुद्धाभ्या सहित अथ वा श्रेष्ठवधूसहित । **सोत्सवा सुकुतुका** कौतूहलेन महोत्सवेन मण्डिताम् । **निजा पुरीं** द्वारकाम् **आययौ** पुनराजगाम ॥ रथोद्धता छन्द ॥६५॥

**अनार्द्र द्रागन्धु यमहृदयबन्धु ननु चिरा-**
**दुपासीन लब्धत्रपमिव लघोरप्यघमलात् ॥**
**नृग तिर्यग्देह यदुतनयवर्ग कृतहठ-**
**स्तमुद्धर्त्तु तावत्समभवदपाशोप्युभयथा ॥६६॥**

**अन्वय** —लघो अपि अघमलात् य तिर्यक् देह ननु लब्धत्रपमिव अनार्द्रम् अहृदयबन्धुम्अन्धु चिरात् उपासीन नृगम् उद्धर्त्तुम् अपाश यदुतनयवर्ग उभयथापि त द्राक् उद्धर्त्तु कृतहठ तावत् समभवत् ॥

**व्याख्या—अनार्द्रमिति** ॥ **लघोरप्यघमलात्** स्वल्पस्याप्यपराधात् । **य तिर्यक् देह** गतक्षुद्रयोनिं, प्राप्तकृकलासदेह । **ननु लब्धत्रपमिव** क्षुद्रयोनि प्राप्ते लज्जितमिव । **अनार्द्र** निर्जलम् । **अहृदयबन्धुम्** हृदयस्य प्रेमार्द्रभावस्य बन्धुर्मित्र हृदयबन्धु स्निग्धपूर्ण । न हृदयबन्धु अहृदयबन्धु तम् अहृदयबन्धुम् अतिकठिन भयङ्कर शुष्कमित्यर्थं । पक्षे । **यमहृदयबन्धु** यमहृदयवत् अतिनीरसम् । **अन्धु** कूपम् । 'पुस्येवान्धु प्रहि कूपमुदपान तु पुसि वा ।' इत्यमर । **चिरात् उपासीन** बहुकालात् सेवमानम् । अन्धकूप सेवमानम् । **नृगम्** एतत् सज्ञ राजानम् **उद्धर्त्तु** कूपात् बहिर्निष्कासितु **यदुतनयवर्गो** यदुदारकाणा समूह । **अपाशो** नास्ति पाशो बन्धनार्थे रज्वादिर्यस्य स । बन्धनरज्जुरहित तथा च अप त्यक्ता आशा येन स अपाश. त्यक्ताश । **उभयथापि** । 'प्रकारवचने

थाल्'। प्रकारद्वयेनापि पाशेन अपाशेन वा। **त द्राक् उद्धर्त्तु कृतहठ तावत् समभवत्** तदपि त निष्कासितु बद्धपरिकरोऽभवत् ॥ शिखरिणी वृत्तम् ॥६६॥

**तदनु करमनन्तो वाममभ्यर्भभावे**
**परिचितदधिभक्त स्निग्धमग्रे विधाय ॥**
**उपसरटमुतैकेन प्रहेस्तीरमाधा–**
**दपि दृढमनुशास्य स्वानवज्ञानपापम् ॥६७॥**

**अन्वय**—तदनु अनन्त अर्भभावे परिचितदधिभक्त स्निग्ध वाम करम् उपसरटम् अग्रे विधाय, अपि स्वान् अवज्ञानपाप दृढम् अनुशास्य, उत एकेन प्रहे तीरम् आ अधात् ॥

**व्याख्या—तदनु इति ॥ तदनु** तत्पश्चात् यदुदारकै श्रीकृष्णाय निवेदनानन्तरमित्यर्थ । **अनन्त** श्रीकृष्ण । **अर्भभावे** अर्भस्य भाव अर्भभाव तस्मिन्। बाल्यावस्थाया गोपबालै सह विचरन् क्रीडायाम्। **परिचितदधिभक्तम्** परिचितो ज्ञातो दधिभक्तो दध्योदन येन स तम्। निरन्तरदधिसपर्कोच्चिक्कणम्। **स्निग्ध** मसृण प्रेमयुक्त च। **वाम कर** यस्योपरि दध्योदन स्थापित तम् अदक्षिण करम्। **उपसरट** सरटस्य समीपे उपसरटम्। अव्ययीभावसमास। तस्य कृकलासस्याऽग्रे **विधाय** प्रसार्य। **अपि स्वान् अवज्ञानपाप** स्वान् स्वकीयान् पुत्रानित्यर्थ। अवज्ञानम् अज्ञान तदेव पापम् अज्ञानरूपम् अघम्। **दृढ** यथा स्यात् तथा पूर्णम् **अनुशास्य** कथयित्वा, निजपुत्रान् अनवधानस्य पाप कथयित्वा इत्यर्थ। **उत** आश्चर्ये। **एकेन** वामहस्तेन त सरटम्। **प्रहेस्तीरम् आ अधात्** कूपकण्ठे स्थापितवान् ॥ शास धातोर्द्वि कर्मणी स्त प्रधानम् अकथित गौण च। अत्र स्वान् प्रधान कर्म, अवज्ञानपाप अकथित कर्म। मालिनी वृत्तम् ॥६७॥

**गत कदाचिद् व्रजमच्युताग्रज–**
**श्चिरेण नन्दादिमगोपचक्षुषाम् ॥**
**वियोगशुग्योगमुदोद्यदश्रुणो–**
**रवैद्विभेद न विशेषवेद्यपि ॥६८॥**

**अन्वय**—कदाचित् चिरेण व्रज गत अच्युताग्रज विशेषवेदी अपि नन्दादिमगोपचक्षुषा वियोगशुग्योगमुदोद्यदश्रुणो विभेद न अवैत् ॥

**व्याख्या—गत इति ॥ कदाचित्** कस्मिंश्चित् समये। **चिरेण** चिरकालादनन्तरम्। **व्रज गतोऽच्युताग्रजो** बलरामो **विशेषवेद्यपि** विशेष वेत्तीति विशेषवेदी। ताच्छील्ये णिनी। भेदाभेदनिश्चायकोऽपि, कुशल इत्यर्थ। **नन्दादिमगोपचक्षुषाम्** नन्द आदिमो मुख्यो येषा गोपाना ते नन्दादिमगोपा तेषा चक्षुषा नयनाना। नन्दप्रमुखगोपनयनानाम्। **वियोगशुग्योगमुदोद्यदश्रुणो** वियोगशुचा विरहशोकेन योगमुदया पुनर्मीलनानन्देन च उद्यतोर्निर्गच्छतोरश्रुणो **र्विभेद** परीक्षण **न अवैत्** नाजानात्। बलरामो भेदाभेदनिश्चायक परीक्षणे कुशलो भूत्वापि गोपानाम् अश्रुपात तस्य विरहशोकेन अथवा पुनर्मीलनानन्देन सञ्जात इति तयोर्द्विप्रकारकयोरश्रुणोर्भेद न ज्ञातवान् इति भाव ॥ वशस्थ वृत्तम् ॥६८॥

**दिवा वयस्यान् रुचिरैर्विहारैर्दोषा तु योषाश्चटुलैर्विलासै ॥**
**अरीरमद्रम्यतरैर्गुणौघैस्सताममहोरात्रमनोरमात्मा ॥६९॥**

**अन्वय**—स रुचिरै विहारै वयस्यान् दिवा अरीरमत्। दोषा तु चटुलै विलासै योषा अरीरमत्। अहोरात्रमनोरमात्मा रम्यतरै गुणौघै ताम् अरीरमत् ॥

**व्याख्या—दिवेति ॥** श्रीकृष्णस्य दिनचर्या कथयति ॥ **रुचिरैर्विहारै** आखेटादिभिर्नौकानयनादिभिश्च रम्यहास्यरसोत्पादकैर्विहारै क्रीडाभि **स** श्रीकृष्ण **दिवा** अव्ययम्। दिवसेषु। **वयस्यान्** सुहृदो रन्तु प्रैरयत् **अरीरमत्**। 'रमु क्रीडायाम्' णिजताल्लुङ्। तथा **दोषा** अव्ययम्। रात्रिषु तु। **चटुलैर्विलासै** नृत्यगीतादिमनोज्ञहावभावप्रधानै कामसन्दीपकैर्मधुमधुरवीणानिनादै स्त्रीणा विलास प्रधानै सुकुमारविभ्रमोत्पादकललितकलित कूजनैश्च। **योषा** स्त्रीवर्गान् अरीरमत्। स एव आदिपुरुष श्रीकृष्ण **अहोरात्रमनोरमात्मा** अहश्च रात्रिश्च अहोरात्र तेषु मनो रमयति या सा अहोरात्रमनोरमा तस्या आत्मा प्रधानपुरुष स। 'अह सर्वैकदेशसख्यात पुण्याच्च रात्रे' इत्यनेन रात्रेरच्। आदिपुरुष स कृष्ण **रम्यतरैर्गुणौघै** सृष्टिस्थितिलयात्मकै सत्वादि विशिष्टगुणैर्महदहकारादिनानारूपै र्विविधरसै **ताम्** आदिमायाम् अरीरमत्।

स श्रीकृष्णो दिवा वयस्यै सह क्रीडन्, रात्रिषु विलासै स्त्रीवर्गान् रमयन्, सृष्टिक्रम तु सुचारुरूपेण प्रचलितुम् अहोरात्रेषु जागरूक इव ताम् आदिमाया प्रचोदयत् इति श्रीकृष्णस्य दिनक्षेपणमासीदिति भाव ॥

तथा बलरामपक्षे-**अहोरात्रमनोरमात्मा** अहोरात्रेषु मनोरमो रमणशील आत्मा यस्य स.। बलरामो **दिवा** दिवषेषु **रुचिरैर्विहारै** रसोत्पादकै क्रीडाभि-

**वयस्यान्** सखीन् **अरीरमत्**। तथा दोषा रात्रिषु तु योषा स्त्रीवर्गान् **चटुल-विलासै** श्रृङ्गाररसोत्पादकैर्नानाविलासैररीरमत्। तथा च **सता** साधूना रम्य तरैर्गुणौघै सुरुचिरैर्गुणविशेषै अरीरमत्॥ उपजाति छन्द ॥ ६९॥

**निभृतरतयेऽप्याहूता नो यदोपसृता तदा**
**भवति मनसश्चित्र यत्सा स्वय शमनस्वसा**
**सपदि रभसाद्दूराकृष्टोद्गलज्जलवेणिका**
**ननु हलधर प्रत्यावेशाद्बभूव रसप्रदा ॥७०॥**

**अन्वय** ——यत् सा शमनस्वसा निभृतरतये आहूतापि यदा मनस आवेशात् उपसृता नो बभूव, तदा रभसात् दूराकृष्टा हलधर प्रति उद्गलज्जलवेणिका सपदि स्वय रसप्रदा भवति, ननु चित्रम् ॥

व्याख्या——**निभृतरतय इति** ॥ व्रजङ्गतस्य बलरामस्य यमुनाकर्षण वर्णयति ॥ **यत् सा शमनस्वसा** यमभगिनी यमुनानदी। 'यमुना शमनस्वसा' इत्यमर। **निभृतरतये आहूताऽपि** निभृता गुप्ता या रति क्रीडा तस्यै। रहसि क्रीडा कर्तुमाहूताऽपि **यदा मनस** स्वस्य **आवेशात्** आवेशबाहुल्याद्**उपसृता नो बभूव** न आगता—सा यमुना क्रीडा कर्तुं प्रार्थिताऽपि निजाऽऽवेशबाहुल्यात् स्वयमेव न आगता। **तदा रभसात्** बलावेगात्। **दूराकृष्टा** दूरात् आकृष्टा। बलरामस्य कोपात्लाङ्गलेन भृशम् आकृष्टा तदा **हलधर** राम **प्रति**। **उद्गलज्जलवेणिका** उद्गलत प्रस्रवत जलस्य वेणि स्रोतो यस्या सा। बहुव्रीह्यन्ते कप् प्रत्यय। उन्नतस्रोतसा प्रस्रवन्ती। **सपदि स्वय रसप्रदा भवति** जलरूपेण क्रीडा कर्तुं जलप्रदा बभूव, स्त्रीरूपेण श्रृङ्गाररसप्रदा बभूव। ननु चित्र नाश्चर्यमिदम्। यत कान्ताकनकमेदिनीना मर्दनमेव गुणवर्धनम्॥ हरिणी वृत्तम् ॥७०॥

**मत्वा मुरारि विबल व्रजङ्गते सङ्कर्षणे पौण्ड्रकवासुदेव ॥**
**तत्सत्यवेष किमवाप्तुमेव विरुध्य तस्मिन्प्रजिघाय दूतम् ॥७१॥**

**अन्वय** ——सङ्कर्षणे व्रजङ्गते, पौण्ड्रकवासुदेव मुरारि विबल-मत्वा, तत्सत्यवेष किम् अवाप्तुमेव विरुध्य तस्मिन् दूतम् प्रजिघाय।

व्याख्या——**मत्वेति** ॥ **सङ्कर्षणे व्रजङ्गते** बलरामे नन्दस्यपुर व्रज वृन्दावन गते सति। **पौण्ड्रकवासुदेव** वासुदेवनामा पौण्ड्राधिपति। **मुरारिं विबल मत्वा** श्रीकृष्ण एकाकिन निर्बलमसहाय ज्ञात्वा अथ च बलरामेण रहित ज्ञात्वा। **तत्सत्य-वेषम् अवाप्तुमेवकिम्** तस्य श्रीकृष्णस्य सत्यवेष तत्सत्यवेष, तत्सत्यस्वरूप लब्धु

**विरुध्य** तस्यविरोध कृत्वा एव । श्रीकृष्णस्य तत् भगवत्स्वरूपम् आत्मन प्राप्त्यर्थमेवकिम् । **तस्मिन् दूत प्रजिघाय** तत्सन्निधौ दूत प्रेषयामास । 'हि गतौवृद्धौ च' इत्यस्मात् लिटि 'हेरचडि' इत्यनेन कुत्वम्, प्रजिघाय ॥ उपजाति वृत्तम् ॥७१॥

**हठाद्दूराहूतोऽन्तक इव हि तन्नीवृतमथो**
**विभुर्गत्वा तूर्ण ससुतसुहृदा साकममतिम् ॥**
**करूषाधीश त क्षयमतिमद युक्तमनयत्**
**परस्व यच्छायामयमपि भवत्यात्मविपदे ॥७२॥**

**अन्वय** —अथो हठात् दूराहूत अन्तक इव विभु तन्नीवृत तूर्ण गत्वा तम् अमतिम् अतिमद करूषाधीश ससुतसुहृदासाक युक्त क्षयम् अनयत् । परस्व यत् छायामयमपि आत्मविपदे भवति ॥

**व्याख्या—हठादिति ॥ अथो** दूतसन्देशानन्तरम् । **हठात्** बलात् । **दूराहूतो** दूरात् दूरप्रदेशात् आहूतो निमन्त्रित, **अन्तक** कालो यमो मृत्युरिव । अपमृत्युरिवेति भाव । विनाकारणेनैव हठेनाहूतो कालान्तक इव **विभु** श्रीकृष्ण **तन्नीवृत तूर्ण गत्वा** । 'नीवृज्जनपदोदेश' इत्यमर । तस्य देश त्वरित गत्वा । **अमति** न मतिर्बुद्धिर्यस्य स तम् । मूर्खमित्यर्थ । **अतिमद** मदोन्मत्त **करूषाधीश** पौण्ड्राधिप वासुदेव **ससुतसुहृदा साक** मित्रपुत्रसहितम । **युक्त** योग्य **क्षय** नाशम् अनयत्, बन्धुबान्धवै सह तम् अहन्नित्यर्थ । **परस्व** परस्य स्व वस्तु, **यच्छायामय** प्रतिकृतिमयमपि, यद्यपि अन्यस्य वस्तु तुच्छमपि हृतम् । तत्परस्वम् **आत्मविपदे भवति,** आत्मनाशाय कारण भवति इत्यर्थ ॥ अर्थान्तर न्यासालङ्कार ॥ शिखरिणी वृत्तम् ॥७२॥

**दृष्ट्वा निष्फलजीवित कृतघटस्फोट गत सत्पथा–**
**दुच्छिन्नागममत्युदग्रहृदय पाप दृढाघातत ॥**
**सर्वत्राप्यविरक्तक द्विविदमप्यात्तद्विष वानर**
**सद्यो मुक्तिमजीजनद्धलधर कारुण्यपाथोनिधि ॥७३॥**

**अन्वय** —सत्पथात गतम्, उच्छिन्नागम, सर्वत्रापि अविरक्तक, द्विविदमपि आत्तद्विषम्, अत्युदग्रहृदय, कृतघटस्फोट, पाप, वानर, निष्फलजीवित दृष्ट्वा कारुण्यपाथोनिधि हलधर दृढाघातत सद्य मुक्तिम् अजीजनत् ॥

**व्याख्या—दृष्ट्वेति ॥ सत्पथात् गतम्** साधुमार्गात् च्युत पुरुष, कुमार्गरतम्। वानरपक्षे दुश्चरितम्। **उच्छिन्नागमम्** उच्छिन्न त्यक्त आगमो वेद विहितमार्गो येन स तम्। वानरपक्षे उच्छिन्न नष्ट कृतम् अगम वृक्ष, वनोपवन येन स तम्। **सर्वत्रा यविरक्तक,** न विरक्तकम् अविरक्तक, ससारविषयेषु आसक्तम्। वानरपक्षे कपिभावाद् दुश्चरितत्वाच्च यत्रतत्र सर्वत्रैव हस्तक्षेपकारिणम्। **द्विविदमपि आत्तद्विष** द्वौ आत्मपरमात्मानौ वेत्तीति द्विविद्। 'विद ज्ञाने' इत्यस्मात् क्विप्। तम् द्विविदम् अपि आत्तद्विषम्। आत्त प्राप्तो द्विट् शत्रुर्येन स तम्। द्वेषयुक्तम्। कामक्रोधादि विकारेण परिपूर्णम् इत्यथ। वानरपक्षे नाम्ना द्विविद, सर्वेषामपि शत्रु, बलरामस्यापि शत्रुत्व गतम्। **अत्युदग्रहृदयम्** उदग्र कठिनम् अतिकठिन क्रूर। **कृतघटस्फोटम्**। कृतो घटस्फोटो येन स तम, बन्धु बाधवै सह विच्छिन्नसम्बन्धम्। वानरपक्षे कृतो घटस्य बलरामस्य सुराघटस्य स्फोटो भङ्गो येन स तम्। **पाप** नृशश घातुकम्। 'नृशसोघातुक क्रूर पापो धूर्तस्तु वचक' इत्यमर। **वानर** विकल्पन नर मूर्खमित्यर्थ। पक्षे कपिम्। **निष्फल जीवित दृष्ट्वा** निष्फल निरर्थक जीवितम आयुयस्य स तम्। **कारुण्य-पाथोनिधि**र्दयासागर, यथा प्रभुरेतादृश पुरुषमपि मुक्ति नयति तद्वत् कृपालु ईश्वर त द्विविदवानरम। **दृढाघातत** तीक्ष्णप्रहारात्। **सद्यस्त**त्काल्मेव **मुक्तिम् अजीजनत्** मोक्ष जनयामास तम् अहन् इत्यर्थ ॥ शार्दूलविक्रीडितम् छन्द ॥७३॥ श्लिष्टपरम्परितरूपकम् ॥

**प्रवृत्तो लक्ष्मणा हर्त्तु साम्ब कुरुवरैर्बलात् ॥**
**विद्ध प्रमत्तो विद्यार्थी षड्भि कामादिभिर्यथा ॥७४॥**

**अन्वय**—लक्ष्मणा हर्त्तु प्रवृत्त साम्ब कुरुवरै बलात् विद्ध। यथा प्रमत्त विद्यार्थी षड्भि कामादिभि विद्ध ॥

**व्याख्या—प्रवृत्त इति ॥ लक्ष्मणा** दुर्योधनदुहितरम्। **हर्तु** हरण कर्तु **प्रवृत्त** उद्युक्त, **साम्बो** जाम्बवतीपुत्र, **कुरुवरै** कुरुश्रेष्ठैर्**बलात् विद्धो** बद्ध। कथम्? यथा **प्रमत्तो विद्यार्थी** ज्ञानेच्छु **षड्भि कामादिभि** कामक्रोधलोभ मोहमदमत्सरै**र्विद्धो** व्याप्तो बद्धो भवति तद्वत् ॥ प्रमत्तो ज्ञानार्थी कामक्रोधादिषड् रिपुभिर्विकारैर्व्याप्त सन् विद्यारूपम् एकमेव अर्थ यथा जहाति, तद्वदसौ कृष्णपुत्र साम्बो बलवद्भि कुरुवरै रिपुभिर्बद्धोभूत्वा निजाम् एकामेव लक्ष्मणारूपिणीं सम्पद हापितवान् ॥ अनुष्टुप् छन्द ॥७४॥

**निवार्य रामोऽथ निरोधवार्ताक्षुब्ध हरि हास्तिनमाजगाम ॥**
**दुर्योधनोऽभ्यस्तगदामृधोऽस्माद्दातु परीक्षा किमु कज्जजल्प ॥७५॥**

**अन्वय** —अथ राम निरोधवार्ताक्षुब्ध हरि निवार्य, हास्तिनम् आजगाम । अस्मात् अभ्यस्तगदामृध दुर्योधन परीक्षा दातु किमु कज्जजल्प ॥

**व्याख्या—निवार्येति ॥ अथ** साम्बनिरोधवार्ताप्रापणानन्तरम् । **रामो** हलायुध, **निरोधवार्ताक्षुब्धम्** । निरोधस्य वार्ता तया क्षुब्ध तम्, बन्दीकरण वृत्तान्तप्रक्षोभित श्रीकृष्ण **निवार्य** अपवार्य, त सान्तयित्वा, स्वय **हास्तिन** हस्तिना पुरम् **आजगाम** ययौ । **अस्मात्** हलायुधात् । **अभ्यस्तगदामृध** अभ्यस्त गदाया मृध येन स । शिक्षितगदायुद्धो **दुर्योधन परीक्षा दातु किमु कत् जजल्प** गदायुद्ध मया सम्यग्सम्पादित नवेति परीक्षणार्थमेव अर्थात् बलरामेणसह गदायुद्ध कर्तुमेव कि कुत्सितम् उक्तवान् ? तस्य रामस्य दुर्वचसा निर्भर्त्सनमकरोत् किम् ? ॥ उपजाति वृत्तम् ॥७५॥

> **रोषाद्दिदर्शयिषुणेव महीबिलस्था**
> **मूर्त्तिन्निजा प्रलयहेतुमहेतुरुष्टाम् ॥**
> **तत्प्रान्तगाहि सुमनस्सरिदूर्ध्वभागे**
> **रामेण कौरवपुर चकृषे हलेन** ॥७६॥

**अन्वय** —प्रलयहेतु महीबिलस्थाम् अहेतुरुष्टा निजा मूर्त्ति दिदर्शयिषुणा इव रामेण सुमनस्सरिदूर्ध्वभागे तत्प्रान्तगाहि कौरवपुर हलेन रोषात् चकृषे ॥

**व्याख्या—रोषादिति ॥ प्रलयहेतु** प्रलय कल्पान्तो हेतु कारण यस्या सा ताम् । सर्वसहारकारिणीम् । **महीबिलस्था** पातालस्थिताम् । मह्या बिल तस्मिन् तिष्ठति या सा ताम् । 'सुपिस्थ' इत्यनेन 'क' प्रत्यय । **अहेतु रुष्टाम्** अहेतु अकारण, स्वेच्छाचार. अर्थात् प्रकृति स्वभावो वा, तेन या रुष्टा कुपिता ताम् । विनाकारणेनैव प्रकृतिस्वभावेन शीघ्रकुपिताम् । **निजा मूर्त्तिम्** शेषावतारत्वात् भूबिलस्थितनिज नागरूपिणीं प्रकृतिम् । **दिदर्शयिषुणा** 'दृशिर् प्रेक्षणे' इति णिजन्तान्तसन्नन्तात् उ प्रत्यय । द्रष्टु प्रेरयति दर्शयति । दर्शयितु-मिच्छति दिदर्शयिषति । दिदर्शयिषतीति दिदर्शयिषु तेन । आत्मप्रभावदर्शनकामेन इव **रामेण** हलधरेण । **सुमनस्सरिदूर्ध्वभागे** सुमनसा देवाना सरित्, गङ्गानदी यमुना वा, तस्या ऊर्ध्वभागे, गङ्गाया उन्नतप्रदेशे । **तत्प्रान्तगाहि** । 'गाहू विलोडने' प्रान्त गाहते इति प्रान्तगाही इति णिनि प्रत्यय । क्लीबे । तस्या गङ्गाया प्रान्ते गाहते इति तत्प्रान्तगाहि । गङ्गाया प्रदेशस्थितम् । **कौरवपुर** हस्तिनापुर **रोषात् हलेन चकृषे** अकार्षीत्, आकृष्टम् ॥

बलराम शेषावतारत्वात् बिले स्थिता विनाकारणेनैव शीघ्रकुपिता स्वेच्छाचारेण प्रलयकारिणीं स्वस्य सर्पप्रकृति दर्शयितुमिच्छन्निव गङ्गाया यमुनाया वा उन्नत प्रदेशस्थित हस्तिनापुर स्वलाङ्गलेन चकर्ष इत्यर्थ ॥ वसन्ततिलका छन्द ॥७६॥

**साम्मुख्यात्सुरसरित किमात्तचेतो–**
**नैर्मल्या किल कुरवो रवोज्झितास्या ॥**
**सत्पूजा सवरवधूमयत्ननम्रा**
**सम्राज प्रति ददते स्म भोगभाजम् ॥७७॥**

**अन्वय** —सुरसरित साम्मुख्यात् किम् आत्तचेतोनैर्मल्या किल, रवोज्झितास्या कुरव अयत्ननम्रा सम्राज प्रति भोगभाज सत्पूजा सवरवधू ददते स्म ॥

व्याख्या –**साम्मुख्यादिति** ॥ **सुरसरित** गङ्गाया यमुनाया वा **साम्मुख्यात्** पुरो वर्तमानत्वात् । **किम् आत्तचेतोनैर्मल्या किल** आत्त प्राप्त चेतसो नैर्मल्य यै ते । किं निर्मलान्त करणा । **किल** निश्चयेन शुद्धान्त करणा । गङ्गाजल सम्मुखे दृष्ट्वा सद्बुद्धि प्राप्ता इत्यर्थ, तस्मात् । **रवोज्झितास्या** रवेण शब्देन उज्झितानि त्यक्तानि आस्यानि मुखानि येषा ते । विनीतवत् अकृतशब्दा, नतमुखा इत्यर्थ । **कुरव** कुरुवशीया **अयत्ननम्रा** विना परिश्रमेण नम्रा । अर्थात् युद्धमकृत्वैव नम्रता नीता । **सम्राज** राजाधिराज बलराम प्रति । **भोगभाज** भोगान् भजते इति भोगभाक् तम् । ण्वि प्रत्यय । महार्हवस्त्रै रत्नैर्बलिभि सयुता **सत्पूजा** सत्कारम् । **सवरवधू** साम्बलक्ष्मणासयुता अथवा श्रेष्ठवधूसयुता **ददते स्म** ददु, ॥ प्रहर्षिणीद वृत्तम् ॥७७॥

**प्राग्वच्चकार करुण कुरुराजधानी**
**वक्रोर्ध्वसस्थितिवशेन सलक्ष्मणा ताम् ॥**
**स्वीय पुनश्च पुटभेदनमुद्धवाद्य**
**भूयोपि मातृवियुत तनय च साम्बम् ॥७८॥**

**अन्वय** —स करुण वक्रोध्वसस्थितिवशेन सलक्ष्मणा ता कुरु-राजधानी प्राग्वत् चकार, पुनश्च स्वीय पुटभेदनम् उद्धवाद्य चकार, भूयोपि, मातृवियुत तनय साम्ब चकार ॥

व्याख्या—**प्राग्वदिति** ॥ **स करुण** कृपालुर्हलधर । तेषा कौरवाणा विनीतभाव दृष्ट्वा इति भावात् करुण । **वक्रोर्ध्वसस्थितिवशेन सलक्ष्मणा** वक्रा च ऊर्ध्वा च या सस्थिती रचना तस्या वशेन उच्चावचेन सल्क्ष्मणा सचिह्नाम् । लाङ्गलेनाकृष्टत्वात् या कुरूराजधानी वक्रता तथा उन्नतदशा च प्राप्ता ताम् । **प्राग्वत् चकार** पूर्ववत् यथातथ लक्षणै सुशोभिता चकार । **पुनश्च स्वीय पुटभेदन** पुनर्निजनगरी द्वारकामपि तु । 'पू स्त्रीपुरीनगर्यौं वा पत्तन पुटभेदनम्' इत्यमर । **उद्धवाद्य चकार** उद्ध मनोरम वाद्य मुरजादिक वाद्य यस्मिन् तत् उद्धवाद्य तत् । मञ्जुवाद्यघोषैर्निनादित स्वपुर चकार । "प्रकाण्डमुद्धतल्लजौ । प्रशस्त वाचकान्यूमूनि' इत्यमर । **भूयोपि** पुनरपि **मातृवियुत** मात्रा वियुत वियुक्त **तनय** पुत्र नाम्ना साम्ब तमपि **साम्ब चकार** अम्बया सहित साम्ब मातु सयोगेन साम्ब कृतवान् ॥ वसन्ततिलकम् वृत्तम् ॥७८॥

**गार्हस्थ्य षोडशस्त्रीदशशतकभव द्रष्टुकामो मुरारे-**
**रारभ्यैकान्निशान्ताप्रतिरुचिरनिशान्तात्भृशान्त प्रविष्ट ॥**
**व्याप्ति सव्यापकस्य प्रकटमपि दृशा तस्य दृष्ट्वा सुर्षि**
**स्वान्तस्यात्युत्कलस्य प्रतिपदमकृशा तत्र शान्ति वितेने ॥७९॥**

**अन्वय**—मुरारे षोडशस्त्रीदशशतकभव गार्हस्थ्य द्रष्टुकाम सुर्षि एकात् निशान्ताप्रतिरुचिरनिशान्तात् आरभ्य भृशान्त प्रविष्ट । तत्र तस्य सव्यापकस्य प्रकटम् अपि व्याप्ति दृशा दृष्ट्वा, अत्युत्कलस्य स्वान्तस्य प्रतिपदम् अकृशा शान्ति वितेने ॥

व्याख्या—**गार्हस्थ्यमिति** ॥ **मुरारे** श्रीकृष्णस्य । **षोडशस्त्रीदशशतक भव** षोडशाधिकसहस्रस्त्रीजुष्टम् । **गार्हस्थ्य** गृहे तिष्ठतीति गृहस्थ । 'सुपिस्थ' इत्यनेन क प्रत्यय । गृहस्थस्य कर्म गार्हस्थ्यम् । 'गुणवचनब्राह्मणादिभ्य कर्मणि च' इत्यनेन 'ष्यञ्'। प्रभो पुत्रकलत्रै परिवेष्टित गृहस्थजीवनम् । **द्रष्टुकामो** द्रष्टुम् ईक्षितु कामोऽभिलाषो यस्य स द्रष्टुकाम, ईक्षितुमिच्छु । **सुर्षि** नारदमुनि । **एकात् निशान्ताप्रतिरुचिरनिशान्तात्** नितरा शान्त निशान्तम् । निशान्त यत् अप्रतिरुचिरम् अनुपमरमणीय निशान्त गृह तस्मात् । "निशान्त-पस्त्यसदन भवनागारमन्दिरम्" इत्यमर । एतादृक् एकभवनादारभ्य गृहदर्शना-रम्भ कृतवान् नारदऋषि । **भृशान्त प्रविष्ट** सुदूरम् अन्तस्थकक्षम् अन्त.पुरपर्यन्त

गत इत्यर्थ । **तत्र** प्रतिगृहाभ्यन्तरे । **तस्य** श्रीकृष्णस्य । **सव्यापकस्य** व्यापक-रूपेण प्रपञ्च विस्तारितस्य । येन अनाकलनीयरूपेणाखिल विश्व व्याप्त तस्य नानारूपेण प्रकटीकृतसोत्कण्टगृहस्थजीवस्य इत्यर्थ । **प्रकट** यथास्यात् तथा स्फुटम् । **व्याप्तिं** व्यापारम् । **दृशा** स्वचक्षुषा **दृष्ट्वा** । **अत्युत्कलस्य स्वान्तस्य** स नारदऋषि निजस्योत्कण्ठितमनस । **प्रतिपद** पदेपदे । **अक्लशा शांति वितेने** महती शाति प्राप ।। स्रग्धरा छद ।।७९।।

इति श्रीमता वत्सगोत्रान्तर्गतेन काळेकुलोत्पन्नेन श्रीढुण्ढिराजरामचन्द्रशास्त्रिणा कविवरेण विरचितस्य भागवतव्यञ्जनस्य षष्ठतमोल्लास । तस्यैव कविवरस्य पौत्राभ्या गोविन्दकाशीनाथशर्मभ्या कृताया व्यञ्जनसुबोधिनीव्याख्याया षष्ठतमोल्लास ।।

---

## महाकविढुण्ढिराजशास्त्रिविरचितम्

# श्रीमद्भागवतव्यञ्जनम्



## अथ सप्तमोल्लासः ।

**अथैकदा धान्यकणानवेक्षितु रज स्विवाकारयतो रवि ततम ।।**
**पदायुधान्यागभिदो हरे स्त्रियोऽलघुस्मृते प्राक्कुपिता बताशपन् ।।१।।**

**अन्वय** —अथ एकदा रज सु धान्यकणान अवेक्षितु रवि तत प्राक् आकारयत इव पदायुधान्, अलघुस्मृते यागभिद हरे कुपिता स्त्रिय अशपन् बत ।।

**व्याख्या—अथेति** ।। **अथ** श्रीकृष्णस्यदिनचर्यामाह । **एकदा रज सु** धूलिचयेषु **धान्यकणानवेक्षितु** सुचारुरूपेण ईक्षितुम् । **रविं** सूर्यम् । **तत प्राक्** । ततम् उदित 'तनु विस्तारे' इत्यस्मात् क्त प्रत्यय । तनोतीति तत तम् । उदयात् प्रागेव आसमन्तात् प्रक्षिप्तप्रकाश अर्थात् प्रकाश प्रक्षेपणार्थ सूर्यम् । **आकारयत इव** आह्वान कृतवत इव । 'हूतिराकारणाह्वाने' इत्यमर । **पदायुधान्** पदौ एव आयुधौ येषा ते पदायुधा तान् । चरणायुधान् कुक्कुटान् । "कुक्कुटश्चरणायुध" इत्यमर । प्रभातागम ससूचितान् इत्यर्थ । **अलघुस्मृतेर्यागभिदो हरे** न लघु अल्पा स्मृति स्मरण यस्य स । अलघुस्मृति तस्य । यागान् भिनत्ति पृथग्विधानेनाचरतीति यागभिद् तस्य । क्विप् प्रत्यय । अथ च यागान् भिनत्ति ध्वसयतीति । बलियागध्वसनमिवेत्यर्थ । रव्युदये प्रभाते नित्यनैमित्तिकसन्ध्या-तर्पणादियागान् कृतवत तद्धेतो तीव्रस्मरणेन शीघ्र शय्यात्याग करिष्यतो **हरे** श्रीकृष्णस्य **कुपिता स्त्रिय अशपन्** । बत खेदे ।। उत्प्रेक्षालङ्कार । वशस्थ वृत्तम् ।।१।।

**पदाश्रिताना भवबन्धमोचक करश्रितस्त्रीभुजबन्धमोचनम् ।।**
**चकार कृच्छ्रेण स भक्तवत्सल कृताह्निको राजसभा ततोऽभ्यगात् ।।२।।**

**अन्वय**—स भक्तवत्सल पदाश्रिताना भवबन्धमोचक करश्रितस्त्रीभुजबन्धमोचनम् कृच्छ्रेण चकार। तत कृताह्निक राजसभाम् अभ्यगात ॥

**व्याख्या—पदाश्रितानामिति॥ स भक्तवत्सल** । ला आदाने, वत्स शिशु लाति, गृह्णातीति वत्सल । 'आतोनुपसर्गेक' इत्यनेन क प्रत्यय अथवा 'वत्सासाम्या कामबले' इत्यनेन 'ल्च्' । भक्तस्य वत्सल भक्तवत्सल । भक्तेषु मातृवत् दयालु स श्रीकृष्ण । **पदाश्रिताना** पद आश्रिता तेषाम्, श्रितचरणानाम् **भवबन्धमोचक** भवबन्धात् ससारपाशात् मोचयति यो मुक्त करोति स भवबन्धमोचक । जन्ममरणनाशक । **करश्रितस्त्रीभुजबन्धमोचनम्** करश्रित करश्रित, स्त्रीभुजयोर्बन्ध स्त्रीभुजबन्ध । करश्रित स्त्रीभुजबन्ध करश्रितस्त्रीभुजबन्ध तस्य मोचन विसर्जन तत् । तत् । अथवा करश्रिता या स्त्रिय तासा भुजबन्ध तस्य मोचन तत् । 'द्वितीयाश्रितातीत पतितगतात्यस्त प्राप्तापन्नै' इत्यनेन द्वितीयान्तेन समस्यते। **कृच्छ्रेण चकार** बहुकष्टेनाकरोत् । पदविनतभक्तान् मातृवात्सल्येन भवपाशान्मोक्तु समर्थोऽसौ श्रीहरिरत्र शय्यासने कराश्रित स्त्रीभुजपाश त्यक्तु कष्टेन समर्थोऽभूदिति भाव । तत शय्या त्यागादनन्तरम्। **कृताह्निक** अह्नि भवम् आह्निकम्। 'कालाट्ठञ्' इत्यनेन 'ठञ्'। कृतम् आह्निक नित्य सन्ध्यादिक येन स । आह्निक परिसमाप्त कृत्वा। **राजसभाम्** अभ्यगात् राज्यशासनाय समितिं जगाम ॥ वशस्थ वृत्तम् ॥२॥

**पाणी माणिक्यभूषानिचयविलसितौ धर्मकृत्ये यदीयौ**
**नाणीयासौ न काणीकृतदृगपि मुख प्राणिवर्गस्य कार्ये ॥**
**वाणी माधुर्यशाणी भवति स भगवान्पातु लोकान्त्सदेति**
**स्तुत्योवासोपभद्रासनमहितजिदानन्दितो बन्दितोकै ॥३॥**

**अन्वय**—'धर्मकृत्ये माणिक्यभूषानिचयविलसितौ यदीयौ पाणी अणीयासौ न भवत । प्राणिवर्गस्य कार्ये (यदीय) मुख काणीकृतदृगपि न भवति। प्राणिवर्गस्य कार्ये (यदीया) वाणी माधुर्यशाणी भवति। स भगवान् सदा लोकान् पातु' इति वन्दितोकै स्तुत्या आनन्दित अहितजित् उपभद्रासनम् उवास ॥

**व्याख्या—पाणीति॥** स राजसभाया कथ वर्तते तदाह—**धर्मकृत्ये** दानकर्मणि। **माणिक्यभूषानिचयविलसितौ** माणिक्यभूषाणा निचय समूह तेन विलसितौ,

रत्न [illegible] शोभितौ । अथ च दानार्थं गृहीत रत्ननिचयेन शोभितौ **यदीयौ पाणी** हस्तौ **अणीयासौ** अल्पतरौ **न भवत** । यो दानकर्मणि अकृपण , वित्तशाठ्य न करोतीत्यर्थ । किन्तु भूयसी दक्षिणा ददातीत्यर्थ **प्राणिवर्गस्य कार्ये** जनहितकार्ये **यदीय मुख काणीकृतदृगपिन** । काणीकृतमिति च्वि । काणीकृता दृक् काणीकृतदृक्, निमीलितैकाक्ष न भवति । जनहितकार्ये स सदा तत्पर इत्यर्थ । पुनश्च प्राणिवर्गस्य कार्ये **वाणी माधुर्यशाणी भवति,** शाणो निकष । शाणीभवति इति 'अभूततद्भावे कृभ्वस्तियोगे च्वि '। यथा सुवर्णस्य महत्व हीनत्व निकषोपरि परीक्षित भवेत् तद्वत् अस्य वाण्यपि माधुर्यनिकषपरीक्षितेव अतिमधुरा भवति । अस्य भाषणमतिमधुरमित्यर्थ । एतादृश **स भगवान् सदा लोकान् पातु** रक्षतु **इति** इत्य प्रकारेण **बन्दितोकै**श्चारणबालैर्बन्दिगणैरित्यर्थ । **स्तुत्या** स्तवनेन **आनन्दित** प्रशसित । **अहितजित्** अहितान् शत्रून् जयतीति अहित जित् । इति क्विप् । असौ शत्रुसूदन **उपभद्रासनम् उवास** भद्रासनस्य समीपम् उपभद्रासनम् । अव्ययीभावसमास । सिहासनसमीपे अध्यतिष्ठत् ॥ शार्दूलविक्रीडित वृत्तम् ॥३॥

**मुनि समीकामृततृष्णगेकत स्ततोऽन्यतोमागधरुद्धभूभुजाम् ॥**
**जगाद दूत श्रवसी उभे उभौविभज्य तौ स्वीकुरुत स्म सत्पते ॥४॥**

**अन्वय** —समीकामृततृष्णक् मुनि एकत जगाद । मागधरुद्ध-भूभुजा दूत अन्यत । तत सत्पते उभे श्रवसी तौ उभौ विभज्य स्वीकुरुत स्म ॥

**व्याख्या—मुनिरिति** ॥ मुनिदूतयोरागमन तथातयोर्भणित स कथ गृह्णाति तद्वर्णयति । **समीकामृततृष्णक् मुनिरेकतो जगाद** समीक युद्ध तस्याऽमृत तस्य तृष्णक् । समीक राज्ञोधर्मस्य राजसूययज्ञागभूत यद्युद्ध तस्य परिसमाप्तेर्यदमृत यज्ञशेष पुरोडाश तस्य तृष्णक् लोलुप । पक्षे समीकमेवामृतम् अभिलषित तस्य तृष्णक् अर्थात् कलह प्रियो नारदमुनि । ञितृषा पिपासायाम् इतिधातो 'स्वपितृषो-र्नजिङ्' इत्यनेन 'नजिङ्' । 'अमृत विघसो यज्ञशेषभोजनशेषयो ' इत्यमर । **मुनिर्नारदमुनिरेकत ,** पञ्चम्यास्तसि । एकपक्षादुवाच । तथा **मागधरुद्धभूभुजा दूतोऽन्यत ,** जरासन्धेनकारागारेबद्धाना राज्ञा दूतोऽपरपक्षादुवाच । **तत** तादृशौ तौ एकसमयेनैवभाषमाणौ दृष्ट्वा । **सत्पते** सता पति तस्य । श्रीकृष्णस्य **उभे श्रवसी** द्वौकर्णौ । **तौ उभौ** मुनिदूतौ **विभज्य** विभाग कृत्वा **स्वीकुरुत स्म** । एकसमया-वच्छेदेन तयोर्भणित पृथक्त्वेन द्वौ कर्णौ शुश्रुवतु ॥ वशस्थवृत्तम् ॥४॥

**उभाभ्या शुभाभ्यागमाद्धर्मसूनो पृथाया वृथायासमात्मप्रसूते ।।**
**निराकर्तुमुद्दिष्टयज्ञस्य राज्ञा जरासन्धबन्धस्य चोक्ता प्रवृत्ति ।।५।।**

**अन्वय**—उभाभ्या प्रवृत्ति उक्ता (कथ ? तयो एकेन) पृथाया आत्मप्रसूते वृथायास शुभाभ्यागमात् निराकर्तु धर्मसूनो उद्दिष्टयज्ञस्य प्रवृत्ति उक्ता। (अपरेण) राज्ञो जरासन्धबन्धस्य च।

**व्याख्या—उभाभ्यामिति ॥ उभाभ्याम् प्रवृत्ति**र्वार्ता **उक्ता** कथिता। मुनि दूताभ्या निजोनिजो वृत्तान्त कथित। 'वार्ताप्रवृत्तिवृत्तान्त' इत्यमर। कथम् ? **तयोरेकेन** नारदमुनिना **पृथाया** युधिष्ठिरजनन्या कुन्त्या **आत्मप्रसूते**निजप्रसवस्य। **वृथा आयास** स्वप्रसवेवेदनाया वैयर्थ्यम्। **शुभाभ्यागमान्निराकर्तुम्** इति हेतु पञ्चमी। अस्मात् मङ्गलयज्ञकार्यस्य सम्पादनाद्दूरीकर्तु। **धर्मसूनो रुद्दिष्टयज्ञस्य** युधिष्ठिरस्य क्रियमाणयज्ञस्य कृतसङ्कल्पस्य **प्रवृत्ति रुक्ता** वार्ता कथिता। पुत्रजनना मात्रा या वेदना सोढा तासा वैयर्थ्य शुभयज्ञसम्पादनेन दूरीकर्तु युधिष्ठिरस्य कृतसङ्कल्पयज्ञस्य वार्त्ता कथिता इत्यर्थ। अपरेण दूतेन **राज्ञा** नृपाणा **जरासन्धबन्धस्य च** जरासन्धेन ये अगणिता राजान कारागारे सरुद्धास्तेषा वार्त्ता कथिता भुजङ्गप्रयात वृत्तम ।।५।।

**उभयत्रापि गन्तव्य मन्तव्य वचन द्वयो ।।**
**कार्य्या क्व प्रथम यात्रा धात्रा धातु रचिन्त्यद ।।६।।**

**अन्वय** – उभयत्रापि गन्तव्य, द्वयोर्वचन मन्तव्यम्, प्रथम यात्रा क्व कार्या। धातु धात्रा अद अचिन्ति ।।

**व्याख्या—उभयत्रापीति ॥ उभयत्रापि गन्तव्यम्** उभयत्र द्वयो स्थानयोर्गमन आवश्यकम्। उभयत्र इति 'सप्तम्यास्त्रल्, इति 'त्रल्'। पाण्डवान् प्रति यज्ञार्थं तथा जरासन्धवधार्थं द्वयो स्थानयोर्गमनम् आवश्यकमित्यर्थ। **द्वयो** र्मुनिदूतयो**र्वचन मन्तव्य** कथनमपि आवश्यकत्वेन निर्धारणीयम्। **प्रथम यात्रा क्व कार्या** किन्तु तद्धेतवे प्रथमगमन कुत्र कर्तव्यमिति कठिन• प्रश्न उपस्थित। **धातुर्धात्रा अद अचिन्ति** धातुर्ब्रह्मणो धात्रा पित्रा श्रीकृष्णेन अद इदप्राप्तविषयम् अचिन्ति चिन्तितम्। चिति स्मृत्याम्। 'चिण्भावकर्मणो' इति कर्मणि लुङ् चिण्। 'कार्या' इत्यत्र 'अचोरहाभ्या द्वे' इत्यनेन यरो द्वे वा स्त ।। अनुष्टुप्छन्द ।।६।।

**स्थितयोर्मुनिराजदूतयोर्बत योगेश्वर वन्दिताङ्घ्रिणा**
**विदुषाऽविदुषेव मन्त्रणे मतिमानुद्धव एव सस्तुत ।।७।।**

**अन्वय** —मुनिराजदूतयो स्थितयो बत योगेश्वरवन्दिताङ्घ्रिणा विदुषा अविदुषा इव मन्त्रणे मतिमान् उद्धव एव सस्तुत ।।

**व्याख्या—स्थितयोरिति ॥ मुनिराजदूतयो स्थितयो सतो** । 'यस्य च भावनेन भावलक्षणम्' इत्यनेन मतिसप्तमी। मगधेषु बन्दिना राज्ञा दूते तथा, मुनौ नारदे अपि सम्मुखे भूते सति ! **बत** पश्येदमाश्चर्य यत् । **योगेश्वरवन्दिताङ्घ्रिणा** सर्वेषा योगानाम् ईश्वरा ज्ञातारो योगेश्वरा तै, कपिलनारदादिभि वन्दितौ अङ्घ्री पादौ यस्य स तेन । 'योग सन्नहनोपायध्यानसङ्गति युक्तिषु' इत्यमर । योगेश्वराणामपि ईश्वरेण श्रीकृष्णेन । पुनर्**विदुषा** स्वय विदुषा पण्डितेन अपि । **अविदुषा इव** अज्ञजनेनेव अपण्डितेनेव । **अन्त्रणे** मन्त्रण सवाद कर्तुम् । **मतिमान्** धीमान् **उद्धव एव सस्तुत** प्रार्थित ।। वियोगिनीवृत्तम् ।।७।।

**सर्वेषु सरुद्धवचस्सु सोद्यमे**
**रामे जरासन्धवधाय चोद्धव ।।**
**मौन मुमोचाथ मुखान्मुकुन्ददृङ-**
**मुद्रासमुद्द्रावणदक्षवाक्पटु ।।८।।**

**अन्वय** —सर्वेषु सरुद्धवच सु, जरासन्धवधाय रामे सोद्यमे च । अथ मुकुन्ददृङमुद्रासमुद्द्रावणदक्षवाक्पटु उद्धव मुखात् मौन मुमौच ।।

**व्याख्या—सर्वेष्विति ॥ सर्वेषु** उपस्थितसभाजनेषु । **सरुद्धवचस्सु** सरुद्ध सयमित वचो भाषण यै त, तेषु —सर्वसभाजनेषु कृतमौनेषु सत्सु । **जरासन्ध वधाय रामे सोद्यमे**— जरास धस्य वध कर्तु बलरामे सर्वप्रकारेण सुसज्जे उद्युक्तीभूत सति च । 'यस्य च भावेन भाव लक्षणम्' इत्यनेन सति सप्तमी । **अथ** तदनन्तरम् । **मुकुन्ददृङ्मुद्रासमुद्द्रावणदक्षवाक्पटु** दृग दृष्टिर्मुद्रा लक्षण चिह्न दृङ्मुद्रा मुकुन्दस्य दृङ्मुद्रा समुद्द्रावणे अनुगमने, दृष्ट्यर्थप्रतिपादने, दक्ष श्चतुर स एव वाक्पटु । 'द्रु गतौ' णिजन्तात् द्रावयति तस्मात् 'युच्' सम्+उत्+द्रावण । श्रीकृष्णस्य दृष्टिसङ्केतान् कौशल्येनाऽनुगम्यमान, जानान, वाक्पटुर्भाषणचतुर **उद्धवो मुखान्मौन मुमोच** मुखरो बभूव । स्वविचारान् प्रकटयामास इत्यर्थ ।। वशस्थ वृत्तम् ।।८।।

**प्राज्य धन तत्क्रतुकारिणा ध्रुव भूजानिजातैर्विजयोप्यपेक्षित ।।**
**तत्तत्र पार्थैर्निहते रिपौ निज दास्यन्त्यथैतद्वनिता गृहे गृहे ।।९।।**

**अन्वय**—तत् प्राज्य धन क्रतुकरिणा ध्रुवम् ( अपेक्षितम् ) । अपि भूजानिजाते विजय अपेक्षित । पार्थै रिपौ निहृते, अथ एतद्वनिता तत् निज गृहे गृहे दास्यन्ति ॥

**व्याख्या—प्राज्यमिति** ॥ **तत् प्राज्य** विपुल **धनम्** 'प्रभूत प्रचुर प्राज्य मदभ्र बहुल बहु' इत्यमर । **क्रतुकारिणा** क्रतु कर्तु शील यस्य स क्रतुकारी तेन, यज्ञकारिणा **ध्रुव** निश्चयेन **अपेक्षित** प्राप्तव्यम् । **अपि** तथा च । **भूजानिजाते** भूर्जाया येषा ते भूजानय तेषा जातिर्वर्ग तस्य । 'जायाया निङ' इत्यनेन 'निङ् प्रत्यय' राज्ञा **विजयोऽपेक्षित** वाञ्छित । **पार्थै** पृथया अपत्यानि पार्था । अण् प्रत्यय । तै, पृथापुत्रै पाण्डवै **रिपौनिहृते** शत्रौ क्षय नीते सति । **अथ एतद्वनिता** एतेषा राज्ञा वनिता स्त्रिय एतद्वनिता । अथ शत्रुवधानन्तर तेषा गृहिण्यो **निज** स्वकीय **तत्** धन **गृहेगृहे** प्रतिगृह **दास्यन्ति** समर्पयिष्यन्ति ॥ वशस्थवृत्तम् ॥९॥

**इत्थ परप्रौढिनिदर्शनेन सञ्जातमन्यु स्फुरिताधरोष्ठ ॥**
**शाब्दस्य शास्त्रस्य निदानमूर्त्ति सगद्गदा वाचमुवाच राम ॥१०॥**

**अन्वय**—सुस्पष्टम् ।

**व्याख्या—इत्थमिति** ॥ **इत्थम्** एवमुक्तमुद्धववचन श्रुत्वा । **परप्रौढि निदर्शनेन** परस्य प्रौढिर्महत्व परप्रौढि तस्या निदर्शन तेन । पाण्डवाना महत्व प्रकटनेन कारणेन । **सञ्जातमन्यु** सञ्जातो मन्यु क्रोधो यस्य स । उत्पन्नामर्ष । **स्फुरिताधरोष्ठ** स्फुरित कम्पमानोऽधरोष्ठो यस्य स । कम्पमानाधरोष्ठ । **शाब्दस्य शास्त्रस्य निदानमूर्त्ति** शब्दस्य इद शाब्द तस्य शास्त्रस्य निदेश ग्रन्थस्य निदानमूर्त्ति निदानम् आदिकारणम् तस्यमूर्त्ति, साक्षात् शब्दशास्त्रप्रवर्तक, शेषावतारत्वात् । रामो हलधर **सगद्गदा** गद्गद्शब्दयुक्ता **वाच** वचन **उवाच** कथयामास ॥ वशस्थवृत्तम् ॥१०॥

**शिष्य एव न हि शोभते गुरोर्नास्य यादवकुलोचित वच ॥**
**कुर्वतस्त्रिषवण सुरार्चन युज्यते हि परमार्थवीक्षणम् ॥११॥**

**अन्वय**—गुरो शिष्य एव नहि शोभते । अस्य वच यादव-कुलोचित न । त्रिषवण सुरार्चन कुर्वत परमार्थवीक्षण हि युज्यते ॥

**व्याख्या—शिष्य इति** ॥ **गुरोश्शिष्य एव** असौ बृहस्पतिशिष्य उद्धव एव भणति **परञ्च नहि शोभते** परञ्च तत्सदृशोऽसौ न भाति । **अस्य वचो**

**यादवकुलोचित न,** खलु अस्य भाषणमपि यादवकुलानुरूप नास्ति । **त्रिषवन सुरार्चन कुर्वत** 'पुञ अभिषवे' सुनोतीति सवनम् 'युच्' प्रत्यय तस्य अनादेश । त्रयाणा सवनाना समाहार त्रिषवणम् । त्रिकाल देवस्नपन पूजन कर्म कर्तु **परमार्थवीक्षण हि युज्यते** परमोऽतिश्रेष्ठोयोर्थ परमार्थ । चतुर्णा धर्मार्थकाममोक्षाणा य श्रेष्ठार्थ स एव मोक्ष तस्य वीक्षणम् चिन्तन **योग्यम्।** त्रिकाल स्नानपूजनादिकर्मकर्तुर्ब्रह्मविचारणैव युज्यते नतु सङ्ग्रामभाषणमिति भाव रथोद्धता वृत्तम् ।।११।।

**सभिया युधि जीवलोभिना गुरुभक्तिर्बहुधा विशिष्यते**
**तदनेन कृत रणागणे सदनस्थैव मताऽऽहिताग्निना ।।१२।।**

**अन्वय** —बहुधा युधि सभिया जीवलोभिना गुरुभक्ति विशिष्यते । तत् अनेन रणाङ्गणे कृतम् । आहिताग्निना सदनस्था एव मता ।।

**व्याख्या—सभियेति ॥ बहुधा** प्रायश । **युधि** रणाङ्गणे युद्धकतुम्, **सभिया जीवलोभिना गुरुभक्तिर्विशिष्यते** प्राणलोलुपेन भीरुणा **गुरुभक्तिरेव** गुर्वीभक्तिरेवविशेषतया प्रशस्यते । भीता प्राणरक्षणेच्छुका पुरुषा गुरुभति प्रशसति न तु योद्धारो वीरा इत्यर्थ । **तत्** तस्मात् **अनेन** उद्धवेन । **रण ङ्गणे कृतम्** अल पर्याप्तमित्यर्थ । कृतम् अव्ययम् । अनेन उद्धवेन युद्धसम्बन्धि भाषणमपि न कार्यम् इत्यर्थ । **आहिताग्निना सदनस्था एव मता**-स्वीकृताग्निहोत्रकार्येण अनेन उद्धवेन गृह एव स्थित्वा सेवनीयोऽग्नि, युद्धकथा अस्य मुखे नैव शोभते ।। वियोगिनीवृत्तम् ।।१२।।

**कि करिष्यति स चास्मदग्रतो जीवतीह मुसल हल च न ।।**
**अद्भुत हि जरयापि सन्धितो यश्चिराय तरुणाञ्जिगीषति ।।१३।।**

**अन्वय** —स च अस्मदग्रत कि करिष्यति । इह न हल च मुसल जीवति हि अद्भुतम् ! य जरया सन्धित चिराय तरुणान् जिगीषति ।।

**व्याख्या—किमिति ॥ स च** स जरासन्धोऽपि **अस्मदग्रत** अस्माकम् अग्रे, सप्तम्यर्थेतसिल् । अस्मदग्रत न सम्मुखे **किं करिष्यति,** नकिमपि कर्तु समर्थ इत्यर्थ. । **इह नो हल मुसल च जीवति हि** यतोऽस्माक हल मुसल चोभे शस्त्रे अक्षुण्णे वर्तेते हि । **अद्भुतम्** इदमेवाश्चर्यम् ! **यो जरया सन्धित**

यो जरास ध स्वयमेव जरया नाम्न्या राक्षस्या सन्दानित । अथवा यो जराग्रस्तो वृद्धावस्था प्राप्त । **चिराय** बहुकालपर्यन्त **तरुणान् जिगीषति** यून पुरुषान् जेतुमिच्छति । 'जि जय' इच्छायाम् 'सन्' जेतुमिच्छति जिगीषति ॥ रथोद्धता छन्द ॥१३॥

**स्वपराक्रमवैभवान्वित बलभद्रस्य वच स च क्षणम् ॥**
**हृदये दधर्दिताक्षरा कुपितात्मा गिरमाददे पुन ॥१४॥**

**अन्वय**——स बलभद्रस्य स्वपराक्रमवैभवान्वित वच क्षण हृदय दधत, कुपितात्मा अर्दिताक्षरा गिर पुनश्च आददे ॥

**व्याख्या—स्वपराक्रम इति** ॥ **स** उद्धव **बलभद्रस्य** रामस्य, **स्वपराक्रम वैभवान्वित** स्वपराक्रमस्य निजशौर्यस्य वैभवेन महत्त्वेन अन्वित अनुगतम् । निज शौर्यस्य प्रभावदर्शक **वच क्षण हृदये दधत्** क्षणमात्र मनसि विचाय, **कुपितात्मा** तेन वचसा क्रुद्ध सन् । **अर्दिताक्षरा** परुषाक्षरा **गिर पुनश्च आददे,** परुषवचन पुनर्गृहीतवान् । स उद्धव क्रुद्धोभूत्वा परुषवचनेन पुन प्रत्युत्तर ददौ इत्यर्थ ॥ वियोगिनीवृत्तम् ॥१४॥

**यदाभ्यदाद्वा स मृधे पलायन**
**तदा हल वा मुसल क्व तद्गतम् ॥**
**समुन्नताद्रेर्भृगुपातसम्भवा**
**किणा पदो कि ददतीह विस्मृतिम् ॥१४॥**

**अन्वय**——स यदा वा मृधे पलायन अभ्यदात्, तदा तत हल मुसल वा क्व गतम ? समुन्नताद्रे भृगुपातसम्भवा पदो किणा कि इह विस्मृति ददति ? ॥

**व्याख्या—यदेति** ॥ **स** मागध । **यदा वा** युवा, कृष्णबलरामौ इत्यर्थ । **मृधे** युद्धे **पलायनम् अभ्यदात्** यदा युवा तस्य जरासन्धस्य सम्मुखे सङ्ग्रामात् पलायन स्वीचक्रतु । **तदा तत् हल** लाङ्गल **मुसल च क गतम्,** तच्चकुत्रासीदित्यपि चिन्तनीयम् । अपितु **समुन्नताद्रे** सम्यक् उन्नतोऽद्रि तस्य । समुन्नतोच्चगिरे**र्भृगुपातसम्भवा** भृगो प्रपातस्य तटस्य पातो भृगुपात तस्मात् सम्भवा प्राप्ता । पततीतिपात इति घञ । "प्रपातस्त्वतटो भृगु" इत्यमर । **पदो किणा** पादयोर्व्रणचिह्नानि । **किमिह विस्मृतिं ददति** । अपितु युवयो

पलायितैरुन्नतावनतगिरिप्रपातषु पदयो प्राप्तानि व्रणचिह्नानि किमधुना विस्मृतानि इत्यर्थ ॥ वशस्थवृत्तम् ॥१५॥

**इत्थमुक्तिकलहेन सुरर्षेरन्तरेण रणमप्यतितोषम् ॥**
**चेतसो विदधताऽलघुखेद प्रापितो हरि रुभौ निषिषेध ॥१६॥**

**अन्वय**--रणम् अन्तरेणापि सुरर्षे चेतस अतितोष विदधता, इत्थम् उक्तिकलहेन अलघुखेद प्रापित हरि उभो निषिषेध ॥

**व्याख्या**—**इत्थमिति** ॥ **रणमन्तरेणापि** युद्धेन विनापि **सुरर्षे** सुराणाम् ऋषि सुरर्षि तस्य, नारदस्य, **चेतसो** मनसोऽ**तितोष** सुख **विदधता** मन सन्तोष दायिना। नारदस्य कलहप्रियत्वादितिभाव। **इत्थम उक्तिकलहेन** एव रामोद्धवयोर्भाषिककलहेन, वाग्युद्धेनेत्यर्थ। **अलघु खेद प्रापित** दापित, अर्थात् महान्त विषाद प्राप्तो **हरि** श्रीकृष्ण **उभौ** उद्धवबलरामौ **निषिषेध** निषेध कृतवान् ॥ स्वागतावृत्तम् ॥१६॥

**रामस्य तोषाय गुरोस्ततोऽसौ छात्र पुन श्रीपतिमाप्तवर्य ॥**
**क्षिप्र महीपालरिपु निहन्तु सम्प्रार्थयामास गिराऽमृतेन ॥१७॥**

**अन्वय**--तत असौ आप्तवर्य गुरो छात्र महीपालरिपु क्षिप्र निहन्तुम्, पुन रामस्य तोषाय अमृतेन गिरा श्रीपति सम्प्रार्थयामास ॥

**व्याख्या**-**रामस्येति** ॥ **तत** श्रीकृष्णस्य निषेधानन्तरम्। **असौ आप्त वर्य** आप्तेषु वर्य श्रेष्ठ। उद्धव श्रीकृष्णस्य पितृव्य इतिभाव। **गुरोश्छात्र** बृहस्पतिशिष्य उद्धव। **महीपालरिपु** जरासन्ध **क्षिप्र** सत्वर **निहन्तु** वध कर्तुम्। सर्वादौ अस्य जरासन्धस्यैव वधो योग्य इति भाव। **पुना रामस्य तोषाय** बलरामाय सन्तोष दातुम्। सान्त्वयितु, त शान्त कर्तुमित्यर्थ। **अमृतेन गिरा** सुमधुरसौम्यवाण्या। **श्रीपति** श्रीकृष्ण **सम्प्रार्थयामास** विनयेन कथयामास ॥ इन्द्रवज्रावृत्तम् ॥१७॥

**येनोग्रेणोग्रबन्धाद्व्यरचि नृपकुल मङ्क्षु सङ्क्षुण्णकामम्**
**त क्षुद्रप्रज्ञमारादुपशमय जरासन्धिताङ्ग मुरारे ॥**
**कारागारे मृगारेरयन इव मृगी प्राप्तशोका वितापा**
**ग्रीष्मेण स्वाश्रुपूर्णा सपदि विरुदती राजपत्नीश्च पाहि ॥१८॥**

**अन्वय**—हे मुरारे! येन उग्रेण कारागारे उग्रबन्धात् नृपकुल मङ्क्षु सङ्क्षुण्णकाम व्यरचि, त क्षुद्रप्रज्ञ जरासन्धिताङ्गम् आरात्

उपशमय। मृगारे अयने ग्रीष्मेण वितापा प्राप्तशोका मृगी इव स्वाश्रुपूर्णा रुदती राजपत्नीश्च पाहि॥

**व्याख्या—येनेति॥ हे मुरारे! येन उग्रेण** दारुणेन। **कारागारे** बन्दिशालायाम् **उग्रबन्धात्** कठिनबन्धनात्, हेतु पञ्चमी। **नृपकुलम्** अखिलराजवर्गम्। **मङ्क्षु** झगिति। **सङ्क्षुण्णकामम्** क्षुदिर सम्पेषण रुधादित्वात् नुम्। क्षुणत्तीति क्षुण्ण। 'रदाभ्या निष्ठातो न पूर्वस्य च द' इत्यनेन निष्ठातस्य न। क्षुण्ण दलित कामो मनोरथो यस्य तत्। दलितमनोरथ नष्टमनोरथ **व्यरचि** अकृत। 'रच प्रतियत्ने' कर्मणि लुङि चिण्। येन अखिलराजवर्ग बन्दिशालाया कठिनबन्धनात् भ्रष्टमनोरथ कृत इत्यर्थ। **त क्षुद्रप्रज्ञ** नीचवृत्तिं क्षुद्रबुद्धिम्। **जरासन्धिताङ्ग** जरया राक्षस्या सन्धित सन्धानितम् अङ्ग यस्य स तम्। **आशुदुपशमय** झटिति नाश कुरु। **मृगारे** सिंहस्य **अयने** मार्ग, व्यूहे वा **ग्रीष्मेण वितापा** ऊष्मणा सन्तापिता। **प्राप्तशोका** शोकाकुला **मृगी** इव। सिंहेन भर्तृनिधनत्वादिति भाव। निदाघेन स तापिता भर्तृनिधनात् शोकाकुला मृगी यथा सिंहस्य कारागार सदृशे मार्गे तद्वत् इमा **स्वाश्रुपूर्णा रुदती राजपत्नी**। मागधस्य कारागारे बन्दीकृताना राज्ञा पत्नी इत्यर्थ। **च पाहि** ता अपि झटिति त्रायस्व॥ स्रग्धरावृत्तम्॥१८॥

**इत्थ समाकर्ण्यवचोऽथगीष्पते शिष्यस्य तिष्यस्य विधाय च स्मृतिम्॥**
**प्रस्थाप्य सन्देशहरौ पुर पुर श्रीश समुत्क सुहृदामुपागमत्॥१९॥**

**अन्वय**—अथ श्रीश गीष्पते शिष्यस्य इत्थ वच समाकर्ण्य, सन्देशहरौ पुर प्रस्थाप्य, समुत्क तिष्यस्य स्मृति विधाय च सुहृदा पुरम् उपागमत्॥

**व्याख्या—इत्थमिति॥ अथ** तदनन्तरम्। **श्रीश** श्रीकृष्ण। **गीष्पते** बृहस्पते **शिष्यस्य** उद्धवस्य। **इत्थ** यथापूर्वपद्ये कथितम्। **वच समाकर्ण्य** श्रुत्वा। **सन्देशहरौ पुर प्रस्थाप्य,** सन्देश वार्ता हरतीति सन्देशहर तौ। 'हरतेरनुद्यमनेऽच्' इत्यनेन 'अच्' प्रत्यय। तौ मुनिराड्दूतौ अग्रत. प्रेषयित्वा। **समुत्क** स्वयमपि गमनायोत्कण्ठित। **तिष्यस्य स्मृति विधाय** तिष्यस्य पुष्यनक्षत्रस्य गमनायोचित सन्मुहूर्त्त ध्यात्वा। स्मृतिम् आध्यान, सन्मुहूर्त निश्चित कृत्वा इत्यर्थ। 'राधा विशाखापुष्ये तु सिध्यतिष्यौ श्रविष्ठया' इत्यमर। **सुहृदा पुरम् उपागमत्** सुहृदा पाण्डवाना पुर हस्तिनापुरम् आजगाम॥ वंशस्थवृत्तम्॥१९॥

**मिलित्वा सुहृद्भि सम तत्र देवो**
**नयज्ञेन यज्ञे समारप्स्यमाने॥**

**पृथासूनुना किं वृथा सूनुदारा-**
**श्रिताशा विलिप्याभिगोप्येति मेने ॥२०॥**

**अन्वय**—देव तत्र सुहृद्भिः सम मिलित्वा, नयज्ञेन पृथासूनुना समारप्स्यमाने यज्ञे सूनुदाराश्रिताशा वृथा विलिप्य, वृथा अभिगोप्य किम् ? इति मेने ॥

**व्याख्या—मिलित्वेति ॥ देव** श्रीकृष्ण । **तत्र** हस्तिनापुयाम् । **सुहृद्भिः सम** पाण्डवै सह । **मिलित्वा** 'आलिङ्गनादिभि सयोगा ते आरप्स्य माने यज्ञविषये मन्त्रण कृत्वा' इत्यर्थ । **नयज्ञेन** नय नीति जानातीति नयज्ञ । 'ज्ञा अवबोधने' इत्यस्मात् 'आतोनुपसर्गे क' इत्यनेन क प्रत्यय । तेन नयज्ञेन विवेकिना **पृथासूनुना** युधिष्ठिरेण । **समारप्स्यमाने यज्ञे** करिष्यमाणे राजसूयाध्वरे । **सूनुदाराश्रिताशा** सूनुश्च दाराश्च आश्रिताश्च सूनुदाराश्रिता तेषाम् आशा स्पृहा ताम् । पुत्रकलत्रादिसुहृदाम् अभिकाङ्क्षाम् । **वृथा विलिप्य किम्** । 'लिप उपदेहे' उपदेहो वृद्धि । वृथाऽभिवृद्धि नीत्वा किं फलम् । तथा **वृथाऽभिगोप्य च किम्** । 'गुपू रक्षणे', ल्यप् । तथा अभिरक्ष्य च किं फलम् **इति देवो मेने** यत एतयोर्द्वयोर्जरासन्धस्य मरणेन विना सम्पादन दुष्करमिति भाव ।

जरासन्धे जीविते सति युधिष्ठिरेण राजसूयाध्वरसम्पादनात् पुत्रकलत्राद्याश्रित-वर्गाणामभिवृध्यर्थं या आशा स्पृहा विलिप्ता वर्धिता गुप्ता रक्षिता तेन किं भवति सा निष्फलास्तीति स श्रीकृष्णो मेने, तस्मात् तस्य जरासन्धस्य वधायोपचक्रमे इति भाव ॥ भुजङ्गप्रयात वृत्तम् ॥२०॥

**सप्ततन्तुवितानाय कुविन्दीयति पाण्डवे ॥**
**एक एव जरासन्धो बन्धरूपो बभूव स ॥ २१ ॥**

**अन्वय** —सुस्पष्टम् ॥

**व्याख्या—सप्ततन्तुरिति ॥ सप्ततन्तुवितानाय** सप्ततन्तोर्मखस्य वितानो विस्तार तस्मै । तादर्थ्ये चतुर्थी । 'क्रतुविस्तारयोरस्त्री वितान त्रिषु तुच्छके । मन्दे च । सप्ततन्तुर्मख क्रतु' इति चामर । राजसूययज्ञस्य विस्तारहेतवे । **पाण्डवे कुविन्दीयति सति** यदा पाण्डव कुविन्दवत् तन्तुवाय वदाचरति कुविन्दीयति । 'उपमानादाचारे' इत्यनेन 'क्यच्' । 'क्यचिच' इत्यनेन 'ईत्' शत्रन्तम् कुविन्दीयतीति कुविन्दीयन् । तस्मिन् कुविन्दीयति । वस्त्र निर्माणहेतवे सूत्रप्रसरणमिव यज्ञविस्तार तनोति तदा तत्कर्मणि । **स** जरासन्धो मगधा-धिप **एक एव बन्धरूपो बभूव** सूत्रे ग्रन्थिरिव केवलोऽवरोधको बभूव ॥ यथा कुविन्दो

वस्त्रनिर्माणहेतवे सूत्रान प्रतनोति तेषु यदि ग्रन्थय सन्ति तर्हि तत्र बन्ध उद्भवति, एवमत्र कुविन्दरूप पाण्डव क्रियमाणे राजसूया वरे तन्तूनिव यज्ञविस्तार तनोति तदा तत्र स द्विषद्जरासन्घो ग्रथिरिव बन्धरूपोऽवरोध सञ्जात इति भाव ॥ अनुष्टुप् छन्द रूपकालङ्कार ॥२१॥

**गत्वा तस्य हि वैश्वदेवसमये भीमार्जुनाभ्या समम्**
**विप्रीभूय जरात्मज युगमृध तूर्णं ययाचे हरि ॥**
**पृथ्वी प्रागिव वाडवाकृतिरसौ यज्वानमिभ्यासुरम्**
**दृष्ट कि स्वयमेव सुष्ठु विभुना योगो बलिभ्रशने ॥२२॥**

**अन्वय** — प्राक् असौ वाडवाकृति बलिभ्रशने इभ्यासुर यज्वान पृथ्वी ययाचे । प्रागिव असौ हरि विप्रीभूय भीमार्जुनाभ्या सम बलिभ्रशने तस्य वैश्वदेवसमये गत्वा, यज्वान जरात्मज युगमृध तूर्ण ययाचे । बलिभ्रशने विभुना सुष्ठुयोग स्वयमेव दृष्ट किम् ॥

**व्याख्या—गत्वेति ॥ प्राक्** पूर्वमेव वामनावतारे । **असौ वाडवाकृति-** द्विजरूपो वामन 'द्विजात्यग्रजन्मभूदेव वाडवा" इत्यमर । **बलिभ्रशने** बलिदैत्यस्य पतनहेतौ । **इभ्यासुर** धनाढ्यासुरम् अभीप्सितद बलिदैत्यमित्यर्थ । 'इभ्य आढ्यो धनी स्वामी' इत्यमर । **यज्वान** 'यज्वा तु विधिनेष्टवान्' इत्यमर । यज्ञविधायकसमग्रविधिना याग कृतवान् यज्वा, त यज्वानम् । याग कृतवन्त बलि पृथ्वी ययाचे । 'टु याचृ' याञ्चायाम्, लिटि ययाचे । द्विकर्मकोऽस्य धातु प्रार्थनार्थस्य याचे पृथ्वी मुख्य कर्म, कर्तुरीप्सिततमत्वात् तेन युक्त इभ्यासुरो यज्वा अकथित कर्म, 'अकथित च' इति सूत्रेणापादानादिविशेषैरविवक्षित कारक कर्मसंज्ञ भवति । **प्रागिव** यथा पूर्व कृत तदेवात्रापि **असौ हरि** श्रीकृष्ण । **विप्रीभूय** न विप्र, अविप्र, अविप्र विप्र सम्पद्यमान त भूत्वा विप्रीभूय । अभूततद्भावे च्वि । ब्राह्मणस्वरूप । **भीमार्जुनाभ्या सम** सह । **बलिभ्रशने** बलिर्याग तस्य भ्रशने व्यसनहेतौ । 'पाठो होमश्चातिथीना सपर्या तपण बलि । एते पञ्चमहायज्ञा' इत्यमर । **तस्य वैश्वदेव-समये गत्वा यज्वान** याग कृतवन्त **जरात्मज** जरातनूज प्रति **युगमृध** द्वन्द्वयुद्ध **तूर्ण ययाचे** सत्वर याचितवान् । **बलिभ्रशने विभुना सुष्ठुयोग स्वयमेव दृष्ट किम् ?** वैश्वदेवयज्ञान्ते 'अतिथिमाकाङ्क्षेत्' इत्यस्मादभ्यागतस्य वाञ्छापूर्तिरपि यागस्याङ्ग विहितम् । अत श्रीकृष्णेन जरासन्धस्य यागविध्वसनहेतौ स्वयमेव सुयोगो निश्चित किम् । किमिति न ? अस्तीत्यर्थ ॥ शार्दूलविक्रीडित वृत्तम् ॥२२॥

**सद्योऽभीप्सितदानतत्परतया युद्धोद्यतत्वेन च**
**द्वौ धीमान्स गुणौ तदैव हि तमःसत्त्वाभिधानाविव ।।**
**हित्वा खेदनिवृत्तिदौ रणभिया बाल्येन कृष्णार्जुनौ–**
**भीमं लोहितमुत्क्रुधं रज इव प्रत्याददे ह्याजये ।।२३।।**

**अन्वय** ––अभीप्सितदानतत्परतया, युद्धोद्यतत्वेन च, स धीमान् तदा तमःसत्त्वाभिधानौ द्वौ गुणौ इव कृष्णार्जुनौ, रणभिया, बाल्येन एव हि खेदनिवृत्तिदौ सद्य हित्वा, रज इव लोहितम् उत्क्रुधं भीमं हि आजये प्रत्याददे ।।

**व्याख्या—सद्य इति ॥ अभीप्सितदानतत्परतया** तत्परस्य आसक्तस्य भावः तत्परता 'तस्य भावस्त्वतलौ' इत्यनेन तल् प्रत्ययः । तलन्तम् स्त्रियाम् । अभीप्सिते दाने तत्परता, अभीप्सितदानतत्परता तया । इच्छितदानशीलत्वेन । तथा च **युद्धोद्यतत्वेन** उद्यतः उद्युक्तः । उद्यतस्य भावः उद्यतत्वम् त्वान्तम् क्लीबम् । युद्धाय उद्यतत्वं तेन । युद्धाय सदा तत्परशीलत्वेन च । एताभ्यां गुणद्वयाभ्याम् युक्तत्वेन । **स धीमान् चतुरो** बुद्धिमान् जरासन्धः । **तदा** अभ्यागतस्य वाञ्छापूर्तिहेतवे । **तमःसत्त्वाभिधानौ** तमश्च सत्त्वं च तमःसत्त्वे । तमःसत्त्वे अभिधाने नामनी ययोः तौ तमःसत्त्वाभिधानौ, एतादृशौ द्वौ **गुणौ इव** कृष्णार्जुनौ । **रणभिया, बाल्येन एव हि खेदनिवृत्तिदौ** कृष्णो नामसादृश्येन तमोगुणः किन्तु रणभिया युद्धभीरुत्वेन युद्धात् कृतपलायनेन खेदद । अतस्त्याज्यः । तथा च अर्जुनो नामसादृश्येन सितः सत्त्वगुणः किन्तु अर्जुनस्य बाल्येन बालभावेन अयोग्यः । अतो युद्धान्निवृत्तिः । एतस्मात् कारणात् कृष्णार्जुनौ युद्धाय **सद्य** सपदि **हित्वा** त्यक्त्वा । **रज इव लोहितं** रजोगुणमिव युद्धरूपम् **उत्क्रुधं** क्रोधरूपं च **भीमं हि** निश्चयेन । **आजये प्रत्याददे** युद्धाय स्वीचकार । आजिः युद्धं तस्मै आजये । शार्दूलविक्रीडितं वृत्तम् ।।२३।।

**द्वन्द्वाजिसन्नाहपरोऽथ राजा गदाधरीभूय गदाधरत्वम् ।।**
**वृकोदरायाभिमुखाय चादाद्गदाधरोक्तं परिपालनाय ।।२४।।**

**अन्वय** ––अथ द्वन्द्वाजिसन्नाहपरः राजा गदाधरोक्तं परिपालनाय गदाधरीभूय, अभिमुखाय वृकोदराय च गदाधरत्वम् अदात् ।।

**व्याख्या– द्वन्द्वेति ॥ अथ** तदनन्तरम् । **द्वन्द्वाजिसन्नाहपरः** द्वन्द्वाजौ द्वन्द्वयुद्धे सन्नाहपरः सन्नद्धः द्वन्द्वयुद्धाय परिकरादिबन्धनेन सज्ज इत्यर्थः । **राजा**

मागधः । **गदाधरोक्तम्** गदाधरेण श्रीकृष्णेन यदुक्तं तत् **गदाधरोक्तम्** अधुना गदायुद्धमेव भवतु इति, **परिपालनाय** स्वीकाराय गदायुद्धं कर्तुमित्यर्थः । **गदाधरी-भूय** धरतीति धरः इति पचाद्यच् । गदाया धरः गदाधरः । न गदाधरः, अगदाधरः, अगदाधरः गदाधरः सम्पद्यमानः सः भूत्वा गदाधरीभूय । अभूततद्भावे च्वि । स्वयम् एकां गदां गृहीत्वा । **अभिमुखाय** सम्मुखेस्थीयमानाय **वृकोदराय** समीपवर्तिने भीमाय च । **गदाधरत्वम् अदात्** गदां धरतीति गदाधरः तस्य भावः । गदाधरत्वं दत्तवान् । अन्यां गदां भीमाय च ददौ इत्यर्थः ॥ उपजाति वृत्तम् ॥२४॥

**अन्योन्यस्याङ्गदेशे मुहुरचलनिभे रहसा पात्यमाने**
**तत्तद्वक्षोस्थिवज्रैर्झटिति बत गदे चूर्णतामन्वभूताम् ॥**
**अन्येषां दुर्मदानां हृदयमथ परं तस्य बद्धात्मजाते-**
**र्द्वेधा देहं समग्रं श्रितहरिरकरोन्मध्यमः पार्थवीरः ॥२५॥**

**अन्वयः**—मुहुः रहसा अन्योन्यस्य अचलनिभे अङ्गदेशे पात्यमाने, बत ! तत्तद्वक्षोस्थिवज्रैः गदे झटिति चूर्णताम् अन्वभूताम् । अथ तस्य बद्धात्मजातेः हृदयं (यत्) अन्येषां दुर्मदानां परं (तत्) समग्रं देहं च श्रितहरिः मध्यमः पार्थवीरः द्वेधा अकरोत् ॥

**व्याख्या**—अन्योन्यस्येति ॥ **मुहूरहसा** पुनः पुनरतिवेगेन तौ उभौ भीमजरासन्धौ । **अन्योन्यस्य अचलनिभे अङ्गदेशे** परस्परस्य पर्वतसदृशे अतिकठिने शरीरे **पात्यमाने सति । बत** पश्येदमाश्चर्यं यत् । **तत्तद्वक्षोस्थिवज्रैः** तस्य तस्य वक्षोस्थिरेव वज्रं कुलिशं तत्तद्वक्षोस्थिवज्रं तैः । अन्योन्यस्य वज्ररूपैर्हृदयास्थिभिः । **गदे चूर्णतामन्वभूताम्** तयोर्गदे भिन्नतामगमताम् । ते गदे खण्डिते बभूवतुः । **अथ** तदनन्तरम् । **तस्य बद्धात्मजातेः** बद्धा बन्दीकृता आत्मजातिः स्वजातिः नृपकुलं येन सः । तस्य जरासन्धस्य **हृदयं** यद्धृदयम् **अन्येषां दुर्मदानां** मदोन्मत्तानां प्रति । **परं** दूरं, अप्राप्यं तत् जरासन्धस्य हृदयम् तथा समग्रं देहं च **श्रितहरिः** श्रितः आश्रितो हरिः श्रीकृष्णो येन सः । **मध्यमः पार्थवीरः** पृथायाः अपत्यं पार्थः स एव वीरः पार्थवीरः । त्रिषु पार्थेषु मध्यमो भीम इत्यर्थः । **द्वेधा अकरोत्** तस्य हृदयं शरीरं च द्विभागं छेदयामास, द्वेधा विभक्तं कृतवान् इत्यर्थः । द्वेधा इति 'एधाच्च' इति सूत्रेण द्वित्र्योः सम्बन्धिनो धा प्रत्ययस्य एधाच् स्यात् । अथवा तस्य हृदयं द्वेधा अकरोत्, **परं अन्येषां दुर्मदानां हृदयं च ।** जरासन्धस्य सकलं शरीरं हृदयं च द्विधाभूतं कृत्वा परम् अन्यं चकार । ये अन्ये दुर्मदा राजान आसन् तेषामपि हृदयं जरासन्धदेहेन सह अपाटयत् ॥ निदर्शनालङ्कारः अभवन्वस्तुसम्बन्धरूपः ॥ स्रग्धरावृत्तम् ॥२५॥

**सुसत्कृता सादरमच्युतेन ते विमोचिता मागधकर्मपाशत ॥**
**स्वक स्वक राष्ट्रमगुर्जगुर्यशो न गुवघ सस्मरुरप्यरेनृपा ॥२६॥**

**अन्वय** —अच्युतेन मागधकर्मपाशत विमोचिता, अपि सादर सुसत्कृता ते नृपा अरे गुर्वघ न सस्मरु । (हरे) यश जगु, स्वक स्वक राष्ट्र अगु ॥

व्याख्या—**सुसत्कृता इति** ॥ **अच्युतेन** श्रीकृष्णेन । **मागधकर्मपाशत** मगधानाम् अय मागध अण् प्रत्यय । जरासन्ध तस्य कर्म कृति तस्य पाशो बन्धन तस्मात् ' तसि ' । जरासन्धस्य कारागारात् । **विमोचिता** विमुक्ता । **अपितु सादर** यथास्यात् तथा आदरेण सहितम् । **सुसत्कृता** सम्पूजिता **ते नृपा** । **अरे** शत्रोर्जरासन्धस्य **गुर्वघ** गुरु महत् अघ पाप । **न सस्मरु** । स्मरण न कृतवन्त किन्तु **हरेर्यशो जगु , स्वक स्वक राष्ट्रम् अगु** । प्रभोर्गुणवर्णन कुर्वन्त त नृपा स्वस्वदेश जग्मु । भगवद्घटितबन्धमोक्षात् भगवद्यशोगान कुर्वाणाना तेषा राज्ञा जरासन्धदत्तमहत्कल्मषस्य स्मरणमपि नाभदिति भाव ॥ वशस्थ वृत्तम् ॥२६॥

**ज्ञात्यर्थमूर्ध्वकलितैकगिरि मुकुन्द**
**भृत्यार्थमादृतगिरिव्रजमाप्तकामम् ॥**
**सम्पूज्यधर्मतनय पुनरप्यतृप्तो**
**यागाग्रपूजनविधौ भृशमर्चति स्म ॥२७॥**

**अन्वय** —धर्मतनय ज्ञात्यर्थम् ऊर्ध्वकलितैकगिरि, भृत्यार्थम् आदृतगिरिव्रजम आप्तकाम मुकुन्द सम्पूज्य, पुनरपि अतृप्त यागाग्रपूजनविधौ भृश अर्चति स्म ॥

**व्याख्या—ज्ञात्यर्थमिति** ॥ **धर्मतनय** राजा युधिष्ठिर । **ज्ञात्यर्थम्** ज्ञातिभ्य इति ज्ञात्यर्थम् अर्थात् ज्ञातीना बन्धुबा धवाना गोपालाना अर्थ प्रयोजनम तम् । गोपालाना हेतवे इत्यर्थ । **ऊर्ध्वकलितैकगिरिम्** ऊर्ध्वम् उच्चै कलितो वृत एकगिरिर्गोवर्धनगिरिर्येन स । तम् । पुन **भृत्यार्थम्** भृत्येभ्य इति भृत्याथम् डुभृञ् धारण पोषणयो भ्रियते इति भृत्य । ' भृञोऽसज्ञायाम् ' इत्यनेन ' क्यप ' । पिति ' तुक ' । भृत्य आश्रित , पाण्डव इत्यर्थ । तेषा अर्थो हेतु तम् । पाण्डवाना कल्याणहेतवे इत्यर्थ । ज्ञात्यर्थ भृत्यार्थमिति अस्वपदविग्रहो नित्यसमास । **आदृतगिरिव्रजम्** आदृतो गमनायाऽङ्गीकृतो गिरिव्रजो मगधदेशो येन स । तम् । गोपालाना हिताय येन गिरिरुद्धृत , तथा पाण्डवाना हिताय यो मगधदेश गत तम् **आप्तकामम् मुकुन्दम्** आप्त सम्पादित कामो जरासन्धवधाभिलाषो येन स ।

आप्तकाम तम्। श्रीकृष्ण **सम्पूज्य। पुनरपि अतृप्तो**ऽसन्तुष्टो धर्मराज। **यागाग्रपूजनविधौ** यागे राजसूयाध्वरे यत्अग्रपूजन महान्त प्रति परमार्हण श्रेष्ठपूजन तस्य विधाने स धर्मतनय अमु मुकुन्द **भृश अर्चति स्म** अत्यन्त समहयत् ॥ वसन्त तिलका वृत्तम् ॥२७॥

**पीतामृतस्येव विधुन्तुदस्य चैद्यस्य निन्दैकविष मुखेन ॥**
**सङगृह्लत कण्ठमधोक्षजोऽय वक्र लुलावावनिदुर्ग्रहस्य ॥२८॥**

**अन्वय**—पीतामृतस्य विधुन्तुदस्य कण्ठ इव अवनिदुर्ग्रहस्य मुखेन निन्दैकविष सङगृह्लत चैद्यस्य वक्र कण्ठम अयम् अधोक्षज लुलाव ॥

व्याख्या—**पीतामृतस्येति** ॥ **पीतामृतस्य** पीतम् अमृत येन स तस्य। **विधुन्तुदस्य** राहो। विधु चद्रमस तुदतीति विधुन्तुद। 'विध्वरुषोस्तुद' इत्यनेन खश्, अरुद्विष इति मुम्। 'तमस्तु राहु स्वर्भानु सैहिंकेयो विधु तुद' इत्यमर। **कण्ठमिव**। यथा अमृतस्य पिबस्य राहो कण्ठ पुराऽयमधोक्षजो **लुलाव** अच्छिनत्। 'लूञ् छेदने'। एवमत्रापि। **अवनिदुर्ग्रहस्य** अवन्या पृथिव्या दुर्ग्रहो दुष्टग्रह। दुरात्मा इत्यर्थ तस्य। **मुखेन निन्दैकविष** नि दा कुत्सित भाषणमेवैक केवल विषम्। तत्, **सङ्गृह्लत** ग्रहण कुर्वत पिबत इत्यर्थ। **चैद्यस्य** शिशुपालस्य। **वक्र** कुटिल **कण्ठम् अयम् अधोक्षज** श्रीकृष्ण **लुलाव** अच्छिनत्।

यथा पुरा समुद्रमन्थनसमये छलेनाऽमृत पिबतो राहो कण्ठम् अयम् अधोक्षज श्रीकृष्ण अच्छिनत् एवमत्रापि निन्दारूप विष पिबत शिशुपालस्य कुटिल कण्ठ स चिच्छेद इत्यर्थ ॥ इन्द्रवज्रावृत्तम् ॥ उपमालङ्कार ॥२८॥

**सूनो किलाधिमहि मान्यतमस्य पाण्डो**
**कुन्देन्दुचन्दनहिमाचलतुल्यकीर्त्ते ॥**
**नित्य सुधाभुगहिमानवमस्तुतस्य**
**यागस्य तस्य महिमा नहि माति वाचि ॥२९॥**

**अन्वय**—किल अधिमहि, कुन्देन्दुचन्दनहिमाचलतुल्यकीर्त्ते मान्यतमस्य पाण्डो सूनो नित्य सुधाभुगहिमानवसस्तुतस्य तस्य यागस्य महिमा वाचि नहि माति ॥

**व्याख्या—सूनोरिति ॥ किल अधिमहि** मह्या इति अधिमहि । अव्ययीभाव समास । खलु अस्मिन् जगति । **कुन्देन्दुचन्दनहिमाचलतुल्यकीर्त्तेः** । कुन्दः माघ्य सितपुष्पविशेषः कुन्देन्दुचन्दनहिमाचलानाम् तुल्या सदृशी धवला कीर्त्तिर्यस्य स तस्य । अर्थात् अत्यन्त धवल कीर्त्ते । **मान्यतमस्य** श्रेष्ठस्य । **पाण्डोः सूनोः** धर्मराजस्य । **नित्यम्** अहर्निशं **सुधाभुगहिमानवसंस्तुतस्य** सुधाभुजो देवा, अहय शेषादि सर्पगणा मानवा मनुष्या, एते संस्तुतस्य प्रशंसितस्य । सुरनागमनुष्यैर्नित्य वर्णितस्य । **तस्य यागस्य** राजसूययज्ञस्य । **महिमा** महत्त्व **वाचि नहि माति** वाण्या वर्णयितुमशक्य ॥ कुन्दादि सदृशी विशुद्धा यस्य कीर्त्ति तस्य युधिष्ठिरस्य यागस्य महत्त्वम् अस्मिन् जगति देवाद्यैर्नित्य स्तुतमपि तस्य महिमा वाण्या अकथनीय । यतो येनेन्द्रियेण 'चक्षुषा' दृष्ट तस्य वागिन्द्रियत्वाभावाद्वक्तुमसमर्थत्वम । एव यदिन्द्रिय 'वागिन्द्रिय' वक्तु समर्थ तस्य नेत्रत्वाभावात् प्रत्यक्षमसाक्षीकृतवर्णन कर्तु-मसमर्थत्वमिति भाव ॥ वसन्ततिलक वृत्तम् ॥२९॥

**कदाचिदान्धिर्मयनिर्मितायां सुखोपविष्टे स्वजने सभायाम् ॥**
**असूचयद्भाविनिजोरुभङ्ग ह्रदप्रवेशोचितपूर्वरूपम् ॥३०॥**

**अन्वय**—कदाचित् मयनिर्मितायां सभायां स्वजने सुखोपविष्टे । आन्धि भाविनिजोरुभङ्ग ह्रदप्रवेशोचितपूर्वरूपम् असूचयत् ॥

**व्याख्या—कदाचिदिति ॥ कदाचिन्मयनिर्मितायां सभायाम्** कस्मिंश्चित् दिने मयासुरेण विरचितायां सभायां सत्याम् । **स्वजने सुखोपविष्टे** निजबन्धु-बान्धवै सह पाण्डवे धर्मराजे सुखासीने सति । **आन्धि** अन्धस्य अपत्यं पुमान् आन्धि । 'अतइञ' इत्यनेन अपत्यार्थे 'इञ' । अन्धस्य धृतराष्ट्रस्य पुत्रो दुर्योधन । **भाविनिजोरुभङ्गम्** आगामिनि कौरवपाण्डवयुद्धे य स्वोरुभङ्गो भविष्यति तम् । **ह्रदप्रवेशोचितपूर्वरूपम् असूचयत्** ह्रदे जलाशये प्रवेशो ह्रदप्रवेश तस्मै उचित पूर्वरूप यस्य स तम् । सूचित कृतवान् । गदायुद्धात्पूर्वं पराजितो दुर्योधनो वनमध्यह्रदे निगूढाश्रय कृतवान, स भाविह्रदप्रवेशः, तत्पश्चा-द्भविष्यन्त तदूरुभङ्गमत्र जलस्थलभ्रान्तिमत्यां सभायां तेन कृतस्ववस्त्रप्रान्तापकर्षणेन तथा च जले पतनेन वर्णयति कवि । मयासुरेण निर्मितसभायां जलस्थान स्थलमिव, स्थल जलमिव भ्रमोत्पादक कौशल्येन विरचितम् । तस्मिन्नागतो दुर्योधन स्थले जलावभासत्वाद्वस्त्रान्तम उपर्यगृह्णात् तथा जले स्थलवद्भ्रात्या न्यपतत् । एव भीमस्य विहसितेन अपमानरुष्टो कृतप्रत्यपकारप्रतिज्ञो दुर्योधन आगामियुद्धे स्वोरुभङ्गस्योचित पूर्वचिह्नम् अत्रैवादर्शयत् किम् । इति उत्प्रेक्षते कवि ॥ सम्भवद्वस्तुसम्बद्धो निदर्शनालङ्कार । उपेन्द्रवज्रा वृत्तम् ॥३०॥

**रोषोज्जृम्भितदृग्दृढाशनिहतव्यावल्गदुग्राकृति-**
**क्षोणीजादिमहेन्द्रदुर्हृदचलव्रातस्य तस्येशितु ।।**
**आसीद्वह्निकण क्षणान्मुखहतप्रोत्सर्पदुर्वाचिष**
**शाल्व पाल्वलवारि वारितमहावार्धेर्लवार्धेन वा ।।३१।।**

**अन्वय**—तस्य रोषोज्जृम्भितदृग्दृढाशनिहतव्यावल्गदुग्राकृति-क्षोणीजादिमहेन्द्रदुर्हृदचलव्रातस्य ईशितु मुखहतप्रोत्सर्पदुर्वाचिष क्षणात् शाल्व अग्निकण आसीत् । वा । वारितमहावार्धे लवार्धेन पाल्वलवारि आसीत् ।।

**व्याख्या—रोष इति ॥** तस्य शाल्वदैत्यस्य वधमाह । **तस्य** श्रीकृष्णस्य । **रोषोज्जृम्भितदृग्दृढाशनिहतव्यावल्गदुग्राकृतिक्षोणीजादिमहेन्द्रदुर्हृदचल व्रातस्य** रोषेण क्रोधेन, उज्जृम्भिता विस्फारिता या दृक् दृष्टि सा एव दृढाशनिदृढ दम्भोलिर्वज्र तेन हत । 'जृभि गात्रविनामे' उत् जृम्भते इति उज्जृम्भिता । इण् निष्ठायाम् । व्यावल्गन्त उन्मत्तता गता उग्राकृतयो रौद्ररूपिणश्च क्षोणीजादि महेन्द्रा भौमासुरादिदुष्टराजा त एव दुर्हृदचला दुष्टहृदयरूपिण पर्वता तषा व्रात समूह । 'वल्ग गतौ' वि+आ वल्गतीति व्यावल्गन् ते व्यावल्गन्त । शत्रन्तम् । रोषोज्जृम्भितदृग्दृढाशनिना हतो [illegible] दुर्हृदचलव्रातो येन स तस्य । **ईशितु** स्वामिन श्रीकृष्णस्य । **मुखहतप्रोत्सर्प दुर्वाचिष** मुखेन हता गता आध्माता इत्यथ । 'हन हिंसा गत्यो' । मुखेन हता प्रोत्सर्पन्ती आसमन्तात् ज्वलन्ती गमनप्रवृत्ता या ऊरु अर्चि महती अग्निशिखा ज्वालाइत्यर्थ यस्य स तस्य । 'मुखादिन्द्रश्चाग्निश्च' इति श्रुते । 'वह्नद्वयो र्ज्वाल्कीलावर्चिर्हेति शिखा स्त्रियाम्' इत्यमर । करालाग्ने श्रीकृष्णस्य **स शाल्व क्षणात् अग्निकण आसीत्** तुच्छस्फुलिङ्गत्व प्राप्त, हत इत्यर्थ । **वा** अथवा पक्षे । **वारितमहावार्धे** माहाश्चासौ वार्धिश्च महावार्धि, वारित सीमित महावार्धिर्महोदधिर्येन स तस्य । एतादृश श्रीरामरूपस्य श्रीकृष्णस्य स शाल्व । **लवार्धेन** निमिषार्धेन । **पाल्वलवारि** पल्वलस्य इद पाल्वलम् अण् प्रत्यय । तस्य वारि पाल्वलवारि । अल्पसरोवरजलमभूत् । "वेशान्त पल्वल चाल्पसरो वापीतु दीर्घिका" इयमर । पक्षद्वयेपि स शाल्व स्वमहिम्नो भ्रष्ट तुच्छता गतो ममारेति भाव ॥ उल्लेखालङ्कार । एकस्य अनेकवोल्लेख । शार्दूलविक्रीडित वृत्तम् ॥ ३१ ॥

**सुतीर्थकरणे भुवो विशसन तु सूतस्य तत्**
**विभु प्रति न बाधक कलितनैमिष वै मिषम् ।।**

**मिषन्तु सुधिय फल प्रकृतिरस्य पुण्याघयो**
**कथ वहतु कामिषण्ढजनयोश्च वन्ध्या शिशुम्** ।।३२।।

**अन्वय** —भुव सुतीर्थकरणे सूतस्य विशसन वै मिषम् । तत् तु कलितनैमिष विभु प्रति न बाधकम । अस्य पुण्याघयो फल कामिषण्ढजनयो शिशु वन्ध्या इव प्रकृति कथ वहतु इति सुधिय वै मिषन्तु ।।

**व्याख्या —सुतीर्थकरण इति॥ भुव** जगत । **सुतीर्थकरणे** सत्तीर्थक्षेत्र विधाने । **सूतस्य** रोमहर्षणस्य। **विशसन** मारणम् । वै निश्चयेन **मिष** व्याजमासीत् । **तत्तु** तत् हननकर्म तु । **कलितनैमिषम्** कलित विहित नैमिष व्याजरूप निमित्त येन स तम्। पक्षे कलित प्राप्त नैमिष नैमिषारण्य यन स तम्। अथवा कलित नैमिष निमिपकाल्मात्र तत्। अव्ययम्। निमिषमात्र काल यथास्यात् तथा। **प्रभु प्रति न बाधकम्** ईश्वर प्रति बन्धनकारक न। निमित्तिकारणात्। **अस्य** मारणकर्मण **पुण्याघयो फल** पापपुण्यात्मक फलम्। **प्रकृति**निमित्तकारण। **कथ वहतु** लभता, कर्तृत्वाभावात्। **कामिषण्ढजनयो शिशु वन्ध्या इव** यथा वन्ध्या उत्पादनशक्तिरहिता अकर्त्री सती, कामिषण्ढजनयो कामिन षण्ढजनस्य वा सकाशात् शिशुम् अपत्यरूप फल नैव लभते। एवमेव सूतस्य जन्मन जातस्य प्राणिन कर्मफलासादिते सुखदु खरूपे फले तेनैव कर्मवशगेन जीवेन भोक्तव्ये न तु निमित्तभूतेन पुरुषेण प्रकृत्या वा। यौ तु केवलसाक्षिणौ न तु फलभोक्तारौ। कर्तृत्वराहित्यात्। **इति सुधिय** कोविदा पण्डिता **मिषन्तु** पश्यन्तु ।। अतो रोमहर्षणस्य मारण बलराम प्रति पापपुण्यात्मक बन्धनकारक न स्यात्, तस्मात् प्रभु प्रति दोषक्षालनार्थ सुतीर्थाटनमपि न विधीयते। यत् लौकिक व्यवहारे यथा दण्डयान् राजा दण्डयति तत् दण्डदान राज्ञो दोषार्ह न। तदुत्पन्नस्य पापस्य पुण्यस्य वा फल कर्मकर्ता एव भुनक्ति न तु निमित्तमात्रन्यायाधिकरणे शास्तोऽधिकारीति स्पष्टम्। यत् तेन बलरामेण सुतीर्थाटन कृत तत् केवल मारणव्याजादेव न तु दोषक्षालनायेति भाव । पृथ्वीछन्द । जसौ जसयलावसुग्रहयुतिश्च पृथ्वीगुरु (८-९) ।।३२।।

**कल्पान्तलोकत्रयपाककारी मण्येकसत्सर्षपशोभिमूर्धा ।।**
**रामो विराम श्रितशात्रवाणा ग्रीष्मोऽभवद्बल्वलपल्वलस्य** ।।३३।।

**अन्वय** –कल्पान्तलोकत्रयपाककारी, मण्येकसत्सर्षपशोभिमूर्धा श्रितशात्रवाणा विराम राम बल्वलपल्वलस्य ग्रीष्म अभवत् ।।

**व्याख्या—कल्पान्त इति** ।। बल्वलदैत्यस्य वधमाह ।। **कल्पान्तलोकत्रय-पाककारी** 'डुपचष् पाके' पच्यते इति पाक घञ् प्रत्यय । पाक पचन, परिपक्वता गतम् । पाक करोतीति पाककारी । ताच्छील्ये णिनि । परिपक्वता नयन् निर्माणकर्ता इत्यर्थ । कल्पान्ते प्रलयान्ते लोकत्रयस्य त्रिजगत पाककारी कल्पान्तलोकत्रयपाककारी । प्रलयान्ते लोकत्रय परिपक्वता नयन् असौ राम । पुन**र्मण्येकसत्सर्षपशोभिमूर्धा** मणी रत्न स एव एक सत्सर्षपमिव शोभते मूर्ध्नि यस्य स । **श्रितशात्रवाणा** श्रिता शरणागता शात्रवा श्रितशात्रवा तेषाम् । **विराम** आश्रयस्थानम् । एतादृशो **रामो** बलराम । **बल्वलपल्वलस्य** बल्वल एतत्सञ्ज्ञो राक्षस स एव पल्वलोऽल्पसर तुच्छजलाशय तस्य । **ग्रीष्म** शोषणरूपो निदाघोऽ**भवत्** ।।

यश्च प्रलयान्ते लोकत्रयस्य पुनारचना परिपक्वता नयति । यस्य शिरसि सूय इव जाज्वल्यमानो मणिर्वर्तते । यश्चाऽऽश्रयार्थमागतान् शत्रूनपि आश्रय स्थानम् । एतादृगसौ कारुणिको रामो बल्वलदैत्य हन्तु ग्रीष्म प्रखरदाहकोऽभवत् । यथा निदाघे अल्पसरसा जल क्षिप्रमेव शोष्यते भानुकिरणै , एवमेव निदाघरूपेणानेन रामेण बल्वल पल्वलवत् शीघ्र शुष्कता गमित इति भाव ।। इन्द्रवशा वृत्तम् ।। स्यादिन्द्रवशा ज्तजाम्नतोगौ ।।३३।।

**पृथुककणिका विप्राग्र्येणाऽग्रतो विहिता विभो-**
**बत सुषुविरे ता वै दिव्य स्फुरन्मणिकाञ्चनम्** ।।
**त्रिदिवगणिकाजुष्ट पुष्ट विलासिजनै पुर**
**खलु विजयते विष्णोर्भक्तेरपि क्षणिकादर** ।। ३४ ।।

**अन्वय** — विप्राग्र्येण विभो अग्रत पृथुककणिका विहिता बत ता त्रिदिवगणिकाजुष्ट, विलासिजनै पुष्ट, स्फुरन्मणिकाञ्चन, दिव्य, पुर वै सुषुविरे । विष्णो भक्ते क्षणिकादर अपि खलु विजयते ।।३४।।

**व्याख्या—पृथुककणिका इति** ।। सुदाम्नोऽनुग्रहस्य वर्णनम् ।। **विप्राग्र्येण** विप्रेषु द्विजेषु अग्र्य श्रेष्ठ तेन । अग्र इव अग्र्य 'शाखादिभ्यो य' इति 'य' । अथवा तत्र साधु' इत्यनन यत् । सुदाम्ना एतत् सञ्ज्ञकेन श्रेष्ठद्विजेन । **विभो** श्रीकृष्णस्य **अग्रत** अग्रे इति अग्रत सप्तम्यास्तसि । सम्मुखे । **पृथुककणिका** भ्रष्टकुट्टधाना । 'पोहे' इति भाषायाम् । **विहिता** स्थापिता । बत पश्ये दमाश्चर्य यत् ता धाना । **त्रिदिवगणिकाजुष्टम्** । 'जुषी प्रीतिसेवनयो' जुजुषे इति जुष्ट तम् । क्तान्तम् । त्रिदिव स्वर्लोक । त्रिदिवस्य गणिका वेश्या,

ताभि जुष्टम् । स्वैवैश्र्यायुक्तम् । **विलासिजने पुष्टम्** स्त्रीणा प्रभङ्गाङ्गोपद्ध क्रियाचेष्टाया समुद्भूतो रसविशेषो विलास तस्मिन् र तु शीलम् अस्य विलासी । ताच्छील्ये णिनि । विलासिनो जना ते । श्रियायुक्तजनै सङ्कुलमित्यर्थ । **स्फुरन्मणिकाञ्चन** स्फुरन् मणि काञ्चन च यस्मिन् तत् स्फुरन्मणिकाचन तत् 'स नपुसकम्' इति सूत्रेण नपुसक स्यात् । हाटकरत्नादिभि सर्वत्रसुशोभितम् । **दिव्य पुर वै सुषुविरे** स्वर्गतुल्य नगर वै निश्चयेन जनयामासु निममुरित्यर्थ । **विष्णोर्भक्ते क्षणिकादपि खलु विजयते** ईश्वरस्य भक्ति सेवा क्षणमपि स्वीकृता चेत् प्रभवति, सर्वोत्कृष्टत्वेन वर्तत ।

सुनाम्ना द्विजेन श्रीकृष्णाय चिपिटकसमर्पणेन सर्वसम्पन्न श्रियायुक्त पुर प्राप्तम् । एष भक्तेर्महिमा । सा क्षणमपि स्वीकृता चत् प्रभवतीति भाव ॥ अर्थान्तरन्यासालङ्कार । हरिणी छन्द ॥३४॥

**कुर्वल्लोपमहर्पतेर्विनशने लोकान्समस्ताञ्जवा**
**देकत्रैव विमिश्रयन्भगवत साम्निध्यमप्यावहन् ।**
**कल्पान्तेन समो ग्रह समभवत्पूर्ण श्रियोनुग्रह**
**पुण्यानामपि सङ्ग्रह शतजनुर्दुष्कर्मडिम्भग्रह ॥३५॥**

**अन्वय**—अहपते लोप कुर्वन्, जवात् समस्तान् लोकान् विनशने एकत्रैव विमिश्रयन, भगवत सान्निध्यमपि आवहन्, श्रियोनुग्रह, पुण्यानामपि सग्रह, शतजनुर्दुष्कर्मडिम्भग्रह, कल्पान्तेन सम, पूर्ण ग्रह समभवत् ॥

**व्याख्या—कुर्वन्निति ॥ अहर्पते** अह्नो दिवसस्य पति स्वामी अहर्पति तस्य अहर्पते सूर्यस्य **लोपम्** अदर्शन **कुर्वन्** । अहपतेरिति 'अहरादीना पत्यादिषु वा रेफ' इति वार्तिकेन विसर्गापवादो विकल्पेन । **जवात् समस्तान् लोकान् विनशने एकत्रैव विमिश्रयन्** ग्रहणपर्वणि समस्तजनान् एककालेनैव रभसा **विनशने** यत्र सरस्वतीनदीविलुप्ताभूत्तत्रतीर्थस्थाने एकत्रीकुर्वन । **भगवत सान्निध्यमपि आवहन्** तेनैव कारणेनाऽन्यव्यापार परित्यज्य ईश्वरपूजने समस्तान् प्ररयन् । **श्रियोनुग्रह** श्रिय सपद लक्ष्म्या वा अनुग्रह प्रसादो यस्मिन् स । यत्सूर्यग्रहणपर्वणि दानधर्मादिशुभकर्माचरणेन श्रिय प्रसादो भवतीत्यर्थ । पुन **पुण्यानामपि सङ्ग्रह** पुण्यकर्मण सङ्ग्रह सञ्चय यस्मिन स । जपानुष्ठानेन सुकृतानामपि सङ्ग्रहो भवतीत्यर्थ । **शतजनुर्दुष्कर्मडिम्भग्रह** शत जनूषि यषा तेषा दुष्कर्म पाप तदेव डिम्भाना बालकाना ग्रहो ग्राहो विनाशकारी ग्रह । जन्मजन्मान्तरकृतपापरूपी बालमारकग्रह इत्यर्थ । यत्सूर्यग्रहणस्य पुण्यकाले कृतईश्वराराधनेन

**व्याख्या—अन्योऽन्यमिति ॥ अन्योऽन्यदूरेक्षणहर्षजाश्रुक्लिन्नात्मनाम्** दूरात् ईक्षण दर्शन दूरेक्षणम्। हर्षात् जातम् अश्रु हर्षजाश्रु। अन्योऽन्येषा दूरेक्षणात् हर्षजाश्रु, तेन क्लिन्न आर्द्र आत्मा येषा ते, तेषाम्। **एतावदेव ऊनम् अभूत्** दूरादेव परस्परदर्शनेनोत्थितानन्दाश्रुणा आर्द्रमनसा तेषाम् इद न्यूनमभूत्। किमभूत्? **यत् एषा** स्नानार्थमागतानाम् **उद्धतोमूर्धा** उन्नत शिर, **तीर्थजलावगाहादपि** तीर्थजले अवगाह अवलोडन तस्मात् तीर्थजले आर्द्रीभूनादपि कृतस्नानादपि, **प्रेमजल न लेभे** परस्पर प्रति प्रेमार्द्रता सौहार्द न प्राप ॥

यद्यपि तीर्थजलेनाभिषिक्तैस्तै दूरात् परस्परदर्शनात् हर्षाश्रुणा आत्मन स्निग्धत्व तु प्रदर्शित, तदपि तेषामभिमानेनोद्धत शिर प्रेमभावेन विनम्र नाभूदिति भाव ॥ इन्द्रवज्रा वृत्तम् ॥३७॥

**द्वयोरङ्कयोर्द्वौसुतौ रामकृष्णा-**
**वुभाभ्या कराभ्या विधाय व्रजेशा ॥**
**द्वयोश्चक्षुषोर्वाभिरासिच्यभक्ष्य-**
**स्पृहात्वेकवाचैव पप्रच्छ सा द्वि ॥३८॥**

**अन्वय**—व्रजेशा उभाभ्या कराभ्या द्वयो अङ्कयो द्वौ सुतौ रामकृष्णौ विधाय, द्वयो चक्षुषो वार्भि (तौ) आसिच्य। सा भक्ष्यस्पृहा तु एकवाचा एव द्वि पप्रच्छ ॥

**व्याख्या—द्वयोरिति ॥ व्रजेशा** व्रजस्य ईशो नन्द तस्य पत्नी। स्त्रिया टाप। व्रजेशा यशोदा **उभाभ्या कराभ्या** निज द्वाभ्या हस्ताभ्या तौ **द्वौ सुतौ** रामकृष्णौ गृहीत्वा, **द्वयोरङ्कयो**र्निजोत्सङ्गयो तौ **विधाय** स्थापयित्वा। तथा **द्वयो चक्षुषोर्वार्भिरासिच्य** निजनेत्रानन्दाश्रुभिस्तौ परिषिच्य। **सा भक्ष्यस्पृहा तु** भोजनाभिरुचि तु। **एकवाचैव द्वि पप्रच्छ** एकयैव वाचा तौ उभौ द्वि द्विवार पप्रच्छ। द्विस् इति अव्ययम्। द्वित्रिचतुर्भ्य सुच् इत्यनन सुच् प्रत्यय। भुजङ्गप्रयात वृत्तम् ॥३८॥

**औत्कण्ठ्याद्रुद्धकण्ठत्वमथ किमनृताचारसव्रीडभाव**
**सूक्तिश्रुत्या चिराय स्वनिलयगमनानुद्यमाशङ्किता वा ॥**
**सत्तीर्थाचर्य्यमौनव्रतपरवशता राजभावाढ्यता वा**
**नैवाविद्म पितृभ्या सह यदवचने कारण श्रीमतोस्तत् ॥३९॥**

**अन्वय** —श्रीमतो पितृभ्या सह यत् अवचने कारण तत् न एव आविद्म । औत्कण्ठयात् रुद्धकण्ठत्वम् ? अथ किम् अनृताचार-सव्रीडभाव ? वा, चिराय सूक्तिश्रुत्या स्वनिलयगमनानुद्यमा शङ्किता किम् ? वा, सत्तीर्थाचर्य्यमौनव्रतपरवशता किम् ? वा, राजभावाढ्यता किम ? तत् नवाविद्म ॥

**व्याख्या—औत्कण्ठ्यादिति** ॥ **श्रीमतो** रामकृष्णयो । **पितृभ्या सह** यशोदान दाभ्यासह । **यद्वचने कारणम्** प्रत्युत्तरदाने यद्धेतुवैशिष्ट्यमभवत, **तत् नैवाविद्म**, आङ् अभिव्याप्तौ । तत् कारण किञ्चिदपि वय न जानीम । अवचने यानि यानि कारणानि सम्भवन्ति तान्यत्र कविरुत्प्रेक्षते । तत्र प्रथम कारणम् **औत्कण्ठ्यात् रुद्धकण्ठत्वम्** उत्कण्ठा स्मृति, आध्यानम् । "स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे" इत्यमर । उत्कण्ठस्य भाव औत्कण्ठ्यम । तस्मात् 'गुणवचनादिभ्य ' इत्यनेन ष्यञ् । शैशवात् व्रजत्यागपर्यन्त यानि यानि आचरणानि आचरितानि तेषा स्मृतिबाहुल्यात्कण्ठावरोधोऽभवत् तस्मात् तौ रामकृष्णौ वक्तु नाशक्नुता किम् ? **अथ अनृताचारसव्रीड-भाव किम्** ? अनृतस्य असत्यस्य आचारो व्यवहार तस्मात् सव्रीडभाव सलज्जता, व्रजत्यागादद्यापिपर्यन्तम् आहूतोपि श्रीकृष्णो व्रज नोपगत स एव अनृताचार । असत्यव्यवहाराज्जनितलज्जाभावेन अथ कि तौ नावदताम् ? **वा** अथवा **चिराय** बहुकालात् **सूक्तिश्रुत्या** सूक्ते सुवचनस्य श्रुति श्रवण तया । द्वारकाया बन्दीजनै कृतयशोगानश्रवणेन **स्वनिलयगमनानुद्यमा शङ्किता किम्** ? स्वनिलय व्रज प्रति गमन, स्वनिलयगमन, तस्मिन् अनुद्यमा अनिच्छा असमर्थता वा शङ्किता किम् ? **वा** अथवा **सत्तीर्थाचर्य्यमौनव्रतपरवशता किम्** ? सत्तीर्थे आचर्य्यम्, आचरणीय यत् मौनव्रत तेन परवशता असमर्थता । अत्र कुरुक्षेत्रे कृतमौनव्रतस्य वशीभूतत्वेन कि तौ न बभाषाते ? **वा राजभावाढ्यता किम्** । राज्ञो भावो राजभावस्तस्य आढ्यता ईशिता राजभावप्रापणेनाऽभिमान इत्यर्थ । इदमपि अभाषणस्य कारण किम् ? एतेषा कारणाना पितृभ्या सह अभाषणे कि कारणमभवत्तद्वय न जानीम ॥ उत्प्रेक्षालङ्कार । स्रग्धरा छन्द ॥३९॥

**आसामद्यचिरेण दर्शनमथाप्यस्मिन्त्सुतीर्थे पुन**
**सम्बाधे मुनिबान्धवप्रवयसा तत्रापि सवेष्टने ॥**
**भामाद्याखिलयोषिता बत हत धिग्दैवमित्याकुल**
**सन्वाचा पथमेव साकमभजद्गोपीभिरीश श्रिय ॥४०॥**

**अन्वय** —अथ आसां दर्शनम् अद्य चिरेण, अपि अस्मिन् मुनिबान्धवप्रवयसां सम्बाधे सुतीर्थे, तत्रापि भामाद्याखिलयोषितां सवेष्टने। बत धिक् दैव हतम् इति आकुलः सन् श्रियः ईशः गोपीभिः साकं वाचा पथम् एव अभजत् ॥

**व्याख्या—आसामिति ॥ अथ आसां** गोपीनां **दर्शनं** समागमः, **अद्यचिरेण** अद्यात्रकुरुक्षेत्रे बहुकालादनन्तरं भवति। **अपि** स समागमोऽपि। **मुनिबान्धवप्रवयसां सम्बाधे सुतीर्थे** मुनयश्च बान्धवाश्च प्रवयसश्च ते मुनिबान्धवप्रवयसः तेषाम्। अत्र ऋषिमुनीनां बन्धुबान्धवानां प्रवृद्धानां गुरुजनानां सकाशे सुतीर्थे भवति। 'प्रवयाः स्थविरो वृद्धो' इत्यमरः। **तत्रापि भामाद्याखिलयोषितां सवेष्टने** भामा अस्ति आद्या यासां ताः भामाद्याः। भामाद्या अखिलयोषितः भामाद्याखिलयोषितः तासाम्। पुनश्च तासां गोपीनां समागमोऽत्र सत्यभामादिसमग्रराजस्त्रीवर्गाणां समक्षं भवति। न त्वन्यत्र एकान्तस्थाने इति भावः। **बत धिक् दैव हतम्** पश्य कथं दैवेन हतोस्मि, अभाग्य इत्यथः। **इत्याकुलः सन्** व्याकुलो भूत्वा। **श्रियः ईशः** स श्रीकृष्णो **गोपीभिः साकं वाचा पथमेवाभजत्** ताभिः सह वाग्विलासेनैव रेमे॥ एकान्तस्याभावात् नान्यप्रकारेणेत्यर्थः ॥ शार्दूलविक्रीडितम् ॥४०॥

समेत्य किल तत्र चास्य सुदृशो विवाहार्भटी-
र्जगुर्निजनिजाः शुभा द्रुपदजासतीसन्निधौ ॥
समाप्तपुनरात्तयाऽपि कथया वितृप्यद्गिरः
कवेरपि विगीतता भवति यस्य नाभीष्टया ॥४१॥

**अन्वय** —तत्र च अस्य सुदृशः द्रुपदजासतीसन्निधौ किल समेत्य, निजनिजाः शुभाः विवाहार्भटीः समाप्तपुनरात्तया अपि कथया अवितृप्यद्गिरः जगुः। यस्य कवेः अपि अभीष्टया विगीतता न भवति ॥

**व्याख्या—समेत्येति ॥ तत्र च** तस्मिन् कुरुक्षेत्रेऽपि। **अस्य** श्रीकृष्णस्य **सुदृशः** सुष्ठु दृशो यासां ताः सुदृशः सुनयनाः स्त्रियः। **द्रुपदजासतीसन्निधौ** राज्ञो द्रुपदात् जाता द्रुपदजा सा एव सती द्रुपदजासती तस्याः सन्निधिः सन्निकर्षः तस्मिन्। सतीद्रौपदीसमीपे। **समेत्य** आगत्य। **किल** निश्चयेन। **निजनिजाः** स्वाः स्वाः **शुभाः** शुभोदर्काम्। **विवाहार्भटीम्** विवाहरूपकन्याग्रहणवार्ताम्, परिणयजन्ययुद्धवार्तामित्यर्थः। वधूटी चिरण्टीवत् अर्भटी बालिका 'वयसि प्रथमे' तथा 'वयस्यचरम इति वाच्यम्' इत्यनेन स्त्रियां ङीप् अर्भटी युवती। विवाह

योग्या अर्भटी विवाहार्भटी ताम्। **समाप्तपुनराप्तया** पूर्वं समाप्ता पश्चात् पुनराप्ता तया। 'पूर्वकालैक सर्वजरत्पुराणनवकेवला समानाधिकरणेन' इति सूत्रेण पूर्वकालोऽपरकालेन समस्यते। पूर्ववार्त्ता समाप्य पुन प्रारब्धा तया कथया ता कथा समाप्य। **अवितृप्यद्भिर** न तृप्यन्ती गीर्यासा ता अवितृप्यद्भिर, स्वकया कथनेन स तोषम अप्राप्नुवत्य सत्य पुन कथन प्रारभमाणा **जगु** शशसु। **यस्य** वर्णन कृतवत **कवेरपि अभीष्टया** स्वेच्छापूर्वकेण **विगीतता न भवति** यशोगानपूर्त्तिर्न समाप्यते ॥

यथा श्रीकृष्णस्त्रीभि स्वस्वविवाहप्रसङ्गवर्णन स्वत एव विरामता न नीतम् अपितु अन्या कथा कथनायावसरो देयोऽभवत्। एवमेव कविरपि तत्प्रसङ्गवर्णन समाप्ति नेतुम् अन्यकथावसरप्रदानाय बाध्योऽभवत् न तु तेन स्वेच्छया कथाप्रसङ्गो विराम नीत इति भाव ॥ पृथ्वी छन्द ॥४१॥

**तत्र स्नातानुलिप्ता धृतनववसना वासुदेवाभिधाना**
**मूर्त्तिर्ब्रह्मण्यताया द्रुततरमृषिषु स्वागतायागतेषु ॥**
**कार कार विराम समपचितिपरा पादमध्यत्रिवार**
**सद्वृत्तस्रग्धरा सा सुगुणमृदुपदन्यासमग्रे व्यधत्त ॥४२॥**

**अन्वय** —तत्र स्नातानुलिप्ता, धृतनववसना, वासुदेवाभिधाना, ब्रह्मण्यताया मूर्त्ति, आगतेषु ऋषिषु द्रुततर स्वागताय समपचितिपरा, सद्वृत्तस्रग्धरा, सा पादमध्यत्रिवार विराम कार कार सुगुणमृदुपदन्यासम् अग्रे व्यधत्त ॥

**व्याख्या – तत्रेति** ॥ **तत्र** कुरुक्षेत्रे। **स्नातानुलिप्ता** पूर्वं स्नाता पश्चात् अनुलिप्ता, 'पूर्वकालैकसर्वजर पुराणनव ' इति सूत्रेण पूर्वकालोऽपरकालेन समस्यते। मज्जन पूर्वं विधाय पश्चात् चन्दनाद्यङ्गरागेण चर्चिता। **धृतनववसना** धृतानि नवानि वसनानि वस्त्राणि यया सा। **वासुदेवाभिधाना** वासुदेवोऽभिधान नाम यस्या सा। **ब्रह्मण्यताया मूर्त्ति** 'ब्रह्मणे हित ब्रह्मण्यम्'। 'प्राग्घिताद्यत्'। ब्रह्मण्यस्य भावो ब्रह्मण्यता। तल्न्त स्त्रियाम्। तस्या ब्रह्मण्यताया मूर्त्ति, ब्रह्मण प्रत्यक्ष प्रतिकृति, स्वय साक्षात् ब्रह्म एव इत्यर्थ। **आगतेषु ऋषिषु** तत्र प्राप्तेषु मुनिवरेषु। **द्रुततर स्वागताय** सभाजनाय, स्वागतसम्प्रश्नादिना आनन्दनाय। 'आनन्दन समाजने' इत्यमर। **समपचितिपरा** 'पूजा नमस्यापचिति' इत्यमर। अर्हणतत्परा। **सद्वृत्तस्रग्धरा** सद्वृत्तमेव स्रक् माला ता धरतीति धर, स्रज धरा स्रग्धरा। सद्वृत्तस्रग्धरा। 'धृञ् धारणे' इत्यस्मात् पचाद्यच्।

सच्चरित्रमाल्यधारिणी सा सद्वृत्तस्रग्धरा प्रत्यक्षस्रग्धरा छन्द इव। **पादमध्य त्रिवार** पादस्य मध्य पादमध्य, पादमध्ये त्रिवार पादमध्यत्रिवार **विराम कार कार**। आमीक्ष्ण्ये णमुल्। यथा स्रग्धरा छन्द प्रतिचरणमध्ये त्रिसङ्ख्याविशिष्टय तिरूपत्व भजति तद्वत् सा ब्रह्मण्यताया मूर्त्ति **सुगुणमृदुपदन्यासम् अग्रे व्यधत्त** प्रसादमाधुर्यगुणसम्भृत पादप्रक्षेपम् अकृत ॥

यथा स्रग्धरा वृत्ते प्रतिपाद त्रिवार यति। शब्दा अपि पदेषु मृदुकोमला प्रयुज्य ते। एवमेव भगवतोपि मूर्त्ति सभाजनाय आगतेषु ऋषिषु अग्रे त्रिवार त्रिसख्याविशिष्टविरामम् आभीक्ष्ण्येन पादमध्ये प्रतिपादन्यासेन कुर्वती तेषा पूजायै पादन्यास न्यधत्त इति भाव। स्रग्धरा वृत्तम् ॥४२॥

**यज्ञमज्ञजनवत्समाचरत्तत्र यज्ञफलदायिन पिता ॥**
**तस्य सूनुरपि तत्समोऽभवत्तीर्थपाद इह तीर्थमाययौ ॥४३॥**

**अन्वय** —तत्र यज्ञफलदायिन पिता अज्ञजनवत् यज्ञ समाचरत्। तस्य सूनुरपि तत्सम अभवत्। तीर्थपाद इह तीर्थम् आययौ ॥

**व्याख्या—यज्ञमिति ॥ तत्र** कुरुक्षेत्रे। **यज्ञफलदायिन पिता** यज्ञस्य फल दातु शीलम् अस्य यज्ञफलदायी। 'सुप्यजातौ ' इत्यनेन ताच्छील्ये 'णिनि '। तस्य यज्ञफलदायिनो हरे श्रीकृष्णस्य **पिता** वसुदेव.। **अज्ञजनवत्** अज्ञजनेन तुल्यम् अज्ञजनवत्। 'तेन तुल्य क्रिया चेद्वति ' इत्यनेन 'वत्'। बालिश इव **यज्ञ समाचरत्** अकरोत्। **तस्य सूनुरपि** वसुदेवस्य पुत्र श्रीकृष्णोपि। **तत्सम** बालिशोऽ**भवत्**। कथ? य स्वयमेव **तीर्थपाद इह तीर्थमाययौ** तीर्थ पादे यस्य स तीर्थपाद। यस्य चरण तीर्थरूपिणीं पवित्रगङ्गाभागीरथीमजनयत् स इह अज्ञमिवाचरन् तीर्थं सेवितुमाययौ ॥

**पक्षे** यस्य पिता तीर्थपाद स्वय सुतीर्थम्। अत स श्रीकृष्णो गृहस्थिततीर्थ त्यक्त्वा अत्र तीर्थसेवनार्थमागतवान्। यथा यज्ञफलदायिन' पिता भूत्वापि वसुदेवो यज्ञ कृतवान्, एवमेव श्रीकृष्णोपि वसुदेवसमत्व तीर्थसेवनार्थमागत्य लब्धवान्। पितृसम पुत्रोऽभवदित्यर्थ.। रथोद्धता वृत्तम् ॥४३॥

**रथाश्वगजवाहना अवितथागमा सर्वथा**
**यथागतमथागमन्विभुकथायथार्था पथा ॥**
**जना विदधतोऽन्यथा बत परा प्रपञ्चव्यथा**
**वृथा भ्रमविकल्पिता असुतरास्तरेयु कथम् ॥४४॥**

**अन्वय**—अथ सर्वथा अवितथागमा रथाश्वगजवाहना जना विभुकथायथार्था पथा यथागतम्, अगमन्। अन्यथा विदधत जना बत वृथा भ्रमविकल्पिता असुतरा परा प्रपञ्चव्यथा कथ तरेयु ?

**व्याख्या—रथाश्वगजवाहना इति॥ अथ** तीर्थस्नानकरणानन्तरम्। **सर्वथा** सर्वप्रकारेण। **अवितथागमा**। 'वितथ त्वनृत वच' इत्यमर। न वितथम अवितथम्। सत्य पूर्णमित्यर्थ। अवितथ सफलित पूर्ण आगम आगमन येषा ते अवितथागमा पूर्णकामा सफलितमनोरथा इत्यर्थ। **रथाश्वगजवाहना जना** रथाश्वगजा वाहनानि येषा ते। रथाश्वगजरूप स्वस्ववाहनम् अध्यासमाना अध्यारूढा नन्दादयो गोपा, यदुकुलजा, कुरुकुलमणयो ये तत्र स्नातुमागता जना। **विभुकथायथार्था** विभो कथा विभुकथा विभुकथया यथायथम् अर्थ प्रयोजन येषा ते। प्रभुचरितगानश्रवणमननादिभि प्राप्ताभीष्टसिद्धय सन्त। **पथा यथागतम्** येन पथा मार्गेण आगता। यथागतम् 'अव्यय विभक्तिसमीप' इत्यनेन अव्ययीभाव। येन मार्गेण यथा स्यात् तथा आगमन कृतम्। **अगमन्** तेनैव मार्गेण गमन चक्रु। अथ कविरुत्प्रेक्षते—**अन्यथा विदधतो जना** अन्यथा विरुद्ध विदधत कार्य कुर्वाणा जना। अवितथागमाना विरुद्ध कार्य कुर्वाणास्ते एव **वितथागमा।** वितथा असत्या। वितथा त्यक्ता आगमा वेदा यैस्ते वितथागमा त्यक्तवेदविहितमार्गा। पुन **विभुकथाऽयथार्था** विभुचरित्रश्रवण मननकीर्तनादिकर्म अकरणात् कल्मषध्वान्ता पापाचरणे रता। **बत!** खेदे। **वृथा भ्रमविकल्पिता** निष्कारणमेव भ्रान्तिविवर्तपीडिता। **असुतरा** सुष्ठु तरन्ति ते सुतरा न सुतरा असुतरा कष्टेन भवसागरात् पारगमनयोग्या। **परा** अत्यन्ता **प्रपञ्चव्यथा** प्रपञ्चस्य ससारस्य व्यथा पीडा ता। जमजरा विपत्तिरूपाणि ससारकष्टानि। **कथ तरेयु** एतादृश कुमार्गगामिन कथ पार गच्छेयु। न कथमपीति भाव। उत्प्रेक्षालङ्कार। पृथ्वीछद॥४४॥

**सूनुभ्या स्वनिदेशमञ्जलिगत सम्पादयद्भ्या मृतै-**
**रानीतैर्बलिसद्मतस्तनुभवै षड्भि सती योगिनी॥**
**अष्टाभिननु देवकी सुकृतिनी तन्मूर्त्तिभि सिद्धिभि**
**प्रेष्ठाभि समुपासिता सुखमयी बुध्या विदध्रे दिशम्॥४५॥**

**अन्वय**—स्वनिदेशम् अञ्जलिगत सम्पादयद्भ्या सूनुभ्या षड्भि तनुभवै मृतै, बलिसद्मत आनीतै प्रेष्ठाभि अष्टाभि तन्मूर्त्तिभि सिद्धिभि समुपासिता सुकृतिनी सती योगिनी देवकी ननु सुखमयी दिश विदध्रे॥

**व्याख्या**—देवक्या मृतपुत्राणा पुनरानयन वर्णयति ।। **सूनुभ्यामिति** ।। **स्वनिदेशम्** । कसान्मृतपुत्रानानेतु स्वाज्ञाम् । **अञ्जलिगत** करतलगतप्राप्तामिव **सम्पादयद्भ्या सूनुभ्या** सम्पादन कुर्वद्भ्या रामकृष्णाभ्याम् । **षड्भि तनुभवैर्मृतैर्बलिसद्मत आनीतै** षड्भिर्मृतै पुत्रै पातालादानीतै सह । **प्रेष्ठाभि** अतिशयेन प्रिया प्रेष्ठा ताभि । 'प्रियस्थिरस्फिरोरुबहुल ' इत्यनेन प्रियस्य प्रादेश इष्ठनि परे । **अष्टाभि तन्मूर्त्तिभि सिद्धिभि** तासा मूर्त्तिभि तन्मूर्त्तिभि । साक्षात् अणि[illegible] सिद्धिभिरिव पुत्रै । **समुपासिता** सेविता । **सती योगिनी** साध्वी तपस्विनी **सुकृतिनी** सुकन्या **देवकी** कृष्णमाता । **सुखमयी दिशाम्** आनन्दमयी सुस्थितिम् । **ननु बुध्या विदध्रे** निश्चयेन बुद्धिपूर्वक ज्ञात्वेव वृतवती ।।

स्वाज्ञा पुरस्कृत्य पूर्वमेव कसात् षड्भिमृते पुत्रै रामकृष्णाभ्या पाताल-लोकादानीतै सह साक्षात् अणिमादिभिरष्टाभि साकारै सिद्धिभिरिव अष्टाभि सत्पुत्रै सेव्यमाना सती देवकी [illegible]सौभाग्यत या सुखमयी स्थितिं प्राप इति भाव ।। शार्दूलविक्रीडित वृत्तम् ।।४५।।

**यत्प्राप्तिप्रतिबन्धदिष्टतिमिरोच्छेदाय पुण्याटवी–**
**राकूपारमटन्नटन्ननुदिन पुण्यप्रभासङ्गत ।।**
**तामैषीन्निजसूक्तिनिर्जितशुभद्राक्षा सुभद्राभिधा**
**भद्रातीतजनैरदृष्टचरणा जिष्णु प्रभास गत ।।४६।।**

**अन्वय**——यत्प्राप्तिप्रतिबन्धदिष्टतिमिरोच्छेदाय अनुदिन पुण्याटवी आकूपार च अटन् अटन् पुण्यप्रभासङ्गत जिष्णु प्रभास गत । निजसूक्तिनिर्जितशुभद्राक्षा, भद्रातीतजनै अदृष्टचरणा, ता, सुभद्राभिधाम् ऐषीत्

**व्याख्या**—सुभद्रार्जुनमीलनमाह । **यत्प्राप्तिरिति** ।। **यत्प्राप्तिप्रतिबन्धदिष्टतिमिरोच्छेदाय** यस्या प्राप्तिर्यत्प्राप्ति तस्या प्रतिबन्ध प्रतिष्टम्भ कार्यविघात स एव दिष्टतिमिर दैवान्धकार तस्य उच्छेदो नाश , अत्यय तस्मै । यल्लाभबन्धनकारकभाग्यान्धकारात्ययाय—यत्पुण्यस्य प्राप्त्यर्थं दैवस्यावष्टम्भ. त तीर्थाटनेन नाशयितु मित्यर्थ । **अनुदिन** दिनेदिने । **पुण्याटवी आकूपार च अटन् अटन्** पुण्यकाननानि पवित्रनदीश्च आ अकूपार च आसमुद्र च, पुण्यक्षेत्रादारभ्य आसमुद्र दिनात् दिन परिभ्रमन् । **पुण्यप्रभासङ्गत** पुण्यस्य प्रभा ता सङ्गतो जुष्ट पुण्यप्रभासङ्गत पुण्यसम्पादितो जिष्णु अर्जुन **प्रभास** प्रभासक्षेत्र **गत** प्राप्त । तत । **निजसूक्तिनिर्जितशुभद्राक्षाम्** निजसूक्त्या निर्जिता या शुभद्राक्षा ताम् ।

निज चटुलसम्भाषणेन विजितमधुरद्राक्षासदृशी लतारूपिणी सुभद्राभिधा कृष्णानुजा। **भद्रातीतजनैरदृष्टचरणाम्** भद्रात् अतीतैर्जनै अकुलीनपुरुषै अभद्रपुरुषै अदृष्ट चरणा, यस्या श्चरणौ अपि सज्जनपुरुषादन्यैर्न दृष्टौ एतादृशीं ता स अर्जुन **ऐषीत्** ऐच्छत्॥ शार्दूलविक्रीडितम् वृत्तम्॥४६॥

**सन्यासमन्यायपथेन कुर्वन्त्सन्यामधिस्वान्तमधत्त पार्थ ॥**
**कन्या तदन्या गुणरूपधन्या मन्यामहे नो समदर्श्यवन्या ॥४७॥**

**अन्वय** —अन्यायपथेन सन्यास कुवन् सन् पाथ याम् अधिस्वा-न्तम् अधत्त तदन्या कन्या गुणरूपधन्या अवन्या नो समदर्शि। मन्यामहे॥

**व्याख्या—सन्यासमिति॥ अन्यायपथेन सन्यास कुर्वन् सन्** बाह्याव डम्बरेण कौपीनादिधारणात् अनृताचारेण सर्वसङ्गपरित्यक्तपारिव्राजकत्व दर्शयन्। **पार्थ** अर्जुन। **या** श्रीकृष्णानुजा सुभद्राम। **अधिस्वान्तम् अधत्त** स्वान्ते इति अधिस्वान्तम्। अव्ययम। "स्वात हृन्मानस मन" इत्यमर। हृदि धृतवान्। मनसा याम् अकामयत इत्यर्थ.। **तदन्या कन्या** तस्या सुभद्राया अन्या तदन्या इतरा। **गुणरूपधन्या** गुणै रूपसौंदर्येण च धन्यत्व प्राप्ता कन्या **अवन्या** अनया पृथिव्या **नो समदर्शि** न दृष्टा। भूमण्डलोपरि रूपलावण्ययुक्ता अन्या कन्या नासीदिति भाव। अदर्शि दृशिर् प्रेक्षणे इत्यस्मात् कर्मणि लुङि चिण्॥ यमकालङ्कार अनुप्रासश्च। इन्द्रवज्रावृत्तम्॥४७॥

**क्षुभ्यत्कासारकान्तोपवनविलसिता द्वारका स प्रपन्न**
**सच्छ्रेयस्कारकाङ्घ्रेरनुमतिमुदितो मस्करीयन गरीयान् ॥**
**सत्कृत्याऽसौकदाचिद्गृहमथ हलिना भोजनायोपहूतो**
**दूतोऽनङ्गेन पूर्व वसतिमिव सती प्रषितो द्रष्टुमाभात् ॥४८॥**

**अन्वय** —सच्छ्रेयस्कारकाङ्घ्रे अनुमतिम् उदित स गरीयान् मस्करीयन् क्षुभ्यत्कासारकान्तोपवनविलसिता द्वारका प्रपन्न। अथ कदाचित् हलिना सत्कृत्य भोजनाय गृहम् उपहूत। अनङ्गेन पूर्व वसतिम् इव सती द्रष्टु प्रेषित दूत असो आ अभात्॥

**व्याख्या—क्षुभ्यदिति॥ सच्छ्रेयस्कारकाङ्घ्रे** सच्छ्रेयसा कारकौ अङ्घ्री यस्य स तस्य। 'श्रेयोनिश्रेयसामृतम्। मोक्षोपवर्गो' इत्यमर। यस्य चरणौ मोक्ष ददाति तस्य श्रीकृष्णस्य। **अनुमतिमुदित** सम्मतिं प्राप्त। तापसवेशेन

द्वारकागमनसमर्थन प्राप्त **स** पार्थ । **गरीयान्** गुरुतरान् बहुलमित्यर्थ । **मस्करीयन्** "भिक्षु परिव्राट् कर्मन्दीपाराशर्यपि मस्करी" इत्यमर । मस्करिण तापसम् आत्मन इच्छति मस्करीयति । 'सुप आत्मन क्यच्' इत्यनेन क्यच् । नामधातो शत्रन्तम् । मस्करीयन् [illegible]त्मान तापसवृत्ति दर्शयन् । **क्षुभ्यत्कासारकान्तोपवनविलसिता द्वारका प्रपन्न** क्षुभ्यद्भि कासारै कान्तोपवनैश्च विलसिता शोभिता ताम् । चलोर्मिजलाशयैर्मनोज्ञोपवनैश्च शोभिता द्वारकापुरीम् आगत । **अथ कदाचित्** तत्रागमनानन्तर कस्मिंश्चिद्दिने । **हलिना सत्कृत्य भोजनाय गृहम् उपहूत** बलरामेण आदरातिथ्य कृत्वा भोजनाय निजगृह निमन्त्रितोऽभवत् । **अनङ्गेन पूर्व वसतिमिव सतीं द्रष्टु प्रेषितो दूतोऽसौ आभात्** कदर्पेण पूर्वमेवावासकृताम् इव ता साध्वीं सुभद्रा द्रष्टु तेनैवानङ्गेन प्रेषित प्रेरितो दूतोऽसौ अर्जुन पूर्णतया शुशुभे ॥ स्रग्धरावृत्तम् ॥४८॥

**स्वल्प स्वागतशब्दमाप्तविहित प्राज्य मुकुन्दस्वसु**
**पादाम्भोजविभूषणोद्गतरव शृण्वन्नुदात्तश्रुतिम् ॥**
**सर्वान्नानि विमिश्रयन्हृतमना धूर्तो यतीन्द्रस्तया**
**मिष्टामिष्टविवेकशून्यमतिता सन्दशयन्नाबभौ ॥४९॥**

**अन्वय** --मुकुन्दस्वसु पादाम्भोजविभूषणोद्गतरव प्राज्यम् उदात्तश्रुति शृण्वन् । आप्तविहित स्वागतशब्द स्वल्प शृण्वन धूर्त यतीन्द्र तया हृतमना सर्वान्नानि विमिश्रयन् मिष्टामिष्टविवेकशून्यता सन्दर्शयन् आबभौ ॥

**व्याख्या—स्वल्पमिति ॥ मुकुन्दस्वसु** सुभद्राया । **पादाम्भोज विभूषणोद्गतरवम्** पादाम्भोजयो विभूषणादुद्गत रव शब्दस्तम्, चरणकमलयोर्नूपुरादिभूषणोत्थित शिञ्जितम् । **प्राज्य** बहुल पुन पुनरित्यर्थ । **उदात्तश्रुतिम्** उदात्ता सुस्पष्टमधुमधुरा श्रुति श्रवण यस्य स उदात्तश्रुति तम् । तस्या भूषणानाम् उदात्तनिनाद पुन पुन शृण्वन् । तथा **आप्तविहितम्** आप्तै स्वजनैर्विहित कृतस्तम् । **स्वागतशब्दम्** स्वागतमिति शब्दस्तम् । बलरामादिना सत्कारायोच्चारित शब्दम् । **स्वल्प शृण्वन्** स्वल्पम् अत्यल्पम् अश्रुतमिव शृण्वन् । **धूर्तो यतीन्द्र** स वञ्चकतापस । **तया हृतमना** तया सुभद्रयाकृष्टचेता । **सर्वान्नानि विमिश्रयन्** सकलानि भोज्यानि एकत्रीकृत्य । **मिष्टामिष्टविवेकशून्यता** मिष्टा मिष्टयो सदसद्विचारहीनता सन्दर्शयन् आबभौ ( आसीत् ) शुशुभे ॥

बलरामादिना तस्य स्वागतायोच्चारितान् शब्दान् अश्रुत्वैव, अश्रुतानिव दर्शयन्, सुभद्राया पदविन्यासात् पुन पुनरुत्थितेन उच्चतरश्रुतिमधुरेण नूपुरशब्दे-

नाकृष्टचेता स वञ्चकतापस पार्थ तया विमोहित सन् भोजनपदार्थेषु मिष्टामिष्टयो पृथक्त्व विस्मृत्य सर्वान्नानि एकत्रीकृत्य बुभुजे इति भाव ॥ शार्दूलविक्रीडित वृत्तम् ॥४९॥

**मुक्तासद्यतिताशयेन विलसच्छृङ्गारभावेक्षणा-**
**द्यात्राया रमणीयतोयधियुजा पार्थेन हसेन सा ॥**
**नीतोच्चैर्बलिपुष्टसैनिकगणा सस्फारिताक्षास्तदा**
**कोय कोयमिति प्रमत्तहृदया कोलाहलान्वव्रिरे ॥५०॥**

**अन्वय**--यात्राया विलसच्छृङ्गारभावेक्षणात् असद्यतिताशयेन, रमणीयतोयधियुजा हसेन पार्थेन, सा मुक्ता नीता तदा प्रमत्तहृदया बलिपुष्टसैनिकगणा सस्फारिताक्षा कोय कोयम् इति कोलाहलान् वव्रिरे ॥

**व्याख्या—मुक्तेति ॥ यात्राया** व्रज्यायाम्, अथकदाचिद्देवता पूजनोत्सवगमन-वेलायाम्। **विलसच्छृङ्गारभावेक्षणात्** विलसत मनस्युद्भूतस्य मनसिस्थितस्य या शृङ्गारस्य भाव कामविकार तस्य ईक्षणात्। मनसि सजातकामविकारत्वान **असद्यतिताशयेन** न सन् यति असद्यति असत्यतापस, असद्यतेर्भाव असद्यतिता। भावे तल् स्त्रियाम्। असद्यतिताया आशयोऽभिप्रायो हेतुयस्य स तेन। कामविकारेणोद्दीपितदृष्टिव्यापारात् मिथ्यातापसवेषधारिणा। **रमणीयतोयधियुजा** रन्तु योग्यो रमणीय। इति अनीयर् प्रत्यय। रमणीय सुखद स एव तोयधि-रुदधि तेन युक् रमणीयतोयधियुक् तन। विलाससमुद्रावगाहिना। **हसेन पार्थेन** पाथरूपहसेन। **सा मुक्ता नीता** सा मौक्तिकरत्नरूपिणी कृष्णानुजा सुभद्रा हृता हरण कृता, बलान्नीता इति भाव। **तदा प्रमत्तहृदया** उन्मत्ता। **बलिपुष्ट सैनिकगणा** बलिपुष्टा वायसा इव सैनिका बलिपुष्टसैनिका तेषा गणा समूहा। "काके तु करटारिष्ट बलिपुष्ट सकृत्प्रजा" इत्यमर। अथवा बलिपुष्टा परदत्तान्नेन पुष्टा आत्मीयताहीना सैनिकगणा। **सस्फारिताक्षा** विस्फारितनेत्रा। **कोय कोयम् इति कोलाहलान् वव्रिरे** काकवत् कर्तव्यरहित कोलाहल महाशब्द चक्रु ॥ शार्दूलविक्रीडितवृत्तम् ॥ ५० ॥

**पूर्वं मनोरथारूढ कमण्डलुधरश्च य**
**ईशाश्रयात्स एवाऽभूद्रथारूढो धनुर्धर ॥५१॥**

**अन्वय**—–य पूर्व मनोरथारूढ कमण्डलुधर श्च स एव ईशा-श्रयात् रथारूढ धनुर्धर अभूत् ॥

**व्याख्या—पूर्वमिति** ॥ **य** पार्थ **पूर्व** द्वारकागमनसमये। **मनोरथारूढ** कृताभिलाष. **कमण्डलुधर च** आसीत् य पूर्व कृष्णानुजाप्राप्त्यर्थ मनसि अभिलाषान् वितन्वन् अमत्ययतिवेषेण कौपीनकमण्डलुधर **स एवार्जुन ईशाश्रयात्** श्रीकृष्ण-प्रसादात् श्रीकृष्णस्य समर्थन प्राप्य **रथारूढोधनुर्धरश्चाभूत्** शस्त्रास्त्रै सज्जित स्यन्दने स्थितोऽभूत् ॥

य पार्थ केवल मनोराज्य कुर्वन् कमण्डलुसहायो द्वारकामगच्छत् सैव कृष्ण प्रासादात् शस्त्रास्त्रवाहनयुक्तो महारथी बभूव इति भाव अनुष्टुब्छन्द ।॥५१॥

**तदन्यदुर्वारमिम तनूज कन्याहृतेर्वारयताद्बिडौजा ॥**
**इतीवभीतायदुदेवदारका स्वाक्रोशशब्द दिवमेव निन्यु ।५२॥**

**अन्वय**—–कन्याहृते बिडौजा तदन्यदुर्वारम इम तनूज वारय-तात् इतीव भीता यदुदेवदारका स्वाक्रोशशब्द दिवम् एव निन्यु ॥

**व्याख्या—तदन्य इति** ॥ **कन्याहृते** कन्याया हृतिरपहरण तस्या। सुभद्राया अपहरणात्। **बिडौजा** इन्द्र। **तदन्यदुर्वारम्** तस्मात् बिडौजस अन्य तदन्य, तदन्यो दुर्वारोऽनिवार्यस्तम। य निवारयितु प्रतिरोद्धुमि द्रादन्योऽसमर्थ इत्यथ। **इम तनूज** पुत्र। **वारयतात्** निवारयतु। **इतीव भीता यदुदेवदारका स्वाक्रोशशब्द दिवमेवनिन्यु**। इन्द्र इम रभस पुत्र कन्या पहरणात् निवारयतु, एवमेवेच्छयाकिमु भीतियुक्ता यदुराजपुत्रा निजविलापरव स्वर्गमेव निन्यु। वारयतात् इति विध्यर्थे लोट्।

यदुकुमारका तारस्वरेण निजविलाप स्वर्ग नीत्वा कन्यापहरणात् स्वपुत्रम् अर्जुन निवारयितुम् इन्द्रमाह्वयन्तीव इति उत्प्रेक्षा ॥ उत्प्रेक्षालङ्कार। उपजाति वृत्तम् ॥५२॥

**रथाश्वनाग बत य विजेतु पुरश्चकाराद्भुतविक्रमो यत् ॥**
**तदेव त प्रीणयितु सदार रामोर्पयत्कृष्णगृहीतपाद ॥५३॥**

**अन्वय**—–अद्भुतविक्रम राम य विजेतु यत् रथाश्वनाग पुरश्चकार, कृष्णगृहीतपाद त प्रीणयितु तदेव सदारम् अर्पयत् ॥

**व्याख्या—रथाश्वनागमिति** ॥ **अद्भुतविक्रम** अद्भुत आश्चर्यकारको विक्रम शौर्य यस्य स। **रामो** बलराम। **य पार्थ विजेतु**। **यत् रथाश्व नागम्**। एतेषा द्वन्द्व एकवत्। रथाश्वगजाना सैन्य **पुरश्चकार** अग्रेप्रासारयत्

नगराद् बहिर्युद्धायाऽग्रे चकार इत्यर्थ । **कृष्णगृहीतपाद** कृष्णेन गृहीतौ पादौ यस्य स । श्रीकृष्णेन पादाभिवन्दनपूर्वक सम्प्रार्थित स एव बलराम **तम्** अर्जुन **प्रीणयितु** प्रसन्न कर्तुम् । **तदेव** तत् रथाश्वनागमेव यौतकरूपेण **सदारम् अर्पयत्** दारै सहित सदार सस्त्रीकम् । कन्या सुभद्रासहितम् अर्जुन अर्पयत् ।। उपजातिवृत्तम् ।।५३।।

**सच्चेत प्रतिहर्तृरूपमनघ स्वाङ्कस्थभूता पुरी–**
**मुन्मुच्यागत मात्मतुल्यमुनिभि सवीत मीश श्रिय ।।**
**ज्योतिष्टोमयुजाविवालयबहि शाला विशाला श्रित**
**सर्वस्व परिपूज्य भूसुरपती प्रत्यर्पयामासतु ।।५४।।**

**अन्वय** —ज्योतिष्टोमयुजौ इव भूसुरपती, आलयबहि विशाला शाला श्रित, सच्चेत प्रतिहर्तृरूपम्, अनघम्, स्वाङ्कस्थभूता पुरीम् उन्मुच्यागतम्, आत्मतुल्यमुनिभि सवीतम्, श्रिय ईश परिपूज्य, सर्वस्व प्रत्यर्पयामासतु ।।

**व्याख्या—सच्चेत इति ।।** श्रीकृष्णस्य मिथिलागमन तत्र बहुलाश्वश्रुतदेव-कृतसत्कार वर्णयति । **ज्योतिष्टोमयुजौ इव** ज्योतिष्टोम युञ्जाते इति ज्योतिष्टो-मयुजौ ज्योतिष्टोमाध्वरे प्रवृत्तौ इव । यथा ज्योतिष्टोमयज्ञकर्ता सर्वस्वदान करोति तद्वत् इमौ **भूसुरपती** भूसुरश्च भूपतिश्च भूसुरपती । 'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूय माण पद प्रत्येक सबध्यते' इति एकशेष । भूसुरो मिथिलाया श्रुतदेवनामा द्विजश्रेष्ठ । भूपतिर्बहुलाश्वनामा मिथिलाधीश । एतौ उभौ । **आलयबहिर्विशाला शाला स्थितम्** गृहाद्बहिर्विशालमन्दिरे स्थितम् । **सच्चेत प्रतिहर्तृरूपम्** सच्चेतस प्रतिहर्तृरूप यस्य स तम् । सन्हृदयाकर्षणकारिस्वरूपिणम् । **अनघ** निर्दोषम् । **स्वाङ्कस्थभूता पुरीम् उन्मुच्यागतम्** । स्वाङ्के तिष्ठति या सा स्वाङ्कस्था, 'सुपिस्थ' इत्यनेन क प्रत्यय । स्वाङ्कस्था भवतीति स्वाङ्कस्थभूता क्त प्रत्यय. । निजद्वारकापुरीं त्यक्त्वा मिथिलेष्वागतम् । **आत्मतुल्यमुनिभि** आत्मन तुल्यै-र्मुनिभि. । ब्रह्मणो भेदरहितैर्ब्रह्मीभूते ऋषिभि **सवीत** परिवेष्टितम् । एतादृश **श्रिय ईश** लक्ष्मीपतिं श्रीकृष्णम् । **परिपूज्य सवस्व प्रत्यर्पयामासतु** तस्मै श्रीकृष्णाय सर्वस्व ददतु । ज्योतिष्टोमयज्ञकर्ताराविव ।। शार्दूलविक्रीडित वृत्तम् ।।५४।।

**कोटितिग्मगु महाधिकदीप्त स्प्रष्टुमर्हति न यद्धि न मस्तु ।।**
**दुर्वच श्रुतिगिरापि कथ वा वस्तुनिस्तुलमद स्तुतमस्तु ।।५५।।**

**अन्वय** —मस्तु कोटितिग्मगु महाधिकदीप्त स्प्रष्टु हि न अर्हति, यत् श्रुतिगिरापि दुर्वच अद निस्तुल वस्तु कथ वा स्तुत न अस्तु ?॥

**व्याख्या—कोटितिग्मगु इति** ॥ **मस्तु** मण्डम्, दधिभवम् । सद्य उत्थित नवनीतमित्यर्थ । 'मण्ड दधिभव मस्तु ।' इत्यमर । **कोटितिग्मगु** कोटितिग्मा अतिप्रखरा गावो रश्मयो यस्य तत् कोटितिग्मगु । "स्वर्गेषुपशु-वाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रिया पुसि गौ" इत्यमर । कोटितिग्मगु इति 'गोस्त्रियोरुपसर्जनस्य' इत्यनेन 'गो' इति आकारस्य ह्रस्व उकार एव 'एच इग् ह्रस्वादेशे' इत्यनेन तथा 'स्थानेन्तरतम' इति स्थानसादृश्यात् । अव्ययी भावश्चेत्यनेन अव्ययत्व नपुसकत्व च । **महाधिकदीप्तम्** । 'आन्महत समानाधिकरणजातीययो' इत्यनेन महत आकारोऽन्तादेश । अत्यन्तपरितप्त-मित्यर्थ । **स्प्रष्टु न अर्हति** स्पर्श कर्तु न शक्नोति । यथा अनन्तरश्मिभि प्रदीप्त प्रखर सूर्यातप स्पर्श कर्तु सम्मुखे स्थातु सद्यउत्थित मृदुतम नवनीत **न शक्नोति** एवमेव तत् निर्गुण निराकार महद्वस्तु परब्रह्मापि स्तुतिभि स्प्रष्टु न अर्हति । पुन**र्यत्** ब्रह्म **श्रुतिगिरापि** श्रुतेर्गी श्रुतिगी तया । वेदवचनेनापि । **दुर्वच** दु खेन वक्तु शक्यम् । खल् प्रत्यय । कष्टेन वर्णनीयम् । यद्ब्रह्म वेदैरपि साकल्येन वर्णितु-मशक्यमित्यर्थ । **अद निस्तुल वस्तु** एतादृक् तत् निस्तुल नास्ति तुला उपमान सादृश्य यस्य तत्, निस्तुल वस्तु यस्य वस्तुन उपमान नास्ति, अनुपमेय तत् **कथ वा स्तुत न अस्तु** तन्महद्वस्तु यत् वेदैरपि 'नेति नेति' इति निषेधरूपेण वचनेन वर्णित तत् कथ स्तुत स्तवनीय न अस्तु । तत् ब्रह्म अवश्यमेव स्तवनीयमित्यर्थ ॥ स्वागता वृत्तम् ॥५५॥

**यस्योदग्रान्यदेवेतरवरपटुता सस्मरे न स्मरारे-**
**र्येनावश्य वृकेणापकृतिपरतया कल्मषाग्नौ हुतस्य ॥**
**कारुण्याच्छ्रीधरेण श्रितबटुतनुषा तस्य निश्वाससङ्घै**
**श्रान्त्युद्भूतैस्तदीयैर्हिमगिरिसदृश भस्म न स्मापि शिष्टम् ॥५६॥**

**अन्वय** —अपकृतिपरतया येन वृकेण, यस्य स्मरारे उदग्रान्य-देवेतरवरपटुता अवश्य न सस्मरे । कारुण्यात् श्रितबटुतनुषा श्रीधरेण, कल्मषाग्नौ हुतस्य तस्य हिमगिरिसदृश भस्म अपि श्रान्त्युद्भृतै तदीयै निश्वाससङ्घै न शिष्ट स्म ॥

**व्याख्या—यस्येति** ॥ वृकासुरस्य वधवर्णनम् । **अपकृतिपरतया** अपकृति-रपकार' तस्यामेव परता सलग्नता तया । अपकारध्येयदृष्टिना । **येन वृकेण**

वृकासुरेण भस्मासुरेण वा । **यस्य स्मरारे** शंकरस्य । **उदग्रान्यदेवेतरवर-पटुता** उदग्रा तीव्रा, अन्यदेवेभ्य इतरा अन्या, या वरपटुता वरदानकुशलता सा । वरदाने उदारता इत्यर्थ । **अवश्य न सस्मरे** आशुतोषत्वात् शङ्कर शीघ्र तुष्यति, अभिलषित च ददाति एतादृश कामशत्रो शङ्करस्य वरदानमाहात्म्य वृकासुरो न सस्मार, अपि तु वरदानसामर्थ्यात् तमेव भस्मीकर्तुमधावत् । तत **कारुण्यात्** शम्भोरुपरि दयाभावात् । **श्रितबटुतनुषा** श्रितो धृतो बटोर्द्विजापत्यस्य तनुर्येन स तेन । बटुरूपेण **श्रीधरेण । कल्मषाग्नौ हुतस्य** कल्मष पापमेवाग्नि तस्मिन् । दग्धस्य । स्वपापाग्निना दग्धस्य । भस्मीकरण प्राप्तवरदानहस्त स्वस्यैव शिरसि सधारणाय श्रीधरेण त वृक प्रचोदितत्वादिति भाव । **तस्य** वृकस्य **हिमगिरि-सदृश** हिमालयतुल्य बहुलमित्यर्थ । **भस्म अपि श्रात्युद्भूतै** श्रान्त्या क्लान्त्या उद्भूतैरुत्थितै । **तदीयै** तस्य वृकस्यैव भवै तदीयै । **निश्वास**सङ्घैर्निश्वास-फूत्कारै**र्न शिष्ट स्म** शेष नावर्तयत् । हरे कारुण्यात् तस्य क्लान्तस्य निश्वासवायुना तस्य भस्मीभूतस्य भस्मापि शेष न वर्तते स्म इत्यर्थ त नि शेष नाशयामास इति भाव ॥ स्रग्धरा वृत्तम् ॥५६॥

**अभ्यन्तरे स्वहृदयस्य विमर्दखिन्न**
**पादाम्बुजद्वयमवेक्ष्य विभुर्द्विजानाम् ॥**
**एक तयोर्भृगुपदाहतिकैतवेन**
**श्रीवत्सकौस्तुभरमासहचारि चक्रे ॥५७॥**

**अन्वय**—विभु द्विजाना पादाम्बुजद्वय स्वहृदयस्य अभ्यन्तरे विमर्दखिन्नम् अवेक्ष्य, भृगुपदाहतिकैतवेन तयो एक श्रीवत्सकौस्तुभ-रमासहचारि चक्रे ॥

**व्याख्या—अभ्यन्तर इति** ॥ ब्रह्मविष्णुमहेशाना मध्ये को वै महान् इति जिज्ञासयागतेन भृगुऋषिणा विष्णोर्वक्षसि कृत लत्ताप्रहारम् उत्प्रेक्षते कवि । **विभु** श्रीपति । **द्विजाना** श्रेष्ठमुनीना । **पादाम्बुजद्वय** पादौ एव अम्बुजद्वय तत्, चरणकमलद्वयम् । **स्वहृदयस्य अभ्यन्तरे** अन्तराले । **विमर्दखिन्नम् अवेक्ष्य** विमर्दात् परस्परसङ्घर्षात् खिन्न पीड्यमान, स्थलसङ्कोचात् खिन्नत्व प्राप्त निरीक्ष्य । **भृगुपदाहतिकैतवेन** भृगोर्भृगुऋषे पद भृगुपद् तेन आहति प्रहार । भृगुपदाहते कैतव व्याज तेन । भृगुऋषेर्लत्ताप्रहारस्य मिषेण । **तयोरेक** पद **श्रीवत्सकौस्तु-भरमासहचारि चक्रे** श्रीवत्स प्रभोर्हृदयलाछन, कौस्तुभ कौस्तुभमणि , रमा लक्ष्मी , एतै सह चरति यत् तत् श्रीवत्सकौस्तुभरमासहचारि तत् । चक्रे कृतवान् । एतयो सदृश निजहृदयोपरिस्थान तस्मै एकस्मै द्विजचरणाय भृगुपदाहतिव्याजेन दत्तवान् इति उत्प्रेक्षा ॥ वसन्ततिलका वृत्तम् ॥५७॥

**द्वार्वत्यामेककाले विहितशरमहापञ्जर कञ्जरम्य-**
**श्रीशार्ङ्घ्रिद्वन्द्वरीढाचरणपरतया विप्रपुत्रोपलब्धौ ॥**
**पार्थो ज्यार्थोद्यतोपि श्रितविभुचरणाम्भोजयुग्मो यदाभूत्**
**सर्वस्माद्भूमरूप परमपि स तदा दृष्टवान्पूर्णकाम ॥५८॥**

**अन्वय** —द्वार्वत्याम् एककाले विप्रपुत्रोपलब्धौ विहितशरमहा-पञ्जर कञ्जरम्यश्रीशार्ङ्घ्रिद्वन्द्वरीढाचरणपरतया पार्थ ज्यार्थोद्य-तोपि (अपूर्णकाम इति शेष ) यदा श्रितविभुचरणाम्भोजयुग्म तदा स पूर्णकाम अभूत् । अपि सर्वस्मात् पर भूमरूप दृष्टवान् ॥

**व्याख्या—द्वार्वत्यामिति** ॥ द्विजपुत्रस्य मरणाद्रक्षणे अर्जुनस्य असमर्थता तथा मृतपुत्रस्य प्रापण च वर्णयति । **द्वार्वत्यामेककाले** एकदा द्वारकायाम् । **विप्र-पुत्रोपलब्धौ** विप्रपुत्रस्य उपलब्धि प्रापण तस्मिन्, द्विजपुत्रस्य मरणाद्रक्षणे । **विहितशरमहापञ्जर** विहित कृत शराणा बाणाना महापञ्जर विशाल कठिन च पञ्जर येन स । द्विजपुत्ररक्षणाय नानास्त्रयोजितै शरैर्निरुद्धसूतिकागार शरपञ्जर येन निर्मितम् इत्यर्थ । एतादृश स पार्थ । **कञ्जरम्यश्रीशार्ङ्घ्रिद्वन्द्व-रीढाचरणपरतया**—कञ्ज कमलम् इव रम्यम् । कञ्जरम्यस्य श्रीशार्ङ्घ्रिद्वन्द्वस्य, प्रभोश्चरणयुगलस्य, रीढा अवज्ञा अनादर, तस्या आचरणे परता ( भावे तल् स्त्रियाम्) सलग्नता तया । 'रीढावमाननावज्ञा' इत्यमर । श्रीकृष्णचरण-विमुखस्वाभिमानदर्पिताचरणेन । **ज्यार्थोद्यतोऽपि** ज्याया प्रत्यञ्चाया अर्थ प्रयोजन तस्मिन् उद्यत उद्युक्तो ज्यार्थोद्यत, शस्त्रास्त्रै शरसधाने उद्युक्तोपि अपूर्ण कामोऽभूत् । विप्रपुत्रस्य प्राणरक्षणे असमर्थोऽभूत् इत्यर्थ । **यदा श्रितविभुचरणा-म्भोजयुग्म** श्रित चरणाम्भोजयुग्म येन स । यदा प्रभुचरणयुगलस्य शरण गत **तदा स पूर्णकाम अभूत्** । पूर्ण कामो यस्य स पूर्णकाम पूर्णमनोरथ. । मृत विप्रपुत्रप्रापणे सफलोऽभूत् । **अपि** न केवलमिदम् अन्यदपि यत् । **सर्वस्मात् पर भूमरूप दृष्टवान्** सर्वदेवताया अपि श्रेष्ठ महतो महीयास रूप भूमानम अखण्डब्रह्माण्डमय विश्वरूप च सोऽर्जुनो ददर्श ॥ स्रग्धरावृत्तम् ॥५८॥

**सापेक्ष भोग्यजात सकलमपि निराकुर्वतीना परेशे**
**ससक्तानां श्रुतीनामथ च मृगदृशा भीष्मकन्याग्रिमाणाम् ॥**
**साम्येप्येको विशेषो यदिह शुकमुने सस्तुति पूर्विकाणा**
**विद्वन्मान्या परासा पुनरनुवदति स्मावमान्या गिरोपि ॥५९॥**

**अन्वय**—सकलमपि सापेक्ष भोग्यजात निराकुर्वतीना परेशे ससक्ताना श्रुतीनाम् । अथ च सकलमपि सापेक्ष भोग्यजात परेश ससक्ताना भीष्मकन्याग्रिमाणा सुदृशा साम्येपि, इह एक विशेष , यत् पूर्विकाणा गिर विद्वन्मान्या , परासा गिर अवमान्या अपि, शुक-मुने सस्तुति पुन अनुवदति स्म ।।

**व्याख्या—सापेक्षमिति ॥ सकलमपि सापेक्ष भोग्यजातम्** यद्यत् सुखात्मकम् उपभोग्यवस्तु तत् सर्व सापेक्षम् इच्छाभूतमपि । **निराकुर्वतीना** निराकरण निरसनम् । 'परमात्मा इति न इति न' इति सर्वस्मादेव विषयात् परमात्मनोऽलिप्तत्व निदर्शयन्तीना **श्रुतीना** वेदानामपि । परमात्मनो निर्गुणत्वादिति भाव । **परेशे ससक्तानाम्** यद्यपि परमात्मनो निर्गुणस्वरूपेण वर्णन कुर्वतीना श्रुतीना तदपि **परेशे** परमात्मनि **ससक्ताना** । ससक्तम् अव्यवहित, लिप्तत्वम् । परमात्मन्याश्रिताना वेदानाम् । **अथ च परेशे ससक्ताना भीष्मकन्याग्रिमाणा सुदृशाम्** परेशे परमात्मनि श्रीकृष्णे लिप्ताना भक्तिमार्गेण सेवामाचरन्तीना रुक्मिणीप्रमुखाना स्त्रीणा सर्व भोग्यजात वस्तु सुखमयम् इच्छाभूतम् । सगुणोपासन-त्वात् । **साम्ये अपि** अस्मिन् वेदाना कृष्णस्त्रीणा च ब्रह्मण श्रीकृष्णस्य निर्गुण-सगुणोपासनाया साम्ये सादृश्येऽपि । **इह एको विशेष** एक महत्वम्, **यत् पूर्विकाणा** श्रुतीना **गिर** कथन **विद्वन्मान्या** , वेदाना कथन विद्वद्भिरनुमोदितम् । पर च **परासा गिरोऽवमान्या अपि** कृष्णस्त्रीणा कथन विद्वद्भिरवमानित तदपि **शुकमुने सस्तुति पुनरनुवदति स्म** कृष्णस्त्रीणा सगुणोपासनायुक्तो भक्तियोग शुकाचार्येण पुन पुन कथितोऽनुमोदित इत्यर्थ ।। स्रग्धरा छन्द ।।५९।।

**भङ्गादध्वरकर्मणो वनशुचे पानाद्गुरोरात्मजा–**
**दानाद्दैत्यवधाद्व्रतिस्वजनकाहृत्याश्च वात्याहते ।।**
**भृत्यार्त्या युधि मोहनान्नवसुहृद्वत्सानुकृत्या पुरा**
**बन्धु शेषमृते जयत्युपदिशामाशापतीन्मापति ।।६०।।**

**अन्वय**—पुरा मापति (बन्धु शेषम् ऋते उपदिशाम् आशा-पतीन् जयति) (यथा) १ अध्वरकर्मण भङ्गात् । २ वनशुचे पानात् । ३ गुरो आत्मजादानात् । ४ दैत्यवधात् । ५ व्रति-स्वजनकाहृत्या । ६ वात्याहते । ७ भृत्यार्त्या । ८ युधि मोहनात् । ९ नवसुहृद्वत्सानुकृत्या , बन्धु शेषम् ऋते उपदिशाम् आशापतीन् जयति ।।

व्याख्या—**भङ्गादिति ॥ पुरा मापतिः** लक्ष्मीपतिः श्रीकृष्णो भ्रातरं बलरामं अजित्वा अन्यं नवदिक्पालान् पूर्वमेव जयति स्म । तद्यथा —

१ **अध्वरकर्मणो भङ्गात्** इन्द्रयागध्वंसाद् गोवर्धनग्रहणेन प्राचीपतिम् इन्द्रं जयति स्म ।

२ **वनशुचेः** दावाग्नेः **पानात्** आग्नेयीपतिम् अग्निं जयति स्म ।

३ **गुरोरात्मजादानात्** गुरोः सन्दीपनस्य मृतपुत्रं यमादपहरणादवाचीपतिं यमं जयति स्म ।

४ **दैत्यवधात्** नैर्ऋतवधात्, राक्षसवधात्, नैर्ऋतीपतिं नैर्ऋतं जयति स्म ।

५ **व्रतिस्वजनकाहृत्या** व्रतमस्ति यस्य स व्रती । व्रती स्वजनको व्रतिस्वजनकः तस्य आहृतिः प्रापणं तस्या । व्रतेनन्दस्य वरुणालयाद्विमुक्त्या प्रतीचीपतिं वरुणं जयति स्म ।

६ **वात्याहतेः** वात्याया हतिर्हननं तस्याः । वात्याया मरुतः तृणभ्रमस्य वधाद् वायवीपतिं वायुं जयति स्म ।

७ **भृत्यार्त्याः** भृत्यस्य आर्तिर्दैन्यं तस्याः । सेवकजनस्य दैन्यापहरणात् उदीचिपतिं कुबेरं जयति स्म । याचकेभ्यः प्रचुरधनदानेन धनदं जयति इति भावः ।

८ **युधि मोहनात्** श्रीकृष्णबाणासुरयुद्धे मोहनास्त्रप्रक्षेपणेन शङ्करस्य विजृम्भणाद् ईशानीपतिं ईश्वरं शङ्करं जयति स्म ।

९ **नवसुहृद्वत्सानुकृत्या** नव नवीन सुहृदो वत्सस्य अनुकृतिः तस्याः । नवीन सुहृद्गोवत्ससृजनात् उर्ध्वाधिपतिं ब्रह्माणं जयति स्म ।

किन्तु अधराधिपतिम् अनन्तं **शेषं ऋते** विना । बन्धुभावात् शेषं नागाधिपतिं बलरामं न जयति स्म । ज्येष्ठभ्रातुर्मानं रक्षति स्मेति भावः ॥ शार्दूलविक्रीडितं वृत्तम् ॥६०॥

**श्रीशुकाभ्युदितभागवताख्यं पक्वमन्नमतिमिष्टरसाढ्यम् ॥**
**स्वाददा तु रसिकस्य जिघृक्षोर्व्यञ्जनाकृतिरियं कृतिरास्ताम् ॥६१॥**

**अन्वयः**—श्रीशुकाभ्युदितभागवताख्यम् अतिमिष्टरसाढ्यं पक्वमन्नं रसिकस्य जिघृक्षोः इयं कृतिः व्यञ्जनाकृतिः स्वाददा आस्ताम् ॥

व्याख्या—**श्रीशुकाभ्युदितमिति ॥ श्रीशुकाभ्युदितभागवताख्यं** श्रीशुकेनाभ्युदितमाख्यातं भागवतम् इति आख्या नाम यस्य तत् । श्रीशुकाचार्येणाख्यातमिदं भागवतनामग्रन्थात्मकं हरिचरित्रम् । **अतिमिष्टरसाढ्यम्** अतिमिष्टं च तत् रसाढ्यं च अतिमिष्टरसाढ्यं **पक्वमन्नम्** । पक्वान्नमिवातिस्वादुरसैः परिपूर्णम् ।

